### आनन्दतीर्त्थभगवत्पादरचितः

# खण्डार्त्थनिर्ण्णयः

### गोविन्दपण्डिताचार्य्यरचितया खण्डार्त्थचन्द्रिकाख्यया व्याख्यया सहितः



आनन्दतीर्थभगवत्पादरचितः

# खण्डार्थनिर्णयः

गोविन्दपण्डिताचार्य्यरचितया

खण्डार्थचन्द्रिकाख्यया

व्याख्यया सहितः



संशोधकः सम्पादकश्च

विद्यावाचस्पतिः विद्यारत्नाकरः

डा. बन्नञ्जे गोविन्दपण्डिताचार्य्यः

पद्मश्रीपदभूषितः



द्वैपायनप्रतिष्ठानम्

बेङ्गळूरु

2020

**KHAṆḌĀRTHANIRṆAYA by Ānandatīrtha Bhagavatpāda**
**KHAṆḌĀRTHA-CANDRIKĀ by Govindapaṇḍitācārya.**

Critically edited by **Dr. Bannañje Govindācārya.**



Published By : **Dwaipāyana-Pratiṣṭhāna**
\# 523, 2nd Main, 2nd Cross,
New No. 52, Malleshwaram, Bengaluru-560003
9945271641 **dwaipayanapratishthana@gmail.com**

First Edition : 500 Copies (2020)

Pages : 256

Price : ₹500/-
$50 (Outside India)

Illustration : **Ganjeefa Raghupati Bhat**

Cover Design : **K. M. Sheshagiri**

Typeset : **Kaddi Badarinarayanachar**
Poornaprajna Vidyapeetha,
bnkaddi@gmail.com

Printers : **Anirudh Creation**
\#144, 6th main, Gururaja Layout, Bengaluru-28.
Cell : 9880077876
srikant.nsil@gmail.com



कृष्णं वन्दे जगद्गुरुम्

# आशीर्वादं प्रशास्महे

स्मर्तव्या इमे येऽस्मिन् महाकर्मणि नः सहाकुर्वन् सप्तर्षयइव सप्त । साभिमानमभिनन्दाम एतान् ।

१. गणकयन्त्रे लिप्यङ्कनकर्मणि श्रीमध्वसेवेत्यनिशं निस्पृहतया कृतपरिश्रमः कृती श्रीलः कड्डी बदरीनारायणाचार्यः ।

मुद्राराक्षसविद्रावणकर्मणि यथाशक्ति दत्तहस्तावलम्बाः पुनरेते त्रयः । अत्रय इवा-नसूयाभूषिताः–

२. विद्वान् श्रीमान् तोटन्तिल्लायो विजयसिंहः ।

३. ” ” हेच्. बि.अनिलः ।

४. ” ” बि.एस्. हयवदनः ।

५. मुखपत्रस्यापूर्वचित्रदानेन पुस्तकस्याऽकर्षकतामुच्चकर्ष गञ्जीफाकलावित् श्रीलः रघुपतिभट्टः ।

६. मुखपत्रविन्यासकर्मणि दर्शितकौशलश्चित्रकलानिपुणः श्रीलः के. एम्. शेषगिरिः ।

७. मुद्रणकर्मणि सश्रद्धं कृतपरिश्रमः ‘अनिरुद्ध क्रियेषन्’व्यवस्थापकः श्रीलः श्रीकान्तकल्याणी ।

सर्वेषामेतेषामाशीर्वादपरम्परां प्रशास्महे । भगवान् बादरायणमुनिः, भगवत्पादो मध्वमुनिश्च सर्वेषामेतेषां सर्वाभीष्टदातारौ भूयास्तामिति शम् ॥

–डा. बन्नञ्जे गोविन्दाचार्य्यः

# खण्डार्त्थनिर्ण्णये समुद्धृताः प्रमाणग्रन्थाः

१. आथर्वणोपनिषत्
२. आश्वलायनश्रौतसूत्रम्
३. ऋग्वेदः
४. ऋक्संहिता
५. ऐतरेयब्राह्मणम्
६. ऐतरेयारण्यकम्
७. कर्म्मविवेकः
८. काठकोपनिषत्
९. छन्दोगोपनिषत्
१०. तैत्तिरीयारण्यकम्
११. पाद्मपुराणम्
१२. पुरुषसूक्तम् (बह्वृचानाम्)
१३. ,, (याजुषाणाम्)
१४. ,, (छन्दोगानाम्)
१५. ,, (आथर्वणानाम्)
१६. पुरुषोत्तमसंहिता
१७. प्रकाशसंहिता
१८. प्रवृत्तम्
१९. प्राचीनं व्याकरणसूत्रम्
२०. बृहदारण्यकम्
२१. बृहदारण्यकोपनिषत्
२२. ब्रह्मतर्कः
२३. ब्रह्मसूत्रम्
२४. भगवद्गीता
२५. भागवतम्
२६. भारतम्
२७. महानाम्नी
२८. महैतरेयोपनिषत्
२९. मान्यसंहिता
३०. वराहपुराणम्
३१. वैहायससंहिता
३२. व्याससंहिता
३३. व्यासस्मृतिः
३४. शब्दतत्वम्
३५. शब्दनिर्ण्णयः
३६. श्वेताश्वतरोपनिषत्
३७. सौकरायणश्रुतिः
३८. स्कान्दपुराणम्
३९. स्वाध्यायतत्वम्
४०. काश्चन अज्ञाताः श्रुतयः

—०—

# विषयानुक्रमणी



—०—

# पुरोवाकः

शङ्किषीरन्नपि केचिदेवम्– ननु जागर्ति जयतीर्थमुनिरचिता टीका सर्वैरादृता । किं पुनरनेन मुधा धाष्ट्येन, यत् प्रासोष्ट नूत्नमिदं व्याख्यानं खण्डार्थचन्द्रिका नाम? किन्निदानमिदमपूर्वं साहसमिति? सन्ति नैकानि निदानानि । नन्ववधीयताम्, तानीमानि कानिचनारुचिबीजानि प्राचीनटीकायाम्–

१. प्रबन्धा प्रबन्धस्य नाम करोति । पिता पुत्रस्य । प्रबन्ध्रा चास्य प्रबन्धस्य **'खण्डार्थनिर्णयः'** इति बह्वर्थमन्वर्थं च नाम कृतम् । नह्यन्यस्य कस्यापि नामकरणाधिकारः । अथापि कर्मनिर्णय इति नूतनं निष्कारणं नामकरणम् ॥

२. मूलकोशानवलम्बः । तदिदं गङ्गामपहाय तत्सङ्गिन्यां कुनद्यामवगाहनम् । तेनाशुद्धपाठानां पुरस्करणम् । प्रहाणं चापूर्वार्थानाम् । तद् यथा– **'एतावानस्य महिमा ततो ज्यायांश्च पूरुषः'** इत्यनेकाकूतगर्भितं मूलपाठं परित्यज्य मुधा बाह्वृच्यपाठोऽन्वस्रियत । यथा वा **'कविर्यः पुत्रः स इमा चिकेत'** इति प्रायपाठानुगुणं याजुषं मूलपाठमपहाय **'ईमाचिकेत'** इति बाह्वृच्यपाठ एवावावलम्ब्यत । **'इति त्रेधा विभागः स्यात्'** इत्यृक्संहिताया मूलपाठमगणयित्वा **'इति द्वेधा विभागः स्यात्'** इत्यशुद्धपाठ एवाऽदद्र इति । अन्यथा त्रेधापदस्य पृथक् कृत्यमकथयिष्यत् । तदकथनेन मूलाशय एवाभज्यत ॥

३. वैदिकपदानां निर्वचनेषु निरुक्तं प्रथमं स्थानमध्यास्ते । तदनुगुणतया पाणिनिरपि क्वचिदिष्यते । नहि भगवत्पादः पाणिनीयामन्ततः प्रकृतिप्रत्ययभङ्गीमङ्गीकरोति । नतरां निरुक्तकृद् यास्कः । कुतस्तरां भगवान् निरुक्तकृद् बादरायणः । अथापि जयतीर्थमुनिप्रभृतयो निरुक्तं न स्पृशन्त्येव । केवलं पाणिनीयप्रक्रियां बलादाकृष्य पदरूपं निष्पादयन्ति । अन्यः पन्थाः पाणिनीयानाम् । अन्यो नैरुक्तानाम् । वैयाकरणा निरुक्तमभ्युपयन्ति । न नैरुक्तो भगवत्पादः

पाणिनीयप्रक्रियाम् । शक्नोतीति शक्र इति पाणिनीयाः । शक्तिरतिरूपत्वाच्छक्र इति भगवत्पादः । न तत्र पाणिनीयस्य नासान्यासोऽपेक्षितः ॥

४. भगवत्पादमुखादधिगतखण्डार्थः श्रीनरहरितीर्थः । मध्वदेवस्य साक्षाच्छिष्यस्तेनैव समधिगत-समस्ततत्ववादसारः । जयतीर्थमुनेः पूर्वगुरुश्च । तेन तद्व्याख्यानदूषणप्रयत्नश्च न रोचते तत्वजिज्ञासुभ्यः । नहि ग्रन्थकृदन्तेवासिना कृतं व्याख्यानमनुचितमिति पाश्चात्यं व्याख्यानं समुचितमिति च साम्प्रतं वदितुम् । बुद्धविनेयानामिव श्रीमध्वप्रियशिष्यस्य गुरुहृदयानधिगम-मूलोऽयं भगवान् भ्रम इति च न नूनं सम्प्रतिविदो वदेयुः ॥

५. अन्यच्चेदं मुख्यं पञ्चमं कारणं शिष्यवश्यत्वं नाम । बहवो मम शिष्या मामुपेत्य विज्ञापया-मासुः– कर्मकाण्डेष्वनधीतिनां दुर्गमतमोऽयं खण्डार्थनिर्णयः । प्राचीनटीकाश्च मितभाषितया न स्फुटं मूलबोधाय प्रभवन्ति । तद् विस्तृतम्, उपसृष्टमन्त्राणामर्थं निर्वर्णयत्, किञ्चिद् व्याख्यानमपेक्षितम् । येन मन्दानामपि बोधः सुकरः स्यात् । तत्रभवद्भिस्तत् करणीयमित्यैक-कण्ठ्यं नः सर्वेषाम्' इति । तत्फलमिदं साहसं यत् खण्डार्थचन्द्रिकाप्रणयनम् ॥

## प्रातः स्मरणीया गुरुपरम्परा

अन्ये मन्यन्ते– प्रबन्धाऽयमसूयति जयतीर्थमुनय इति । तन्मूलोऽयमुपवाद इति । नैतद् युक्तम् । प्रभूतयेर्ष्ययाऽन्तःसम्भृतमन्यूनां क्षुद्रजन्यूनां स्युरीदृशा अनल्पा जल्पाः । नमो महद्भ्यः पूर्वेभ्यः । महतां श्रीचरणयोरुपरि शिरो निपात्य विनम्रमिदं निवेद्यते– गौरवगर्भोऽयमभिप्रायभेद इति । यथा नरहरि-तीर्थमागूर्य जयतीर्थमुनेः । पूर्वाचार्यपतितमेव पन्थानं वयमप्यन्वपताम । सैव नः स्फूर्तिः ॥

तथाहि प्रत्यहं प्रगे ब्राह्मे मुहूर्ते प्रबन्धाऽनेनोपस्थीयमाना पूर्वाचार्यपरम्परा–

**'ब्रह्मान्ता गुरवः साक्षादिष्टं दैवं श्रियः पतिः ।**
**'आचार्याः श्रीमदाचार्याः सन्तु जन्मनिजन्मनि ॥**

('सन्तु मे जन्मजन्मनि' इत्यनधीतव्याकरणानां भ्रान्तः पाठः ।)

**'वंशस्यादीन् सनकादीनुपासे दुर्वाससं परतीर्थाख्यभिक्षुम् ।**
**'सत्यप्रज्ञं प्राज्ञतीर्थं च पश्चात्पश्चाच्छिष्यानच्युतप्रज्ञमध्वौ' ॥**

(पलिमारुमठीयप्रतनकोशे लब्धः साधुः पाठः ।)

'वन्दे हृषीकेशमथो नृसिंहं जनार्दनं चिन्तय धीरुपेन्द्रम् ।
'श्रीवामनं संस्मर विष्णुमेमि श्रीराममश्रेऽहमधोक्षजं च' ॥

(अत्र नृसिंह इति नरहरितीर्थ उच्यते । तथा हि भावप्रकाशिकायाम् । पश्चात् स पद्मनाभतीर्थशिष्यतामाप्य नरहरितीर्थ इत्येव पप्रथे ।)

'कृपालवः पङ्कजनाभतीर्थाः कृपा-लवः स्यान्मयि नित्यमेषाम् ।

'नरहरितीर्थमुनये नमः' ।

'राजराजेश्वरयतये नमः' ।

'अञ्जनासूनुसान्निध्याद् विजयेन विराजितम् ।
'अजितप्रीतिजनकं भजेऽहं विजयध्वजम्' ॥

'मिथ्यासिद्धान्तदुर्ध्वान्तविध्वंसनविचक्षणः ।
'जयतीर्थाख्यतरणिर्भासतां नो हृदम्बरे' ॥

'श्रीपादराजगुरवेऽस्तु नमः शुभाय' ।

'अर्थिकल्पितकल्पोऽयं प्रत्यर्थिगजकेसरी ।
'व्यासतीर्थगुरुर्भूयादस्मदिष्टार्थसिद्धये' ॥

'तपोविद्याविरक्त्यादिसद्गुणौघाकरानहम् ।
'वादिराजगुरून् वन्दे हयग्रीवदयाश्रयान्' ॥

'दुर्वादिध्वान्तरवये सज्जनेन्दीवरेन्दवे ।
'श्रीराघवेन्द्रगुरवे नमः कारुण्यसिन्धवे' ॥

एवं प्रत्यहमभिष्टुत्य पूज्यमानेभ्यो गुरुकल्पेभ्यः किं शक्यमीर्ष्यितुम्? तस्मात् परशुकर्तुः सत्यनाथतीर्थस्येव प्रबन्धुरस्यापि सगौरवं स्वाभिप्रायव्यञ्जनमेवैतत् । तैरनुक्तं किञ्चिदत्रोक्तमित्येतावता न तेषां महत्त्वमपकृष्यते ॥

खलु कुशङ्किनां शङ्कानिर्मूलनाय प्रयत्य । प्रकृतमनुसरामः ॥

# इदमुपक्रमं शुद्धपाठः

अस्य प्रकाशनस्यायमुत्कर्षातिशयः– यत् इदमुपक्रमं मूलकोशावलम्बी शुद्धपाठः सटीकः प्रकाश्यत इति । अत्रापि केचित् भ्रम्यासुः– मूलपाठो नाम हृषीकेशतीर्थलिखिते कोशे समुपलब्धः पाठ इति । स यथा– नरहरितीर्थकृतव्याख्याभूषिते श्रीगीताभाष्ये तत्रतत्र टिप्पण्यां हृ.ती.पाठ इत्युदलेखि । हृ.तीर्थलिखितः गीताभाष्यमूलपाठः न क्वाप्युपलब्धः । तत् कथं तद्ग्रन्थसम्पादको बभ्राम? कारणं स्फुटम् । मूलपाठावलम्बेन सर्वमूलग्रन्थाः पुरा किल माध्वमहामण्डलेन प्रकाशिताः । तत्र गीताभाष्यस्य हृ.ती.पाठानुपलम्भात्, सम्प्रत्युपलब्धेषु कश्चन प्रतनतमं कोशमादृत्य भाष्यपाठो मुद्रितः ॥

न्यवेद्यत च तत् तत्रैव– 'हृ.ती.लिखिते मूलकोशे नैतदुपलब्धम्' इति । अथापि भ्राम्यन्ति । भ्रान्तस्य नास्त्यौषधम् । एवमत्रापि कोऽपि भ्रान्त्या पिनद्धाक्षः मा मूलपाठविषयेऽपचारीदिति प्रथममेवेदं घुष्यते– अयमपि खण्डार्थनिर्णयः हृ.ती.लिखिते मूलकोशे नोपलभ्यत इति ॥

कथं तर्हि मूलकोशावलम्बी मूलपाठ इति मुखपत्र एव प्रत्यज्ञायि?

अङ्ग, अस्ति कारणम् । नहि प्रतारणं नाम संशोधनक्षेत्रे सम्भवति । प्रतारकः संशोधकश्चेति विप्रतिषिद्धमेतत् । श्रूयतां वास्तवम्–

हृ.ती. लिखिते मूलकोशे बहवो ग्रन्था नोपलभ्यन्ते– गीताभाष्यम्, भागवततात्पर्यनिर्णयः, ऋग्भाष्यम्, न्यायविवरणम्– इत्याद्याः । एतावता न भ्रमितव्यम्– त एते ग्रन्था हृ.तीर्थेन न लिखिता एवेति ॥

इयमत्र पूर्वकथा–

हृ. तीर्थेन नूनं समग्रं सर्वमूलमलिख्यत द्वयोः सम्पुटयोः । तत्रैकं तत्रतत्र घुणभक्षितं गलितमुपलभ्यते । द्वितीयम्, यत्र खण्डार्थनिर्णयः, गीताभाष्यमित्यादिकमासीत्, सर्वात्मना नष्टमेव ॥

कथमिदं निरणायि, पूर्वं लिखितमासीत्, पश्चान्नष्टमासीदिति? नायं कौकुटिकानां प्रलापः । संशोधनफलमिदम् । मूलपाठरक्षणे कृतपरिश्रमस्य हृ.तीर्थसंस्थानमधिष्ठितस्य श्रीरघुवर्यतीर्थस्य वचन-

प्रामाण्यात् । स किल हृ.ती.लिखितं कोशं जराजर्जरं घुणभक्षितप्रायमनुलक्ष्य स्वयं पुनर्नूतने तालपत्रे लिपिबद्धं चकार, (सप्तदशके क्रिस्ताब्दे) । महदुपकृतं तत्रभवता । व्याख्यानादपि पाठशुद्धिर्महती । पाठस्यैव लौळित्ये कथं शुद्धोऽर्थो मृग्येत? बीज एव भुग्ने कथमङ्कुरोदयः?

स दशप्रकरणानां लेखनान्ते एवमेकं पद्यं निबबन्ध–

**'दशप्रकरणान्येवं दशप्रमतिराण्मुदे ।**
**'मूलकोशावलम्बेन रघुवर्योऽलिखद् यतिः'** इति ॥

मूलकोश इति हृ.ती.लिखितः कोश इति स्फुटम् । यतः स एक एव मूलकोश उपलब्धः । नान्यत्र क्वापि मठेषु वा विद्यालयेषु वा । यत् क्वचिदक्षोभ्यतीर्थलिखितो मूलपाठ इति मुद्रितमुपलभ्यते तदाहृतं सतां प्रतिसन्धानमेवेति मूलकोशविदो वदन्ति । तादृशस्य मूलकोशस्यानुपलम्भात् ॥

यद्यपि विश्वपतितीर्थो भगवत्पादकृतस्तोत्राणां प्रचलितं पाठमेव व्याख्याय जयतीर्थमुनेरेव पन्थानमनुपपात । अथापि तत्र तच्छिष्यैरेवमुल्लिखितम्– **'नायं मूलकोशपाठः'** इति । तदेतत् तालपत्रमद्यापि पेजावरमठे संरक्षितमस्ति ॥

सम्प्रति हृ.ती. लिखिते कोशे नायं 'खण्डार्थनिर्णयः' उपलभ्यते । पुनर्लिपिकारो रघुवर्यतीर्थः **'मूलकोशावलम्बेन'** इत्याह । तेनार्थादिदमापद्यते– पुरा हृ.ती.लिखितं द्वितीयं कोशान्तरमासीदिति । ततः पश्चाल्लुप्तम् । मूलकोशस्य जीनतामुपलक्ष्य रघुवर्यतीर्थस्तेषु कांश्चन लघुग्रन्थान् कोशान्तरे विलिख्य ररक्षेति ॥

अनर्घोऽयमुद्ध उपकारो यतिवरेण्यस्य यः पण्डिताचार्यस्य प्रमेयनवमालिकामत्यपूर्वया व्याख्यया समलञ्चकार । यदि स इदं ग्रन्थजातं नारक्षिष्यत् सर्वथाऽनङ्क्ष्यदेव मूलपाठः । रघुवर्यलिखितोऽपि गलनोन्मुखो जातः । दिष्ट्या न सर्वात्मना नष्टः । आयत्यां तस्य पाठस्य रक्षणार्थमस्मदुपक्रमोऽयं समारम्भः । मा भावी जिज्ञासुवर्गः शाश्वतं मूलपाठेन वञ्चितो भूदिति । जयतीर्थादिभिरादृतः प्रचलितपाठ एव मूलपाठ इति मा नाम सम्भ्रमदिति ॥

यद्यपि माध्वमहामण्डलेन प्रकाशिते सर्वमूलशुद्धपाठे प्रथममयं पाठो मुद्रितः । अथापि तत्रापि त्रिचतुरा दोषा उर्वरिताः । करणापाटवादेव । तदप्यत्र शोधितमिति वैशिष्ट्यमस्य प्रकाशनस्य ॥

# अविदिततुळुलिपिगन्धानामान्ध्यम्

अथाप्यहह केचिदपरिचिततौळवलिपिगन्धा मठान्धाः पर्यनुयुञ्जते– 'न वयं भवदभिमतस्य ह्.ती.पाठस्य प्रामाणिकत्वमभ्युपेमः। जयतीर्थोत्तरसर्वव्याख्यातृपरम्पराविरोधात् न केवलम्। तत्रैव कतिषुचन स्थानेषु पाठस्खालित्यदर्शनाच्च । तत्सामान्यादितरेषु तथात्वमिति सर्वस्यापि ह्.ती.पाठस्याविश्वसनीयत्वम्' इति, 'सर्वज्ञकल्पेषु मध्वदेवशिष्येषु नेदृशं करणापाटवमूलं स्खालित्यं शक्यसम्भवम्' इति च ॥

हन्त किमिदं कापेयमिति विस्मीयते। अत्र एतेन संवदमाना काचिदाख्यायिका ख्यायते– कश्चिदासीद् दुर्विदग्धः शाकशाकटी । स तत्र स्वनिष्कुटे पालक्यम्, वास्तुकम्, कण्टकिवार्ताकम्, अलसान्द्रः, कोशातकीप्रतानिनी, उर्वारुव्रततिः, कर्कारुलता, तुण्डिका, कर्कटिकालतिका, कारवेल्लवल्लीति बहुविधं शाकजातं रोपयामास । अथैकदा शाकानां समृद्धिमवलिलोकयिषुः शाकशाकिनमाजगाम । सन्तुतोष च समीक्ष्य शाकानां समृद्धिम् । दैवदुर्विपाकस्त्वन्य एवाऽसीत् । अस्य स्वकृतभोगभागधेयं मा भूदिति। स एकस्मिन् कोणे कानिचित् फलानि पत्राणि च कीटभक्षितान्यैक्षत। इतः कृमिचुम्बितानि कृमिभिरेव निवासीकृतानि नवनवोन्मेषाणि पत्राणि। इतः कीटकण्डिताः शलाटवः। इतः पुनरस्वच्छाः कृमिकिट्टवेष्टिता गुलुच्छाः । अहो मौर्ख्यं निष्कुटपालस्य । स हन्त नैतद्भक्षणयोग्यं शाकजातमिति सर्वमपि समृद्धं रसवदकीटाकीर्णमपि स्वं सस्योद्यानं निर्दयं दाहयामास । तत्समानयोगक्षेमोऽयं जाल्मानामग्रणीः कचित्कचिदष्टदशेषु स्थानेषु स्खलितमिव दृष्टमिति समग्रं ह्.ती.पाठं परितत्याज, सत्यपि पाठसामञ्जस्ये, सत्यपि पण्डिताचार्यादिप्राचीनटीकाकृत्संवादे। सेयं काश्चन वन्ध्या भवन्तीति स्त्रीत्वसामान्यात् सर्वा अपि वन्ध्या इत्यनुमिमानस्येव, अन्यः पट एतत्तन्तुनिर्मितो न भवतीत्ययं पटोऽप्येतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगीत्यनुमिमानस्येव पराकाष्ठा वैधेयतायाः ॥

तत्रापि हन्त भगवत्पादसाक्षाच्छिष्येण सुरक्षितः पाठो न श्रद्धेयः, पाश्चात्यव्याख्यातृभिः परिगृहीतेन पाठेन विरोधादिति चिन्तनमेव मनसो व्याधिग्रस्ततां दर्शयति। हन्त दौर्भाग्यमेतेषामनुकम्पा-मर्हति। यत् हस्तप्राप्येऽपि भागीरथीसलिले वापीवारि पिबन्ति। अविदिततौळवलिपयः अनधिगत-प्राचीनग्रन्था दुराग्रहमात्रसम्पदः प्रज्ञावादिन एव ते ॥



तस्यास्य कोशस्य हृ.ती.लिखितत्वमेव विवदमानानां वादिराजयतिवचनमेव पर्याप्तं प्रतिवचनम्–

**'पान्त्वस्मानिति पद्यस्य वन्दे वन्द्यमिति स्तुतेः ।**
**'अन्यथा मध्वकृतितानिर्णयः किङ्कृतस्तव'** इति ॥ (एकादशीनि.३२)

न केवलमेतावदेव– ग्रन्थावसाने स्वयं लिपिकृता हृ.तीर्थेनैव लिखितम्– 'हृषीकेशतीर्थेन लिखितोऽयम्' इति, मा नाम पाश्चात्याः संशोधकम्मन्या अविमृश्य भ्रमीषुरिति ॥

स्मराम्यत्रैकस्य प्रसङ्गस्य–

भूतपूर्व उत्तरादिमठाधिपतिः श्रीसत्यप्रमोदतीर्थः एकदा रजतपीठे न्युवास । तत्रभवान् हृ.ती.लिखितं मूलकोशं द्रष्टुमैच्छत् । स मामाहूयाब्रवीत्– 'ममापि दर्शयतु भवान् हृ.ती.लिखितं मूलकोशम्' इति । तदाऽहमवदम्– 'नहि हृ.तीर्थो भवत्सकाशमागच्छति । तत्रभवतैव हृ.तीर्थदर्शनार्थमागन्तव्यं भवति' इति । हन्त 'अवश्यमागमिष्यामि' इत्यङ्गीकृतं तेन यतिपुङ्गवेन । आजगाम च मया सहास्मन्निशान्तम् । ददर्श च हृ.तीर्थमूलकोशम् । आदरातिशयेन तत्पुस्तकं शिरसि धारयामास, प्रणनाम च । घटिकाद्वयपर्यन्तं तत्सङ्गतानेव विषयान् सम्भाषमाणोऽस्मद्गृहे एव तस्थौ । अहो तस्य यतेः सहृदयता, सत्यप्रियता च कथं विस्मर्येत । अर्वाचीनानां बालिशानामादर्शभूतेयं गुरुचर्या ॥

## मध्वशिष्याणां कथं करणापाटवम्?

नन्वथापि मध्वदेवशिष्याणां देवांशसम्भूतानां कथं वा करणापाटवम्? कथं वा लिपिस्खलनम्? तेनेदं क्वचित् स्खालित्यमेव तस्यामध्वशिष्यतां गमयतीति ॥

अयि सुभगम्मन्य, अविद्यायामन्तरे वेष्ट्यमानोऽसि । भगवदपरोक्षिणां देवोत्तमानां रुद्रादीनामपि करणापाटवम्, कुहचिद् भ्रमादिकमपि शास्त्रेषु पठ्यते । रुद्रो रामेण युयुधे । इन्द्रादयः कृष्णेन पारिजातहरणे । तत् कुतो मध्वशिष्याणां करणापाटवं न स्यात्?

नन्वहो तर्हि गृहीतस्तस्करः । निगृहीतोऽसि तत्ववादिन्, पण्डितमानिन् । अजानन्नेवाङ्गचकृथाः सर्वथा मध्वशिष्याणां करणापाटवसम्भवम् । तथाच स्यादेव नरहरितीर्थस्याप्यन्यथाज्ञानसम्भवः । तद् युक्तं जयतीर्थयतिना तद्दूषणमिति ॥

अहो प्रशंसामस्ते प्रज्ञाकौशलम् । एहि मन्ये पण्डितम्मन्य, तत्ववादिनं विजेष्यसे । न विजेष्यसे । मा भूरुच्छीर्षः । मा च भूरुच्छूनः । शृणु वास्तवमितिहासम्–

सत्याविष्करणाय किल मध्वदेवोऽवततार । नतु निगूहनाय । **'गुहा सन्तं मातरिश्वा मथायति'** इत्येवाऽह । तत्सहकरणसम्भ्रमाय एते मध्वशिष्या यतयो बभूवुः । यथैते भीमावतारे तत्पक्षीयाः क्षत्रिया बभूवुः । तेन नेदं वक्तुं साम्प्रतम्, यन्मध्वाशयमज्ञात्वैव तच्छिष्या व्याख्यन्निति । त्रय एव कर्म्मन्दिशिष्या गुरुहृदयज्ञा व्याख्यातारः श्रूयन्ते– विष्णुतीर्थः पद्मनाभतीर्थो नरहरितीर्थ इति । त्रयश्च गृहस्थाः– त्रिविक्रमपण्डितः शङ्करपण्डितो नारायणपण्डित इति । परम्परया वामनपण्डितश्च । ज्ञानप्रसारेण भगवत्पादसेवार्थं भुवि जातेषु मनसाऽपि अप्रामाण्यचिन्तनं महानपराधः । अन्यथा मध्ववचनेऽपि मोहकत्वं शङ्क्येत । निरङ्कुशा हि निष्प्रमाणं शङ्कितारः । तदिदं सर्वानुमतम् । नात्र प्रज्ञाचक्षुषः विवादपांसुप्रक्षेपः साधीयानिति ॥

अयं मथितार्थः– कर्मेन्द्रियेष्वपाटवमपरोक्षज्ञानिष्वपि क्वचित् स्यान्नाम । ज्ञानेन्द्रियेष्वपाटवं तु ज्ञानप्रसारेण सेवार्थं मध्वदेवशिष्यतया भुवि जातानां न सर्वथाऽङ्गीकारमर्हतीति ॥



शुद्धपाठस्य परिरक्षित्रा हृ.तीर्थेन कृतस्य महोपकारस्य नास्ति प्रतिनिर्यातनम् । नह्यपवादोऽस्तीत्युत्सर्ग एवोत्सृज्यते । ये पुनरुत्सिसृक्षन्ति तेषामियं दौर्गत्यस्य परा काष्ठा । नहीदृश्या बर्बरताया ईदृशस्य दौर्भाग्यस्य च सदृशमुदाहरणान्तरं पश्यामः । दैवहतकास्ते । क्षाम्यतां भगवान् भगवत्पादश्च तेषां बालिश्यम् ॥

## प्रचलितस्य भाषाप्रमादस्य परिहारः

शुद्धपाठनिर्णये न केवलम्, गीर्वाणभाषापरिज्ञानेऽपि बहूपकृतं हृ.तीर्थेन । एकमिदं निदर्शनं भवति– आ सेतोरा हिमागं सर्वेऽपि देवभाषासु परिणता वैयाकरणा अप्येवं लिखन्ति– **'निर्ऋतिः'** इति । अत्र सर्वेषामैककण्ठ्यम् । का प्रतिपत्तिः? बाल्ये मयाऽपि तथैव लेखनमभ्यस्तम् । यथा वृद्धाश्चरन्ति तथा बाला अपि । महाजनो येन गतः स पन्थाः ॥

क्रमेण यथाऽहं ववृधे तथा संशीतिरपि ववृधे । किमेतत्? कथमिदम्? न क्वापि स्वरो रेफशिरस्को भवति । नापि तादृशं संयुक्तमक्षरम् । अत एव च न तत्पूर्वाक्षरस्य गुरुत्वम् । तर्हि कथमस्योच्चारणम्? सर्वेऽपि 'निर्+ऋतिः' इति संयुक्तमक्षरमिव व्याहरन्ति । तदा च्छन्दोभङ्गो भवति– **'नासत्यौ निर्ऋतिर्मरुद्गणयुताः'** इति । अत्र निर्ऋतिरिति सगणेन भाव्यम् । शार्दूलविक्रीडितं हीदम् । कथं पूर्वैः कविभिश्छन्दोऽभज्यत? सहस्रनामस्वपि– **'महर्द्धिर्ऋद्धो वृद्धात्मा'** इति । बह्वृचानां वेदेऽपि– **'अग्निः पूर्वेभिर्ऋषिभिः'** इत्यादि ॥

कथमुच्चार्यते? कथं लिख्यते? कथम्? कथम्? किमुत्तरम्? चित्तं चिन्तायुक्तं सदन्तरेव निरन्तरं कथकथेति चकाथ । नोत्तरमुपलब्धं यावत् हृ.ती.मूलकोशो नादर्शि । दर्शितः पन्था तत्रभवता हृ.तीर्थेन । लब्धः परिहारः प्रहेलिकायाः ॥

सर्वमूलशुद्धपाठसमीक्षणमिषेण हृ.ती.लिखितो मूलकोशोऽस्मन्निशान्तमाजगाम । अहं प्रह्वः शरण-मियाम् । भाषाशास्त्रविषये सर्वा मम संशीतीः परिजहार करुणया हृषीकेशतीर्थः ॥

ज्ञातमिदानीं कथं लिखितव्यमिति । कथं पठितव्यमिति । रेफेण स्वरस्य योगः । नतु स्वरेण रेफस्य । तथाहि हृ.तीर्थो लिखति **'निरृतिः'** इति । अथ गतं संयुक्ताक्षरत्वम् । नहि हलोऽचा योगे संयुक्ताक्षरत्वं क्वापि सम्भवति । तेन न पूर्वाक्षरस्य गुरुत्वम्, नापि च्छन्दोभङ्गः । कथं तर्हि तदुच्चारणम्? **'निऋति'** इतिवदेव । सर्वं समञ्जसं समजनि । न्यमाङ्क्षमहं महानन्दजलधौ ॥

नमो मध्वदेवशिष्यप्रवराय हृषीकेशतीर्थाय । यो मां प्रथमं भाषाशुद्धिमपीपठत् । यदि स नापाठयिष्यत् सर्वत्र **'निर्ऋतिः'** इत्यपपाठ एव प्रचलितोऽभविष्यत् । तेन कार्तज्ञ्यमर्प्यते समधिगतपरमार्थाय तत्रभवते हृषीकेशतीर्थाय ॥

## अखण्डार्थनिर्णयः खण्डार्थनिर्णयः

तदलं बहिः प्रतोल्यामटाट्यया । गर्भगृहं प्रविशामः । खण्डार्थनिर्णयो नामाऽयं यज्वनामखण्डार्थनिर्णयो निरुपमः प्रबन्धः । तमेतमखण्डार्थनिर्णयं सन्तं खण्डार्थनिर्णयमाचक्षते परोक्षेण । वेदाभ्यासजडानामपि कर्मठानामविदितचरमपूर्वमाविष्करणम् । येन उजेर्यपण्डिता गलितगर्वा विस्मयमहोदधौ निमग्नाः

स्वात्मानमेव विसस्मरुः । तदेतदस्मट्टीकायां समग्रं विवृतम् । अनेनाणुना प्रबन्धेन भगवत्पादस्तेषां चक्षुषी उदमीमिलत् । समस्कुरुत तेषां हृदयमविद्याप्रतिसीरामपसार्य । उत्तस्थुः सपदि झाटितकौसीद्या उजेर्यपण्डिताः । परःशतं शरदः सश्रद्धमनुवर्तितं मायावादं तिलेन तर्पयामासुः । एकपदे तत्ववादं समाश्लिषन् । अहो महीयान् महिमाऽस्याणीयसः प्रबन्धस्य । धन्यस्तौळवदेशोऽनेन प्रबन्ध्रा च प्रबन्धेन च । अहह दौर्भाग्यं तत्ववादिनां यदीदृशोऽप्यपूर्वोऽनुत्तरो ग्रन्थः परमनध्ययनेन लुप्तप्रायः ॥

## प्रामाद्यन् सायणादयः

अथ मूलमागूर्य किञ्चिद् वक्तव्यम् । चतुर्मुखो वेदपुरुष इति न्यवेदिषाम– संहिता, ब्राह्मणम्, आरण्यकम्, उपनिषदिति । ऐतरेयब्राह्मणे चत्वारिंशदध्यायाः । अत एव चात्वारिंशं ब्राह्मणमाचक्षते– चत्वारिंशदध्यायाः परिमाणमस्य ब्राह्मणस्येति । तथाहि पाणिनिः– **'त्रिंशचत्वारिंशतोर्ब्राह्मणे सञ्ज्ञायां डण्'** (५.१.६२) इति ।

अधिगतमस्य ब्राह्मणस्य चात्वारिंशत्वम् । अथ कथमैतरेयत्वम्? अत्राऽह भट्टभास्करः– **'इतरस्य ऋषेरपत्यमैतरेयः । शुभ्रादिभ्यश्च** (अ.सू.४.१.१२३) **इति ढक्'** इति । तेन ऐतरेयेणोपज्ञातमैतरेयमिति तदाशयः ॥

भ्रान्तो भट्टभास्करः । नहीतरो नाम कश्चिदृषिः शास्त्रेषु प्रसिद्धः । ननु शुभ्रादिगणे इतरशब्दः पाणिनीयैः पठ्यते । सत्यं पठ्यते । अपपाठोऽयम् । 'इतरा' इति पठितव्ये प्रमादेन 'इतर' इति पेठुः । प्रथमं पाणिनीया बभ्रमुः । तेषु विश्वस्य भट्टभास्करोऽपि बभ्राम । तेन वैदिकानामध्येतृपरम्परैव बभ्राम ॥

सायणः पुनरेवमाह– **'कस्यचित् खलु महर्षेर्बह्व्यः पत्न्यो विद्यन्ते स्म । तासां मध्ये कस्याश्चिदितरेति नाम'** इति । 'कस्याश्चिद् यज्ञसभायां पिता महिदासमवज्ञायान्यान् पुत्रान् स्वोत्सङ्गे स्थापयामास । तदानीं खिन्नवदनं महिदासमवलोक्येतराख्या तन्माता स्वकीयकुलदेवतां भूमिमनुसस्मार । सा च भूमिदेवता दिव्यमूर्तिधरा सती यज्ञसभायां समागत्य महिदासाय दिव्यं सिंहासनं दत्वा तत्रैनमुपवेश्य सर्वेष्वपि कुमारेषु पाण्डित्याधिक्यमवगमय्य एतद्ब्राह्मणप्रतिभासनरूपं वरं ददौ' इति । अत्र इतरः 'इतरा' बभूव । अन्यत् सर्वं तत्रतत्र शास्त्रस्पृगपि, बहुलं किंवदन्तीमूलम् । न शास्त्रमूलमित्युपेक्ष्योऽयमपि ॥

अपिच कश्चित् महर्षिः, तस्य काचिद् भार्या । कस्याश्चित् सभायामिति किमिदं सर्वनाममयं व्याख्यानम्! सर्वनामभिरेव सर्वं सम्पूर्यते चेन्मन्दोऽपि व्याख्यायात् । पण्डिताः परं परिहसेयुः ॥

## षड्गुरुशिष्य उवाच

षड्गुरुशिष्यस्तु इतिहासमिमं विस्तरादाचष्ट । तद् यथा—

'अत्रैतरेयर्षिमहेतिहासं पुराणवेदोदितमाहुरार्याः ।
'आसीद् विप्रो यज्ञवल्को द्विभार्यस्तस्य द्वितीयामितरेति चाहुः ॥

'स ज्येष्ठयाऽऽकृष्टचित्तः प्रियां तामुक्त्वा द्वितीयामितरेति होचे ।
'तस्यां जातोऽथ शिशुः संरुदन् स प्रोक्तो मात्रा दुष्ट तूष्णीं भवेति ॥

'अनेकजन्मस्मृतियोगभाजा मूकायितं तेन महात्मनाऽपि ।
'यद् वासुदेवेति महत्तु नाम विष्णोः प्रवक्ष्यामि तदेव मौनी ॥

'अन्यैः प्रलापैः किमिहेति मत्वा जजाप जप्यं परमं मुमुक्षुः ।
'ज्येष्ठासुता वाग्मिनो दर्पयुक्ताश्चेरुः सपुत्रामितरां प्रहस्य ॥

'आहूतास्ते याजनायान्यदेशे यियक्षुणा केनचिद् ब्राह्मणेन ।
'प्रयोगेषु कुशला दर्पयुक्ताः समं पित्राऽयाजयंस्तं समेत्य ॥

'तस्माद् देशादागताः केचिदत्र गृहे यज्ञं तं प्रवृत्तं शशंसुः ।
'स्वपुत्रपूजाश्रवणेन हृष्टां ज्येष्ठां सपत्नीमितरा निरीक्ष्य ॥

'स्वमूकपुत्रस्य समीपमेत्य स्वजन्म पुत्रं च विगर्हयन्ती ।
'उवाच शोकाग्निविदीप्तदेहा स्वभर्त्राद्यैः स्वावमानं विचिन्त्य ॥

'किं जीविते मे मरणं वरेण्यमकामतो दुर्मरं खल्वहो धिक् ।
'वन्ध्या कृतार्था खलु नैव यस्यास्त्वं मूकरूपो भवसीह पुत्रः ॥

'भर्त्रा सपत्न्या तनयैश्च तस्यास्त्वां सूत्वाऽहं बाधिता मुञ्च वाचम् ।
'यमोऽपि मां जीवयन् पापकारी नैवंविधं नरके दुःखमाहुः ॥

'इति श्रुत्वा वचनं सोऽपि तस्या उवाच तां हर्षयन् शोकतप्ताम् ।
'आत्मारामो नैव मूकोऽहमम्ब जपं तु मोक्षाय करोमि मौनी ॥

'रुदंस्तूर्ष्णीं भव दुष्टेति चोक्तस्तथाऽभवं नैव मूकोऽहमम्ब ।
'सम्प्रत्युक्तो मुञ्च वाचं सुतेति वक्ष्यामि वाचं तव हर्षवृद्ध्यै ॥

'यत्राऽसते भ्रातरो मे पिता च गत्वा वदिष्यामि तु तत्र वाचम् ।
'इत्युक्त्वाऽगान्मूकरूपो महात्मा भक्तिं वहन् पुण्डरीकायताक्षे ॥

'मेघौघसञ्छन्नदिवाकराभो भस्मप्रतिच्छन्नहुताशनाभः ।
'यज्ञे स्थिता भ्रातरो दर्पयुक्ता आयान्तमालक्ष्य च मूकमेनम् ॥

'मूकस्य यज्ञे किमिहेति दन्तान् प्रकाश्य ते चक्रुरथाट्टहासम् ।
'स चापि तं यज्ञमनुप्रविश्य त्वारोढुमङ्कं पितरं प्रपेदे ॥

'मां मा स्पृक्षो मूढ दुष्टेति चोक्त्वा क्रुद्धः पिता न्यरुधच्चैतरेयम् ।
'ब्रह्मादिभूतानि तृणावराणि न सेहिरे तस्य तदाऽवमानम् ॥

'विष्णुप्रियद्वादशवर्णमन्त्रजपेन सङ्क्षालितदुःखराशेः ।
'ब्रह्मर्षिमुख्यस्य समस्तवेदवेदाङ्गनिष्णातविशुद्धबुद्धेः ॥

'क्षमागुणाधारभूताऽपि देवी वसुन्धरा नाशकत् तद्धि सोढुम् ।
'सदोहविर्धानतलं विदार्य सहस्रसूर्योद्गमतुल्यरूपा ॥

'ऊर्ध्वं जगामाऽत्मविभूषणैश्च महाद्भुतैः शोभितसर्वरूपा ।
'सुवर्णमुक्तामणिरत्नचित्रं सिंहासनं सर्वतोभद्रमाशु ॥

'स्वयं कराभ्यां कमलोपमाभ्यां तस्मै ददौ साऽसनं दिव्यरूपा ।
'पित्रा सपत्नीतनयैः सदस्यैर्दृष्टा सुरर्षिप्रमुखैश्च भूतैः ॥

'उवाच चैनं स्मितशोभिवक्त्रा विष्णोः प्रिया सा धरणीधरस्य ।
'कुमार किं ते पितुरङ्ककेन सुतैः सपत्न्याः परिमर्द्दितेन ॥

'ब्रह्मादिपित्रा खलु विष्णुना त्वं संलालितो मां धरणीति विद्धि ।
'मयोपनीतं त्वधिरोह पुत्र सिंहासनं सर्वतोभद्रमाशु ॥

'अत्राधिरूढस्य तव प्रसादं करिष्यति ब्रह्मगर्भोऽब्जनाभः ।
'श्रुत्वा धरित्र्या वचनं स चापि सर्वैर्दृष्टस्त्वारुरोहाऽसनं तत् ॥

'अथाधिरूढस्य तदाऽऽविरासीदग्न्यादिकं द्विःस्तृणुतेऽन्तकं च ।
'चात्वारिंशं ब्राह्मणं प्रायणीयाद्यह्नां चतुर्विंशतिकेन युक्तम् ॥

'एषामङ्गैर्दीक्षणीयादिभिश्च प्रसाङ्गिकै राजधर्मादिभिश्च ।
'समाप्य स ब्राह्मणं सर्वमन्ते कृत्वोङ्कारं विरतो ब्रह्मनिष्ठः ॥

'ब्रह्मादिभिश्चोदितो मा विरंसीर्ब्रह्मन्निति त्वैतरेयो महात्मा ।
'आरण्यकं त्रिविधं वै ददर्श महाव्रतं चोपनिषद्द्वयं च ॥

'ततः सर्वेऽपूजयंस्ते समेताः पित्रादयः सह देवर्षिसङ्घैः ।
'आरण्यकान्ते प्रणवं स कृत्वा ह्यवारोहदासनाद् भूमिदत्तात् ॥

'ततो देवी धरणी सा तिरोऽभूत् तच्चाऽसनं ते च सुरर्षिसङ्घाः ।
'सदोहविर्धानतलं विदीर्णं सुश्लिष्टमासीद् ववृतेऽथ यज्ञः ॥

'अथेतरा सर्वलोकप्रसिद्धं तद् ब्राह्मणारण्यकदर्शनं वै ।
'श्रुत्वा जहर्षाथ पिता समेत्य सहैव पुत्रैरितरां सपुत्राम् ॥

'अपूजयत् सा सपत्नी तथैनामसान्त्वयत् तत्सुतं चैतरेयम् ।
'स चापि मातुः प्रियकृन्महर्षिः पित्रादिभिः समनुज्ञात एव ॥

'वनं प्राप्य तत्र तप्त्वा तपश्च प्राप ब्रह्म दुर्वचं सूरिदृश्यम् ।
'स चैतरेयस्त्वितरासुतत्वात् स्त्रीभ्यो ढका महिदासाभिधेयः ॥

'महीप्रणीतासन आसनाच्च स्वाम्बासपत्नीमदनाशनाच्च ।
'महादानाद् वेदरूपाच्च नाम त्रिधा निरुक्तं तु पृषोदरादि ॥

'कथा ह्येषा महिदासैतरेयी श्रुता प्रोक्ता संस्मृता पूजिता च ।
'श्रद्धान्वितैरास्तिकैः सर्वसिद्ध्यै प्रकल्पेतेत्येवमाहुर्महान्तः' इति ॥

आरण्यकटीकायां पुनरेवमाह–

‘इतराख्याऽस्य माताऽभूत् स्त्रीभ्यो ढक्यैतरेयगीः ।
‘महिदासो महीदत्तमहासनसमासनात् ।
‘अवोचाम ब्राह्मणादौ माहिदासेतिहासकम्’ इति च ॥

तमेतमितिहासं पुराणवेदोदितमाहुरार्याः इत्याह । तेन ज्ञायते नायमितिहासं पुराणेषु वेदेषु वा स्वयं ददर्शेति । यदार्या आहुस्तदेवायं विश्वस्योल्लिलेख न हवा आर्या मृषा वदन्तीति । वेदेषु क्व दृश्यत इति मृग्यम् । पुराणेषु तु एकस्मिन् स्कान्दे ऐतरेयकथा पठ्यमाना सम्प्रति दृश्यते । तथापि महत् साङ्कर्यं दृश्यते । तथाहि स्कान्दे कौमारिकाखण्डे द्विचत्वारिंशेऽध्याये पठिताः श्लोकाः सङ्क्षिप्योद्ध्रियन्ते–

## स्कान्दे महिदासचरितम्

‘नारद उवाच–
‘अस्मिन्नेव मम स्थाने हारीतस्यान्वयेऽभवत् ।
‘माण्डूकिरिति विप्राग्र्यो वेदवेदाङ्गपारगः ॥

‘तस्याऽसीदितरा नाम भार्या साध्वी गुणैर्युता ।
‘तस्यामुत्पद्यत सुतस्त्वैतरेय इति स्मृतः ॥

‘स च बाल्यात् प्रभृत्येव प्राग्जन्मन्यनुशिक्षितम् ।
‘जजाप मन्त्रं त्वनिशं द्वादशाक्षरसञ्ज्ञितम् ॥

‘न शृणोति न वक्त्येव मनसाऽपि च किञ्चन ।
‘एवम्प्रभावः सोऽभूच्च बाल्ये विप्रसुतस्तदा ॥

.............

‘ततो निश्चित्य मनसा जडोऽयमिति भारत ।
‘अन्यां विवाहयामास दारान् पुत्रांस्तथाऽऽदधे ॥

‘पिङ्गा नाम च सा भार्या तस्याः पुत्राश्च जज्ञिरे ।
‘चत्वारः कर्मकुशला वेदवेदाङ्गवेदिनः ॥

.............

‘ऐतरेयोऽपि नित्यं च त्रिकालं हरिमन्दिरे ।
‘जजाप परमं जाप्यं नान्यत्र कुरुते श्रमम् ॥

‘ततो माता निरीक्ष्यैव सपत्नीतनयांस्तथा ।
‘दार्यमाणेन मनसा तनयं वाक्यमब्रवीत् ॥

‘क्लेशायैव च जातोऽसि धिङ् मे जन्म च जीवितम् ।
‘नार्थास्तस्या नृलोकेऽत्र वैरैवाजननिः स्फुटम् ॥

• • • • • • • • • • • • •

‘इति मातुर्वचः श्रुत्वा प्रहसन्नैतरेयकः ।
‘ध्यात्वा मुहूर्तं धर्मज्ञो मातरं प्रणतोऽब्रवीत् ॥

‘देहस्थास्य कृते मिथ्या संसारे किं विमुह्यसि ।
‘मूर्खाचरितमेतद्धि मन्मातुरुचितं नहि ॥

• • • • • • • • • • • • •

‘भावशुद्धिः परं शौचं प्रमाणं सर्वकर्मसु ।
‘अन्यथाऽऽलिङ्ग्यते कान्ता भावेन दुहिताऽन्यथा ॥

‘अन्यथैव स्तनं पुत्रश्चिन्तयत्यन्यथा पतिः ।
‘चित्तं विशोधयेत् तस्मात् किमन्यैर्बाह्यशोधनैः ॥

‘न रात्रौ विन्दते निद्रां कामाग्निपरिखेदितः ।
‘दिवाऽपि हि कुतः सौख्यमर्थोपार्जनचिन्तया ॥

• • • • • • • • • • • • •

‘विण्मूत्रोत्सर्गसदृशं सुखं मैथुनजं स्मृतम् ।
‘सन्मानमपमानेन वियोगेनेष्टसङ्गमः ॥

‘यौवनं जरया ग्रस्तं क्व सौख्यमनुपद्रवम् ।

• • • • • • • • • • • • •

‘मण्डूकइव सर्पेण गीर्यते मृत्युना नरः ॥

• • • • • • • • • • • • •

‘चिन्त्यमानः स्ववित्तानि कस्यैतानि मृते मयि ।

.............

‘आदौ दुःखं तथा मध्ये तथा ह्यन्ते च दारुणम् ॥

.............

‘एवमेतज्जगत् सर्वमन्योन्यातिशयोच्छ्रितम् ॥

‘दुःखैराकुलितं ज्ञात्वा निर्वेदं परमाप्नुयात् ।
‘निर्वेदाच्च विरागः स्याद् विरागाज्ज्ञानसम्भवः ॥

‘ज्ञानेन तं परं ज्ञात्वा विष्णुं मुक्तिमवाप्नुयात् ।

.............

‘एवंविधेन पुत्रेण मा मातर्दुःखिता भव ॥

.............

‘इति पुत्रवचः श्रुत्वा विस्मिता इतराऽभवत् ।
‘चिन्तयामास यद्येवं विद्वान् मम सुतो दृढम् ॥

.............

‘इत्यादि चिन्तयन्त्यां च रजन्यां भगवान् हरिः ।
‘प्रहृष्टस्तस्य तैर्वाक्यैर्विस्मितः प्रादुरास च ॥

.............

‘ततो निष्पत्य धरणीं हृष्टरोमाऽश्रुगद्गदः ।
‘मूर्ध्नि बद्धाञ्जलिर्धीमानैतरेयोऽथ तुष्टुवे ॥

‘नमस्तुभ्यं भगवते वासुदेवाय धीमहि ।
‘प्रद्युम्नायानिरुद्धाय नमः सङ्कर्षणाय च ॥

.............

‘यं न स्पृशन्ति न विदुर्मनोबुद्धीन्द्रियासवः ।
‘अन्तर्बहिश्च विततं व्योमवत् प्रणतोऽस्म्यहम् ॥

.............

‘इत्थं स्तुतः स भगवानैतरेयेण भारत ।
‘वासुदेवो विशालात्मा सानन्दमिदमाह तम् ॥

‘वत्सैतरेय तुष्टोऽस्मि भक्त्याऽनेन स्तवेन ते ।
‘वरं वृणीष्व मत्तस्त्वं दुर्लभं यदभीप्सितम् ॥

‘ऐतरेय उवाच—
‘एष एव वरो नाथ मम नित्यमभीप्सितः ।
‘मज्जतो घोरसंसारे कर्णधारो हरे भव ॥

‘श्रीभगवानुवाच—

.............

‘यज यज्ञैरवाप्यैव दारान् नन्दय मातरम् ।
‘मयि ध्यानेन तीव्रेण मामवाप्स्यस्यसंशयम् ॥

‘वर्णाश्रमाचारवता मयि सन्न्यस्तकर्मणा ।
‘मदनुध्यानयुक्तेन मोक्षो नास्तीह दुर्लभः ॥

.............

‘साम्प्रतं प्रतिभास्यन्ति वेदाश्चापठिता अपि ।

.............

‘इत्येवं भगवान् विष्णुर्मूर्तिमध्ये विवेश ह ॥

.............

‘ऐतरेयः स्वजननीं मुदितो वाक्यमब्रवीत् ।

.............

‘तेन जप्यप्रभावेन ममोत्पत्तिस्तवोदरात् ॥

‘जातिस्मृतिर्विष्णुभक्तिः स्थितिरत्र च सर्वदा ।
‘इदानीं च प्रयाम्येष यज्ञं तं हरिमेधसः ॥

.............

'इत्येवं मातरं प्रोच्य स यज्ञे प्रोक्तवान् द्विजः ।
'नमस्तस्मै भगवते विष्णवेऽकुण्ठमेधसे ॥
'यन्मायामोहितधियो भ्रमामः कर्मसागरे ।
'इमं श्लोकं महार्थं ते हरिमेधमुखा द्विजाः ॥
'आकर्ण्याऽसनपूजाद्यैः पूजयामासुरङ्ग तम् ।
'ततो वेदार्थनैपुण्यैस्तेन ते तोषिता द्विजाः ॥
'प्रददुर्दक्षिणां सर्वां हरिमेधाः सुतामपि ।
'द्रव्यं कन्यां च सङ्गृह्य स्वगृहं समुपागमत् ॥
'वन्दयित्वा स्वजननीं पुत्रानुत्पाद्य चामलान् ।
'इष्ट्वा यज्ञैरैतरेयो द्वादशीव्रततत्परः ।
'वासुदेवानुध्यानेन मोक्षं पश्चादुपागमत्' इति ॥

## द्वौ महिदासौ

२५२ श्लोकबद्धस्य महतोऽध्यायस्य सारसङ्ग्रहोऽयम् । नारदार्जुनसंवादरूपा काव्यमयी रमणीयेयमैतरेयकथा न नूनं वेदाविष्कर्तुर्भगवदवतारस्यैतरेयस्य कथेति मूलत एव स्फुटम् । अन्यो ब्राह्मणाविष्कर्ता द्वादशाक्षरप्रतिपाद्यो स्वयं भगवानैतरेयः । अन्य एव द्वादशाक्षरजापको वैष्णवः कश्चन ऋषिरैतरेयो नाम । व्याख्याने तु उभयोरैतरेययोः कथे सम्मिश्र्य साङ्कर्येण पठिते दृश्येते । भगवानेकः, भगवद्भक्त एक इति द्वावैतरेयावास्तामिति प्रमेयमजानतां व्याख्यातॄणामज्ञानविजृम्भणमिदं प्रमादमातृकमेव ॥

ऐतरेयद्वयमिदं भगवत्पादेन मध्वदेवेन प्रथममाविष्कृतम् । तथाहि छन्दोगोपनिषद्भाष्ये तृतीयाध्यायस्य पञ्चमे खण्डे कालकीयवचनम्—

'महिदासस्त्वैतरेयः कृष्णोऽन्यो देवकीसुतः ।
'कपिलश्च द्वितीयोऽन्यस्त्रय एते पुरातनाः ॥
'सङ्गत्योच्चैस्तपस्तेपुर्ब्रह्मणे परमेष्ठिने ।
'मातुः स्वस्य च नामैक्यं विष्णुना स्यादिति ह्युभौ ॥
'स्वात्मशिष्यप्रशिष्याणां नामैक्ये कपिलस्तथा ।
'एवमेव च वेदोक्ता भवेमेति ह्यतन्द्रिताः ॥

'तान् वरान् प्रददौ तेषां ब्रह्मा लोकपितामहः ।
'तस्मात् तन्नामिनस्त्वासंस्त्रयस्ते मुनयोऽहि हि ॥

'महिदासस्त्वैतरेयो बह्वृचोपनिषद्गतः ।
'साक्षात् स भगवान् विष्णुस्तन्नामेको मुनिर्ह्यभूत् ॥

'कृष्णस्तु वासुदेवाख्यः परमात्मैव केवलः ।
'तन्नामा देवकीपुत्रस्त्वन्योऽप्यभवदञ्जसा ॥

'कपिलो वासुदेवाख्यः साक्षान्नारायणः प्रभुः ।
'तन्नामा कपिलोऽन्यस्तु शिष्यनाम्ना सहाभवत् ॥

'स षोडशशतं जीवी महिदासोऽपरस्त्वृषिः ।
'घोरशिष्यस्तथा कृष्णः कपिलश्च कुशास्त्रकृत् ॥

'त्रय एते वरं प्राप्य ब्रह्मणः परमेष्ठिनः ।
'कृतकृत्याः प्रमुमुदुस्तन्नामानश्च तेऽभवन्' इति ॥

एतेन स्कान्दोक्तं वैष्णवस्य ऋषेः कथेति स्फुटम् । लिङ्गपुराणेऽपि, उत्तरभागे सप्तमाध्याये, इयमेव कथा सङ्क्षेपेणोक्ता–

कश्चिद् द्विजो महाप्राज्ञस्तपस्तप्त्वा कथञ्चन ।
पुत्रमेकं तथोत्पाद्य संस्कारैश्च यथाक्रमम् ॥

योजयित्वा यथाकालं कृतोपनयनं पुनः ।
अध्यापयामास तदा स च नोवाच किञ्चन ॥

न जिह्वा स्पन्दते तस्य दुःखितोऽभूद् द्विजोत्तमः ।
वासुदेवेति नियतमैतरेयो वदत्यसौ ॥

पिता तस्य तथा चान्यां परिणीय यथाविधि ।
पुत्रानुत्पादयामास तथैव विधिपूर्वकम् ॥

वेदानधीत्य सम्पन्ना बभूवुः सर्वसम्मताः ।
ऐतरेयस्य सा माता दुःखिता शोकमूर्च्छिता ॥

उवाच पुत्राः सम्पन्ना वेदवेदाङ्गपारगाः ।
ब्राह्मणैः पूज्यमाना वै मोदयन्ति च मातरम् ॥

मम त्वं भाग्यहीनायाः पुत्रो जातो निराकृतिः ।
ममात्र निधनं श्रेयो न कथञ्चन जीवितम् ॥

इत्युक्तः स च निर्गम्य यज्ञवाटं जगाम वै ।
तस्मिन् याते द्विजानां तु न मन्त्राः प्रतिपेदिरे ॥

ऐतरेये स्थिते तत्र ब्राह्मणा मोहितास्तदा ।
ततो वाणी समुद्भूता वासुदेवेति कीर्तनात् ॥

ऐतरेयस्य ते विप्राः प्रणिपत्य यथातथम् ।
पूजां चक्रुस्ततो यज्ञं स्वयमेव समागतम् ॥

ततः समाप्त तं यज्ञमेतरेयो धनादिभिः ।
सर्ववेदान् सदस्याह सषडङ्गान् समाहिताः ॥

तुष्टुवुश्च तदा विप्रा ब्रह्माद्याश्च तथा द्विजाः ।
ससृजुः पुष्पवर्षाणि खेचराः सिद्धचारणाः ॥

एवं समाप्य वै यज्ञमेतरेयो द्विजोत्तमाः ।
मातरं पूजयित्वा तु विष्णोः स्थानं जगाम ह ॥

इतरस्य सुत इति भट्टभास्कोक्तमप्यज्ञानमूलमिति सुस्पष्टम् । षड्गुरुशिष्योक्तमपि उभयोः कथयोः सङ्कीर्णतया कथनादज्ञानमूलमिति स्फुटम् । ऐतरेयो नाम कश्चिद्दषिरिरिति वदन् सायणोऽपि भगवन्तं महिदासमजानन्नेव किमपि जजल्पेति शोचनीय एव । तर्हि का कथा भगवदवतार-स्यैतरेयस्य? तदेतदाविष्कृतं भगवत्पादेन महैतरेयोपनिषद्भाष्यादौ–

'प्रादुर्बभूव भगवांस्तपसेतराया नारायणोऽब्जजभवस्य विशालनाम्नः ।
'तस्मिन् गतेऽध्वरमभूत् सुरविप्रसङ्घो निश्चेतनस्तदनु पद्मभवोऽमुमस्तौत् ॥

'तैः संस्तुतः स भगवान् गिरिशेन्द्रमुख्यान् सर्वानबोधयदजेन सहैव तेऽथ ।
'दासत्वमापुरत एव महत्सुराणां दासत्वतः स महिदास इति प्रसिद्धः ॥

'शृण्वत्सु तेषु भगवानवदद् रमायै 'दिव्यां श्रुतिं स परमोऽतिमुदैतरेयीम् ।
'सा बह्वृचैः प्रपठिता चतुराननास्यात् यस्यां रहस्यमुदितं परमं हि विष्णोः' इति ॥

भागवततात्पर्यनिर्णये च ब्राह्मवचनम्–

'अवतारस्तृतीयोऽस्य देवर्षिः प्रथितो दिवि ।
'महिदासस्त्वैतरेयो यस्तन्त्रं नारदेऽवदत्' (१.३.८) इति ॥

'ऐतरेयो हरिः प्राह नारदाय स्वकां तनुम् ।
'यत् प्रापुर्वैष्णवा नान्ये यद्दते न सुखं परम्' (३.७.१९) इति च ॥

तत्रैव तन्त्रभागवतवचनम्–

'विष्णोरपरिवारत्वदृष्ट्या देवान्तरार्चनात् ।
'महिदासो देवऋषिः पातु मां विष्णुरव्ययः ।
'तदनर्पितकर्मभ्यस्तदस्मरणतस्तथा' (६.८.१७) इति ॥

सूत्रभाष्ये च ब्रह्माण्डवचनम्–

'महिदासाभिधो जज्ञ इतरायास्तपोबलात् ।
'साक्षात् स भगवान् विष्णुर्यस्तन्त्रं वैष्णवं व्यधात्' इति ॥

## महिदासपदनिरुक्तयः

अत्रैवं भाति– षड्गुरुशिष्योक्ता जनश्रुतिमूलाऽपि कथा बहुलं मूलकथानुगुणा । द्वयमेव तत्रासङ्गतम्– महिदासस्य यज्ञवल्कः पितेति, द्वादशाक्षरोपासक ऐतरेय आसीदिति । प्रथमं तावन्निर्मूलम् । द्वितीयं

भगवद्भक्तस्य ऐतरेयस्य कथायां पठितम् । तदत्र प्रमादात् संयोजितम् । अहो षडपि गुरवोऽवञ्चन्तैव ॥

अन्यत् सर्वं प्रायः समानम् । तेन महिदासशब्दोऽनेकार्थः । तत्रैकोऽर्थो भगवत्पादेन मुखत उक्तः– महतां सुराणां दासत्वतो महिदास इति । महयः महान्तः दासा अस्येति महिदास इत्यर्थः ॥

अन्याश्च निरुक्तयः कथानुगुणतया ऊहनीयाः– महि महितं ब्राह्मणारण्यकोपनिषदाख्यं वाङ्मयं सुराणामृषीणां च ददासेति महिदासः । **दासृ दाने** ॥

महीरूपया रमया दत्ता आसा आसनं यस्य । मह्या दत्त आसने असते दीप्यत इति वा, आदत्ते इति वा महिदासः । **अस गतिदीप्त्यादानेषु** ॥

अथाप्याचक्षते महिळामदासनादेनं महिदास इत्याहुरक्षरद्वयलोपेनेति । स्वाम्बासपत्न्याः महिळायाः मदं गर्वं अस्यति निरस्यतीति महि(ळाम)दास इति । प्रथमपदस्यान्त्याक्षरलोपः । द्वितीयस्याद्याक्षरलोप इति । कथम्? निरुक्तत्वात् । यदाहुः–

**'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।**
**'धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्'** इति ॥

षड्गुरुशिष्यस्तु पृषोदरादित्वात् साधुत्वमित्याह– **'पृषोदरादीनि यथोपदिष्टम्'** (अ.सू.६.३.१०९) इति ॥

# चात्वारिंशे किमुच्यते?

बह्वृचानां ब्राह्मणे चत्वारिंशद्भिरध्यायैः किमाह महिदासः? किंविषयं चात्वारिंश्यम्?

आदौ तावत् तत्ववादिनां प्रियं तारतम्यं प्रस्तुवन्निव ब्राह्मणमारभते महिदासः–

**'ॐ अग्निर्वै देवानामवमः । विष्णुः परमः । तदन्तरेण सर्वा अन्या देवताः'** इति ॥

**'अग्निमीळे'** इत्यैतरेयश्रुतिरग्निमेव प्रथमं स्तौति । न तद् युक्तम् । अग्नेर्देवानामवमत्वात् । नह्यवमः प्रथमं स्तूयत इति साम्प्रतम् । विष्णुर्हि परमः । तस्मादग्निशब्देन विष्णुरेवोच्यत इति संहितायाः

प्रथममन्त्रव्याख्यानरूपं चेदम् । अत एव ब्राह्मणम् । ब्रह्मणो वेदस्य व्याख्यानरूपमिदमिति हि ब्राह्मणम् । **'अवमः अन्तिमः । परमः प्रथमः'** इति स्थाने गोविन्दस्वामिभाष्यम् । समस्तशास्त्रानुगुणं चेदम् । 'अवमः प्रथमः' इत्यादि व्याख्यानं नाऽदृत्यम् ॥

एवं भगवत्प्रीतिसाधनानि चतुर्विंशतिदिनसाध्यानि सत्राणि सपरिकराणि चात्वारिंशे विव्रियन्ते । सेयं चतुर्विंशतिः सत्राणाम्– १. प्रायणीयम्, २. चतुर्विंशम्, ३–८. पृष्ठ्यषळहम्, ९–१४, अभिप्लवषळहम्, १५. अभिजित्, १६–१८, स्वरसामन्त्र्यहम्, १९. विषुवत्, २०. विश्वजित्, २१–२३. छन्दोमत्र्यहम्, २४.दशमं चेति ॥

प्रतिसत्रं षट् शस्त्राणि भवन्ति– प्रातःसवने आज्यशस्त्रं च प्रउगशस्त्रं च । माध्यन्दिनसवने मरुत्वतीयशस्त्रं च निष्केवल्यशस्त्रं च । सायंसवने वैश्वदेवशस्त्रं च आग्निमारुतशस्त्रं च ॥

सर्वेषामपि शस्त्राणां मन्त्रविवरणपूर्वकं युक्तायुक्तचिन्ता विस्तरतः कृता । तदुपयुक्तं तत्सङ्गतं सर्वमन्यच्च– परिधानीया ऋचः, याज्यापुरोऽनुवाक्या ऋचः, छन्दसां विहरणम्, धाय्यामन्त्रः, निविद्धिधानम्, सोमाहरणम्, पशुयागः, दीक्षाविधिः, न्यूङ्खविधिः, उदिते होमविधिः, अनुदिते होमनिन्दा इत्यादि । एवं क्रतुसम्बद्धाः केचनेतिहासाः सत्रसम्बद्धानां केषाञ्चिद् वैदिकपदानामपूर्वं निर्वचनादिकं च । तद् यथा– **'आहूतयो वै नामैता यदाहुतयः'** इत्यादि ॥

## बृहतीसहस्रम्

किं बहुना? यत् कर्मठानां याज्ञिकानामपेक्षितं तत् सर्वं चात्वारिंशे बृहति ब्राह्मणे निरूपितमिव । अथावशिष्टमेकं पञ्चविंशमहः, महाव्रतं नाम । तेनैवारण्यकस्यारम्भः– **'अथ महाव्रतम्'** इति । यत्र प्रेङ्खारोहणविधिर्विवृतः । यत्र बृहतीसहस्रं नाम निष्केवल्यशस्त्रं भवति । यस्य च महाव्रतस्याध्ययनं गुरुकुलं गतस्य वटोः प्रथमं शिरोव्रतं भवति । षोडशसंस्कारेषु उपनयनानन्तरभावी एकादशः संस्कारः । आद्या दश संस्काराः पित्रा क्रियन्ते । अयं तु स्वयं क्रियमाणः प्रथमः संस्कारः ॥

चात्वारिंशानन्तरं प्रथमे पञ्चाध्याया आरण्यकम् । ततो नवाध्यायी उपनिषत् । त एते चतुर्दशाध्यायाः संहत्य प्रघट्टकद्वयं निर्मिमाते । आद्याः षळध्यायाः प्रथमः प्रघट्टकः । ततोऽष्टौ द्वितीयः प्रघट्टक इति पुरातनः सम्प्रदायः । प्रथमप्रघट्टके आद्या पञ्चाध्यायी आरण्यकम् ॥

चात्वारिंशस्यापि पञ्चकविभागेनाष्टौ पञ्चकानीत्याचक्षते । तेन नवमं पञ्चकमारण्यकम् । एवं ब्राह्मणारण्यके सङ्गते नव पञ्चकान्यासन् । प्रथमप्रघट्टकस्य आ षष्ठाध्यायात् आ द्वितीयप्रघट्टकान्तं नवाध्यायी ऐतरेयोपनिषत् ॥

तत्रापि द्वे उपनिषदौ भवतः । प्रथमा आत्मोपनिषत् । द्वितीया संहितोपनिषत् । उभे अपि सङ्गते महैतरेयोपनिषदित्याचक्षते ॥

तत्र प्रथमं पञ्चस्वध्यायेषु महाव्रतस्य आज्यप्रउगादीनां षण्णां शस्त्राणां विवरणं भवति । तस्मादारण्यकं प्रथमं महाव्रतपर्वेति षड्गुरुशिष्यः । तन्मते तत्रैव प्रथमारण्यकसमाप्तिः । सायणोऽप्येवमाह । तावुभावपि प्रघट्टकाख्यं विभागं नानुमन्येते । प्रथमे पञ्चाध्यायाः प्रथममारण्यकम् । ततः परं षळध्यायाः द्वितीय-मारण्यकम् । ततोऽध्यायत्रयं तृतीयामारण्यकमिति षड्गुरुशिष्यः, सायणस्तु सप्ताध्याया द्वितीय-मारण्यकं मन्यत इतीयान् विशेषः ॥

## बह्वृचानां महद् वाङ्मयम्

एवमेतन्महदपौरुषेयं वाङ्मयं यज्ञशालायमाविश्चकार भगवानैतरेय इति ॥

ततः परं महानाम्नीखण्डो भवति । यं सकृदुक्तिखण्डाध्याय इत्याह षड्गुरुशिष्यः । एवं महति निगमार्णवे ब्राह्मणस्य षोळशाध्यायभागः, महानाम्न्य ऋचः सनिगदाश्चात्र खण्डार्थनिर्णये विवृताः । एतद्व्याजेन समस्तस्य कर्मकाण्डस्य भगवत्परता निरणायि भगवत्पादेन ॥

अहो भगवत्पादस्य दयालुता हृदयालुता च । अनेनाणुना प्रबन्धेन उपचस्कार समेषां कर्मकाण्डमग्नानामुजेर्यपण्डितानामपथगामि समग्रं जीवनम् । पर्यवर्तयच्च तेषां हृदयम् । ते वादे पराजिता

अपि जिग्युरेव भगवत्पादानुग्रहभाजनतया, लेभिरे च भगवत्पादसेवाभाग्यम् । उदगमन् संसारसागरात् तच्छिष्यतामवाप्य ॥

अतुलं दौर्भाग्यमेतत् यदेनमद्भुतं प्रबन्धम्, सेतुबन्धं ज्ञानकाण्डकर्मकाण्डयोः, उभयेऽपि, ज्ञानयोगा अपि कर्मयोगा अपि व्यस्मार्षुरेव । अहो अन्धो मणिमविन्दत । गदग्रस्तस्य पुरः परमान्नम् । एडस्य सङ्गीतशिक्षणम् । चिन्तासन्ततिरियमपारावारा चिरकालं मां बबाधे । तत्फलमियं विस्तृता टीका । यत्र तदात्वे उजेर्यग्रामे किं प्रववृते सोऽप्युदन्तः समग्रं निरूपितः ॥

चतुराम्नायचतुराणां चर्चाविहरणचत्वरमिदं चातुर्विंशं नाम । यत्र त्रिंशेऽध्याये षष्ठे खण्डे गतरसानां मन्त्राणां कुन्तापसूक्तेन रसाधानमुच्यते । यमाचार्यः पूर्वदिनप्रवचने विचचर्च ॥

## पण्डितः शिष्यः

इदमपरं प्रमोदस्थानम्– यन्मे प्रेमपात्रमन्तेवासी श्रीलोऽनिलः मत्कृतायाष्टीकायाः प्रथमपाठी स्वानुभवं विलिख्य ददौ । सोऽपि पाश्चात्यो वाकः ग्रन्थान्ते मुद्रितः । पण्डितोऽनिलः । प्रीतिसम्भृता मदीया आशीःपरम्पराः सदा तं परिरक्षन्तु शास्त्रमथनकर्मणि वर्मभूताः ॥

विदाङ्कुर्वन्तु विद्वांसः । प्रथतामध्ययनपरम्परा खण्डार्थनिर्णयस्य । चक्षुरुन्मीलयतु मध्वदेवः सर्वेषाम् । विजयतां तत्ववाद इति शम् ॥

इति भवदीयः

**–डा. बन्नञ्जे गोविन्दाचार्यः**

**रूप्यपीठम्**
**१९४२तमे शा.शके. शार्वरिसंवत्–**
**नरसिंहजयन्ती, (६-५-२०२०)**

सोऽपृच्छत् तमथ महाह्वयोपसर्ग्गा
यत्रोक्ता मनुचरणोपसृज्यरूपाः ।
तस्यार्त्थं वचनचयस्य तं ब्रुवाणः
स्थैय्यार्त्थं सपदि स लेखयाम्बभूव ॥

(श्रीमध्वविजयः-१६.४५)



छन्दःखण्डार्त्थवादी जितकुमतिकुलो
दुर्ज्जनेर्ष्याभ्युपेक्षी ।

(प्रमेयनवमालिका-३१)





प्रणतवान् प्राणिनां प्राणभूतं

प्रणतिभिः प्रीणये पूर्णबोधम् ॥

ॐ ॥ य इज्यते विधीशान-शक्र-पूर्वैः सदा मखैः ।
रमा-प्रणयिने तस्मै सर्व-यज्ञ-भुजे नमः ॥ * ॥

महानाम्नीनामृचाम् उपसर्ग्गा ये उपसर्ज्जनभूतास्तानुपसृजति संयोजयति । महन्नाम यास्वृक्षु विद्यते ता महानाम्न्यः । परस्य ब्रह्मणो यन्नामेन्द्रादिकं तन्महार्थत्वान्महत् । महद्धि तत् परं ब्रह्म । अशेषगुणसम्पूर्त्तेः ॥

तत्रैक आहुरगुणं ब्रह्मेति । न तद् युक्तम् । श्रुतियुक्तिविरोधात् । तथाहि श्रुतिः—

'सत्यं ज्ञानमनन्तं ब्रह्म', 'विज्ञानमानन्दं ब्रह्म', 'यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः । तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते', 'दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रोऽक्षरात् परतः परः', 'एतावानस्य महिमा ततो ज्यायांश्च पूरुषः', 'यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा', 'पूर्णमदः पूर्णमिदं पूर्णात् पूर्ण-

मुदच्यते । पूर्ण्णस्य पूर्ण्णमादाय पूर्ण्णमेवावशिष्यते', 'सर्वनामा सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः', 'विष्णोर्नु कं वीर्य्याणि प्रवोचं यः पार्त्थिवानि विममे रजांसि', 'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति', 'न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप' इत्यादिका ॥

युक्तिश्च– बुद्धिपूर्वं सर्वकर्त्तृत्वात् सर्वज्ञत्वादयो युक्ताः ॥

'कर्तृत्वात् सगुणं ब्रह्म पुरुषं पुरुषर्षभम्' इति च भागवते ॥

नच 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्म्माद्ध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्ग्गुणश्च' इत्यादिश्रुतिविरोधः । सत्त्वादिगुणाभावोक्तेस्तत्र । अन्यथा 'एको देवः सर्वभूतेषु गूढः–' इत्यादीनामपि गुणत्वात् स्वोक्तिविरोधः ॥

नच निर्विशेषं नाम किञ्चिदस्ति । निर्विशेषत्वोक्तेरेव व्याहतत्वात् । निर्विशेषत्वेन विशिष्टं नवेत्युक्ते, यद्यविशिष्टं न विशेषनिराकरणम् । विशेषवत्त्वमेव भवति । यदि तेन विशिष्टम्, स एव विशेष इति व्याहतिः ॥

नच निर्विशेषत्वे किञ्चिन्मानम् । अशेषविशेषवचनानुभवयुक्तिविरोधश्च । नच मित्थ्याविशेषवत् । व्याहतेः । मित्थ्याविशेष इत्युक्ते ह्यसद्विशेष इत्येव भवति । तथाचाविशेषपक्षोक्तदोष एव ॥

नचानिर्वचनीयविशेष इति भवति । अनिर्वचनीयासिद्धेः । नहि तत्र प्रत्यक्षमस्ति । मित्थ्याशब्दस्त्वभाववाद्येव । तदन्यत्र प्रमाणाभावात् । नचान्यत् प्रमाणम् । प्रतिज्ञाव्याहतेः । न हि सदन्तरादसतश्चान्यत् सदसद्विलक्षणं प्रसिद्धम्? असन्न भवतीत्युक्ते च, द्वौ नञौ प्रकृतमर्त्थं गमयत इति सदेव भवति । असदन्तरं वा, विशेषविवक्षायाम् ॥ * ॥

किञ्चैतद् वैलक्षण्यं भेदोऽभेदो भेदाभेदौ वा? न तावद् भेदः । अनङ्गीकारात् । व्यावहारिकभेदश्चानिर्वाच्यसिद्धौ वक्तव्यः । नचाव्यावहारिकं किञ्चित् । नचाशेषव्यवहारनिवृत्तौ किञ्चिन्मानम् । नच मित्थ्यातत्थ्ययोः सामान्यं व्यावहारिकत्वम् । धूमबाष्पयोर्द्धूमत्ववत् । नचाभेदः । अनङ्गीकारादेव । तथैवोभयम् । अभेदे चानिर्वाच्यब्रह्मणोस्तच्छब्दयोः पर्य्यायत्वम् । नच व्यावर्त्त्यविशेषेणापर्य्यायत्वं क्वचित् । व्यावर्त्त्यविशेषस्तद्व्यावृत्ते ब्रह्मणि विशेषमापादयति चेत् विशिष्टवाक्यार्त्थता । न चेन्न ब्रह्मज्ञानार्त्थिनः पदान्तरं वाच्यम् । असङ्गतत्वात् । मित्थ्याविशेषस्य चासिद्धिरुक्ता । ततोऽन्योन्याश्रयताऽनवस्थितिश्चक्रकं वा । भेदाभेदविलक्षणमप्युक्तरीत्यैवापाकृतम् ॥

किञ्चासद्विलक्षणमित्यत्राभावान्यविरोधिनां मद्ध्ये नञः कोऽर्त्थः? यद्यभावः, न, असद्विलक्षणत्वं भावत्वमेव जगतः स्यात् । नच सतोऽन्यस्मादसतो विलक्षणं जगत् । असतोऽन्यत्वादिधर्म्मानङ्गीकारात् । ब्रह्मणश्च । असतः

अनिर्वचनीयत्वाङ्गीकाराच्च न वैलक्षण्यं ततोऽनिर्वाच्यस्य । तथाऽपि चेद् वैलक्षण्यमनिर्वाच्यत्वं न जगतः । नच विरोधि । विरोधिनोरन्यतरनिषेधेऽन्यतरत्वानुभवात् । अविद्यमानं न भवतीत्युक्ते विद्यमानमित्येव हि सर्वलोकानुभवः । अतोऽनन्तगुणो भगवान् नारायण इति सिद्धम् ॥ * ॥

* * *

नच सिद्धेऽर्थे वाक्यस्य प्रामाण्याभावादीश्वराद्यसिद्धिः । सिद्धातिरिक्तकार्य्याभावात् । लिङाद्यर्थस्त्विष्टसाधनत्वमेव । नहि कर्त्तव्यत्वं नामेष्टसाधनत्वादन्यत् किञ्चित् । तन्मानाभावात् । शब्दस्तु न तद् वक्तीत्युक्तम् । लिङादेरिष्टसाधनत्वार्थत्वेनैव कृतार्थत्वे तदन्यकार्य्यकल्पने कल्पनागौरवं च । नच तत्कल्पकं किञ्चित् । विप्रतिपत्तौ चान्यन्मानं वक्तव्यं तद्भावे । नचानुमा । अप्रसिद्धविशेषणत्वात् । नचार्थापत्तिः । अनुपपत्त्यभावात् ॥

कार्य्याभावादेव कार्य्यान्वयान्वयिनि व्युत्पत्तिरित्यादि दूरतो निरस्तम् । कार्य्यान्विते व्युत्पत्तिरिति वदतोऽकार्य्यान्विते व्युत्पत्तिरित्युक्ते किमुत्तरम्? अद्ध्याहार इत्युक्ते लोप इत्युत्तरम् । अशेषसिद्धपदानामर्थलोपाल्लिङाद्यर्थलोप एव वरीयान् । हससि हसामीत्यादि सिद्धार्थ एव बालानां व्युत्पत्तेः । प्रथमप्राप्तत्वाच्च । नच तत्त्यागे कारणम् । तथैव व्युत्पत्तिदर्शनाच्च । अतः सिद्धार्थे प्रामाण्यप्रसिद्धेश्च सिद्धं महागुणत्वं विष्णोः ॥ * ॥

* * *

ताश्च 'विदा मघवन्' इत्याद्याः ।

हे मधवन्, यशस्विन् धनवन् मखपत इति वा–

'तं वा एतं मखवन्तं सन्तं मघवानित्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः', 'तेभिरिन्द्रं चोदय दातवे मघम्', 'तन्न आयातु मघम् । यशो वाव मघम् । मघमनु प्रापत्सि ।' 'आ मामेतु मघम् । मघमनु प्रापत्सि । धनं वाव मघम्' इत्यादिश्रुतिभ्यः ॥

गातुं त्वां स्तोतुम् । विद वेदयेति सामान्यतोऽपेक्षिताशेषवेदनमुक्त्वा तात्कालिकापेक्षितं प्रार्थयति– गातुं विदेति । त्वमेव अनुशंसिषो दिशः मार्ग्गान् । आत्मनः स्तुतिप्रकारान् स्वयमेवोपदिशेत्यर्त्थः । पूर्वीणां भगवत्सम्प्रदायागतानां परमविद्यानामर्त्थे शिक्ष । शचीनां विद्यानां पते, वाचां पत इति वा । पुरुवसो बहुवित्त, बहुज्ञानेति वा । बहुषु वसति, बहूनामावास इति च ॥ * ॥

आभिरभिष्टिभिः, एवम्भूतैस्त्वत्पर्य्येषणैः, त्वत्प्रार्त्थनैः त्वं किञ्चिन्मदादिकं प्रचेतय प्रबोधय । प्रकृष्टचेतन सर्वज्ञ, परमात्मन् । द्युम्नाय ज्ञानाय, यशसे वा । इषे अन्नाय नः प्रबोधय । एतादृशो हि शक्रः । शक्र एवेति वा । शक्तिरतिरूपत्वाच्छक्रः ॥ * ॥

राये वित्ताय ज्ञानाय वा । वाजाय अन्नाय । वज्रिणमिन्द्रं वर्त्तयतीति वज्रिवा । नियामकत्वेन गच्छतीति वा । शविष्ठ बलवत्तम, सुखवत्तमेति वा । ऋञ्जसे प्रेरयसि सर्वान् । 'मंहिष्ठ वज्रिन्नृञ्जसे' इत्यभ्यासस्तात्पर्य्यार्त्थः । मत्स्व मदं कुरु ॥ ✻ ॥

विद वेदय लम्भय रायः सुवीर्य्यं च । वाजानां प्रजानां पतिर्भुवः अभवः । 'प्रजा वै वाजः' इति श्रुतेः । वशाननु यथावशम् । 'वश इच्छायाम्' इति धातोः, यथावशं यथेच्छम् । शूराणां सकाशाद् बलवत्तमः ॥ ✻ ॥

मघोनां यशस्विनां महत्तमः । चिकित्वः ज्ञातः, कर्त्तरिति वा । नः अभितः सर्वतो नय । इन्द्रो विदे समस्तं व्यजानात् । तमेव स्तुषे ॥ ✻ ॥

ऊतये रक्षायै, अभिप्रायसिद्धये वा । स नो द्विषः शत्रून् अतिपारयतु, पापानि तमांसि (वा) । क्रतुः ज्ञानरूपः । छन्दः इच्छारूपः । छन्द्यत्वात् छादनत्वाद् वा । ऋतम् अशेषशास्त्रावगतम् ॥ ✻ ॥

सातये लब्धये । स्रिधः विनाशात् ॥ ✻ ॥

पूर्वस्य अनादेः ते सकाशात् यत् सुम्नं सुखं तस्मिन् न आधेहि । तव पूर्त्तिः शस्यते ॥ ✻ ॥

तन्नव्यं स्तुत्यं ब्रह्म । तत् सम्यक् हृदि न्यसे जनस्योपदेशेन । त्वत्स्वरूपेषु त्वं चाहं च सम्ब्रवावहै । गोषु ज्ञानेषु गच्छति ज्ञानविषयो भवति । सुशेवः सुसुखः । समाधिकरहितः अद्वयः ॥ ✻ ॥

'एवा ह्येवैवा हि' इत्यग्न्यादिदेवतासंवादरूपेणोक्तमर्त्थमतिशयेनावधारयति । अभ्यासो हि तात्पर्य्यार्त्थः । एवं हि, एवमेव हीत्यर्त्थः । 'विनिश्चिते तु संवादे विभागो रङ्ग एव च' इति शब्दनिर्ण्णये । अतः 'अग्नाइ' इत्यादि । एवमेव हि शक्रः वशाननु यथावशम्, स्वतन्त्रो वर्त्तत इत्यर्त्थः ॥ ✻ ॥

आयो इत्यायतिः । उपो इतिवदतिशयार्त्थ ओकारः । 'ओ अतिशये' इति सूत्रम् । आयो जानातीत्यायोमन्यः । समीपस्थमपि जानातीत्युपोमन्यः । अन्येषामिन्द्रियाणां पराङ्मुखत्वान्न बाह्यान्तरं जानन्ति । अयं त्वान्तरमप्यापरोक्ष्येण पश्यति । अयनेन गमनेन प्राप्यं दूरस्थमायो इति वा । 'मनु अवबोधने' इति धातोर्म्मन्युरिति ज्ञानी । बाह्यज्ञाय ज्ञानिन आन्तरज्ञाय ज्ञानिन इत्यभ्यासोऽतितात्पर्यार्त्थम् । एवंविधं मद्गतं त्वामुद्दिश्यैवोपेहि । विश्वध विश्वधारक । समीपतो दूरतश्च त्वां मन्यमानाय मह्यं मन्यवे ज्ञानाय मामुपेहीति वा–

'समीपतो दूरतो ज्ञं त्वामुद्दिश्यैव मद्गतम् ।
'एहि विष्णो न मे शक्तिस्त्वदाह्वाने हि मामुप ।
'इति ब्रह्माऽस्तुवद् विष्णुं तन्नाभ्युत्थितपद्मगः' इति पाद्मे ॥

'समीपे दूरतश्चैव ध्यायन्तं त्वां सदा विभो ।
'मामेहि ज्ञानदानायेत्याह गाधिसुतो हरिम्' इति स्कान्दे ॥ ✻ ॥

'ओतमस्मिन् जगद् यस्मादोमित्युक्तो हरिः सदा ।
'तमेतं जगदाधारं यतयः समुपासते' इति मान्यसंहितायाम् ॥ * ॥

* * *

'इन्द्रो वा एताभिर्म्महानात्मानं निरमिमीत' इत्यस्याप्युक्त एवार्त्थः । निर्म्माणं नामाऽत्मनस्तद्व्याख्यानेन ख्यापनम् । नह्यन्यथा तासां करणत्वं भवति–

'यस्तद् वेद स पितुष्पिताऽसत्' इति च श्रुतिः । 'त्रीणि पदा निहिता गुहासु यस्तद् वेद स पितुष्पिताऽसत्', 'स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान् न विचेतदन्धः । कविर्य्यः पुत्रः स इमा चिकेत यस्ता विजानात् स पितुष्पिताऽसत्' इत्यादिश्रुतिभ्यो विज्ञानमेव हि तन्निर्माणम् । 'इन्द्र एकं सूर्य्य एकं जजान वेनादेकं स्वधया निष्टतक्षुः' इत्यादेर्विज्ञापनं वा ॥ * ॥

* * *

'प्रचेतन', 'प्रचेतय', 'आयाहि पिब मत्स्व', 'क्रतुश्छन्द ऋतं बृहत्', 'सुम्न आ धेहि नो वसो' इत्युपसर्ग्गाः । अंशा अप्यंश्यपेक्षयोपसर्ग्गा भवन्ति । उपसृष्टत्वादुपसर्ग्गाः–

'अन्तर्ग्गतं बहिर्ग्गतं च द्विधा स्यादुपसर्ज्जनम् ।
'हस्तवद्धेतिवच्चैव पदानां चोपसर्ग्गवत्' इति शब्दनिर्ण्णये ॥

'अधत्तान्यं जठरे प्रेमरिच्यत प्रचेतन' (१) 'दाता राधः स्तुवते काम्यं वसु प्रचेतय'(२) 'अस्माकं बोधि चोदिता आ याहि पिब मत्स्व' (३) 'तं त्वा परि ष्वजामहे क्रतुश्छन्द ऋतं बृहत्' (४)'या ते रातिददिर्वसु सुम्न आ धेहि नो वसो'(५) इत्युपसृजति ॥ ✻ ॥

✻ ✻ ✻

अशेषमहानाम्न्यर्थस्मरणपरिज्ञानपूर्वकमुपसर्गसंयोजनं कर्त्तव्यमित्येतदर्थत्वेन महानाम्नीप्रशंसा क्रियते। अन्यथा तावन्मात्रप्रशंसामृतेऽशेषमहानाम्नीप्रशंसाया व्यर्थत्वात् । त्र्यृचविभागेन; 'विदा मघवन्–', 'तमूतये–', 'नूनम्–' इति वा तिस्रो महानाम्न्यः–

'प्रथमा या महानाम्नी तद्वाच्यः पार्थिवो हरिः ।
'द्वितीयाया आन्तरिक्ष्यस्तृतीयाया द्युगः प्रभुः' इत्यृक्संहितायाम् ॥
'त्र्यृचास्तिस्रो महानाम्न्यः पञ्चर्च्चा प्रथमा परा ।
'त्र्यृचा द्व्यृचा च निगदैस्तार्त्तीया सप्तभिर्य्युता ।
'इति त्रेधा विभागः स्याज्जपद्ध्यानादिकर्म्मसु' इति च ॥
'त्रिलोकगेन हरिणा निर्म्मितः षोळशी क्रतुः ।
'एवं ज्ञात्वा हरिं तं च कर्म्म कुर्वन् न जायते' इति प्रवृत्ते ॥

'एवा ह्येवैवा हि' इत्यस्यात्र्थोऽप्युक्तावधारणरूपत्वात् पूर्वोक्तार्त्थपरिज्ञानं विना न स्मर्त्तुं शक्यते । एवं निर्म्मितेन षोळशिनर्द्धो भवत्येवंवित् ॥ ✻ ॥ ✻ ॥

प्रप्र वः । हे ऋत्विजः प्रजा वा, वस्त्रिष्टुभमिषं त्रिष्टुभाख्यमन्नमिन्द्रः परमेश्वरः सोमायाऽविवासति । पुरन्ध्या धिया अशेषप्राणिदेहाश्रयया स्वबुद्ध्या प्रप्र, प्रकर्षेणप्रकर्षेण, अतितरां शस्यमानत्रिष्टुप् प्रीतिं करोति सोमपानार्थमित्यर्थः । मन्दद्वीराय, तस्य वीरस्य परमेश्वरस्य मदं करोतीति मन्दद्वीरः सोमः । नत्वात्मप्रयोजनाय प्रीतिं करोति, किन्तर्हि? वो मेधसातये, वो यज्ञसिद्ध्यर्थम् । व इति गुरुत्वादीश्वरं प्रत्येव वा बहुवचनम् । तदा वः अन्नं त्रिष्टुभं वो मेधसातये, भवद्दैवत्ययज्ञसिद्ध्यर्थं भवान् प्रप्राऽविवासतीत्यर्थः ॥ * ॥

ओदतीनाम् उन्दनकर्त्रीणां वः अपाम्, भवदीयानां पतिं वः पुरुषं प्राणं नदनकर्त्तारं प्रति इषुद्ध्यसि पतिर्भवसि । सृष्टौसृष्टौ योयः प्राणस्तन्तं प्रति पतिर्भवसीति नदमिति पुनर्वचनम् । योयुवतीनां गमनशीलानाम्, आकाशे पोप्लूयमानानाम्, अघ्न्यानां धूमरूपेणादाह्यानाम्, रेतोरूपेणाजराणां वा, धेनूनां जगत्पोषकाणाम् । 'धिनु पुष्टौ' इति धातोः । 'ता नदेन विहरति–' इत्यादिश्रुतेः । पयसा सेचकानां देशाद्देशान्तरगमनशीलानां अघ्न्यानां हन्तुमयोग्यानां धेनूनां गवां पतिं वायुं प्रति इषुध्यसीति वा । 'वायुर्वाव गवां पतिः' इति श्रुतेः । धेनुशब्दाच्च । ओदतीनां भक्त्या सेचकानाम्, योयुवतीनां अतिशयेनाऽत्मतत्वावगमकानाम्, अघ्न्यानां नित्यानाम्, धेनूनां धर्म्मार्त्थकाममोक्षपोषकाणां वाचां पतिं वायुं प्रति पतिर्भवसीति वा–

'वाचं धेनुमुपासीत । तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकार इति । तस्या द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च हन्तकारं मनुष्याः स्वधाकारं पितरः । तस्याः प्राण ऋषभो मनो वत्सः' इत्यादिश्रुतिभ्यः ॥ ❈ ॥

ताः पृश्नयः आपो गावो वाचो वा, अस्य सूददोहसः प्राणस्य वायुस्थस्य परमेश्वरस्य सोमं श्रीणन्ति । अद्भिर्हि संसृष्टो भवति सोमः, पयआदिना वा श्रितो भवति, मन्त्रैर्वा गृह्यते । 'अथ सूददोहाः प्राणो वै सूददोहाः' इति श्रुतेश्च । शोभनमुदं कर्म्म ज्ञानं वा दोग्धीति सूददोहाः । उदेत्युच्चो भवत्यनेन पुरुष इत्युदं ज्ञानादि । 'मनो वाव सोमः' । तद् वाचः श्रीणन्ति स्वार्थैः । प्रश्नयोग्यत्वात् पृश्नयो वाचः । प्रशंसनरूपत्वात् प्रशंसनीयत्वाद् वा । प्रशंसनीयत्वमेवापां गवां च । देवानां जन्मनि यज्ञे । तत्र हि तेषामभिव्यक्तिः पूर्वम्, ज्ञाने वा । विशः प्रजाश्च श्रीणन्ति । मुख्यतस्ता एव श्रीणन्तीति चशब्दवर्ज्जनम् । दिवस्त्रिष्वारोचनेषु आदित्यचन्द्रविद्युत्पर्य्यन्तं स्थितानां देवानां जन्मनि–

'यज्ञो वै देवजन्म तत्र हि देवाः प्रादुर्भवन्त्या सूर्य्याचन्द्रमसावा विद्युतं ते वै लोकानधिश्रिताः' इति श्रुतेः । 'द्यौर्वाव विद्युत् तत्पतिं वायुमुपगम्य तेनैव परमुपगच्छति सैषा ब्रह्मलोके विराजते' इति श्रुतेर्द्यौरेव विद्युत् ॥ ❈ ॥

अर्च्चनं यज्ञादि । प्रार्च्चनं ज्ञानद्ध्यानादि– 'श्रेयान् द्रव्यमयाद् यज्ञाज्ज्ञानयज्ञः परन्तप' इति भगवद्वचनात् । प्रिययज्ञा अर्च्चत, प्रियज्ञानाः प्रार्च्चत । पुत्रकाः अल्पज्ञा अप्यर्च्चत–

'न बुद्धिभेदं जनयेदज्ञानां कर्म्मसङ्गिनाम् ।
'जोषयेत् सर्वकर्म्माणि विद्वान् युक्तः समाचरन्' इति च ॥

उतशब्दात् ज्ञानिनामप्यर्च्चनं युक्तं स्वाश्रमानुसारेणेति– 'अधा ते विष्णो विदुषा चिदर्द्ध्यः स्तोमो यज्ञश्च राद्ध्यो हविष्मता' इति श्रुतेः । किं तदर्च्चनीयम्? धृष्णु, धृष्टं परं ब्रह्म, वासुदेवाख्यम् । पुरं देहं नार्च्चत–

'प्रत्युद्गमप्रश्रयणाभिवादनं विधीयते साधु मिथः सुमद्ध्यमे ।
'प्राज्ञैः परस्मै पुरुषाय चेतसा गुहाशयायैव न देहमानिने'
इति भागवते ॥

'सदेहमानिहरये प्रणमेत् केवलाय वा ।
'न देहाय न तन्मानपराय च कथञ्चन' इति व्यासस्मृतौ ॥

पुनरर्च्चतेति तात्पर्य्यार्त्थे ॥ * ॥

गर्ग्गरगोधापिङ्गादीनां घोषा अपि नादव्यञ्जकत्वेन भगवद्वाचका एवेत्याह– अव स्वरातीत्यादिना । एतत् समस्तमिन्द्रायैवेत्यर्त्थः । ब्रह्म वेदो विशेषत इन्द्रायैवोद्यतः । गर्ग्गर इति पादभूषण-महामत्रक-दधिपात्र-हस्तिहस्तानां नाम । पिङ्गा चकोरी । अवपरीत्यल्पाधिक्यादिविशेषोऽपि तद्वाचक एवेति ज्ञापनाय । चनिष्कददित्यनुकारशब्दः । सनिष्वणदित्यतिशयार्त्थे–

‘ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव’ इति च श्रुतिः ॥

‘दध्नो मथनशब्दश्चाप्यन्तर्नादस्वरूपतः ।
‘भीषकत्वं हरेर्ब्रूयादन्तर्नादो हि भीषणे ॥

‘गजबृंहितमप्येवं धिक्कारसहितं वदेत् ।
‘स्वरितेन समायोगाद् धिक्कृतौ स्वरितो यतः ॥

‘महामत्रं जलाद्यैश्च युक्तमेतादृशं वदेत् ।
‘पादभूषा च धिक्कारं तत्कृतं स्वरितो वदेत् ॥

‘अद्भुतत्वं हरेर्वक्ति पिङ्गा कण्ठगशब्दवत् ।
‘तामेवाद्भुततां वक्ति गृहगोधा पराऽपिच’ इति शब्दतत्वे ॥ ✻ ॥

यच्च एन्यः नद्यः आपतन्ति तद्घोषश्चेन्द्रवाचकः–

‘नदीसमुद्रघोषाश्च नादत्वाच्छ्रैष्ठ्यवाचकाः ।
‘नादो हि श्रैष्ठ्यवाची स्यादेवं घोषाः परेऽपि च’ इति च ॥

तदर्थं च नद्यः आपतन्ति–

‘भूतादिभूतोऽम्बुनिधानमद्ध्ये भूत्वा हरिः सर्वहरोऽतिधाम्ना ।
‘अगाधमम्भो विदधाति भस्म यो बाडबाग्निर्नृहरिर्विचिन्त्यः’
इति वैहायससंहितायाम् ॥

सुदुघाः सुष्ठ्वपां दोहनकर्त्र्यः । स्फुरणापगमनमासां नास्तीत्यनपस्फुरः, नित्यचलनस्वभावाः । अपगतस्फुरणत्वेन सोमं गृभायत । अचलत्वेन मनो वा ॥ ✻ ॥

व्यतीन् विशेषेणाधिकान् देवान्, अफाणयत् विस्तारयामास । दाशुषे यजमानाय, तत्समीपे । 'फण विस्तारे' इति धातोः । सुयुक्तान् सुयोग-रतान्–

'विशेषेणाधिकत्वेन व्यतयो देवताः स्मृताः ।
'नित्ययोगरताश्चैव नारायणपरायणाः ॥

'त एव चेन्द्रियात्मानस्तान् विस्तारयतीश्वरः ।
'मनआदीन्द्रियाणां तु शक्तिविस्तार एव हि ।
'विस्तारो देवतानां स्याद् भक्तेषु हरिणा कृतः'

इति प्रकाशसंहितायाम् ॥

'चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत्' इति च श्रुतिः । 'स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्ण्णाभ्यां भूरि विश्रुवम्' इति च ॥

'न देवा यष्टिमादाय रक्षन्ति पशुपालवत् ।
'यं तु रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम्' इति च भारते ॥

तक्को जगत्कर्त्ता । 'तक निर्म्माणे' इति धातोः । 'न वर्त्तवे प्रसवः सर्ग्गतक्तः' इत्यादिप्रयोगाच्च । नेता चाशेषस्य । तदेव वपुः सः । यत्तत् जगत्कर्त्तृनेत्तृ-रूपम्–

'देहदेहिविभागश्च न क्वचित् परमेश्वरे ।
'गुणतस्तद्विभागो वा नेह नानेति हि श्रुतिः' इति च पाद्मे ॥

'तद् विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद् विभाति' ॥

'सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः ।
'ज्ञानज्ञानः सुखसुखः स विष्णुः परमाक्षरः' इत्यादिश्रुतेश्च ॥

'विशुद्धविज्ञानमरीचिमालया विचित्ररत्नप्रकरप्रकाशया ।
'प्रकाशिताशेषजगत्स्वरूपया प्रभुः सदा ह्लादतनुर्विभूषितः'
इति पुरुषोत्तमसंहितायाम् ॥

उपमा उपमायाम्, उपमाविषये, अमुच्यत त्यक्तोऽभवत्, निरुपम इत्यर्थः ॥

'अल्पाक्षरेण शक्येऽपि वक्तुं बह्वक्षरं यदि ।
'उक्तस्याऽधिक्यमेवात्र निषेधेऽशेषतो भवेत्' इति च शब्दनिर्ण्णये ॥

॥ ✻ ॥

विश्वान् द्विषः अज्ञानपापादीन् अतीत्य शक्तो विष्णुः स्वभक्तानतिवहत्येव हि–

'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्' ।

'तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ।
'भवामि नचिरात् पार्थ मय्यावेशितचेतसाम्'

इत्यादिना प्रसिद्धमुशब्देनाऽह ॥

द्विषोऽतीत्यतिशयेनाऽत्मानं प्रत्योहत इत्यतिशब्दद्वयार्थः । ओदनम्, उन्दतेः कर्म्म, अभिनत् । भगवान् कानीनो बादरायणः, परः परात्मा, गिरैव पच्यमानं परिपाककाले–

'संश्लेषादोदनं कर्म्म पच्यमानं गिरैव हि ।
'अभिनद् भगवान् व्याप्तः स्वभक्तानामशेषतः'

इति व्याससंहितायाम् ॥ ✻ ॥

अर्भकइव स्थितः । नवं रथमध्यतिष्ठत् । कुमारकः कुत्सितमारकः । अर्भकइव सूक्ष्मदेहः, पूवम्पूर्वं देहं परित्यज्य नवन्नवं देहमध्यतिष्ठज्जीवमादाय–

'जीवदेहं परित्यज्य सह जीवेन चेश्वरः ।
'जीवस्यान्यच्छरीरं च समुत्पाद्य विशत्यजः' इति मान्यसंहितायाम् ॥

कुमारक इवार्भकः सूक्ष्मदेह इति वा । अर्भकः सूक्ष्मदेहोऽपि न कुमारक इति वा । सपक्षत् परिपक्वज्ञानादिकमकरोत् । महिषं महान्तं ब्रह्माणम् ।

मृगयन्तं स्वात्मानम् । पित्रे स्वस्मै, मात्रे लक्ष्म्यै च, विभुक्रतुं पूर्ण्ण-ज्ञानम् । पितृमातृविषये पूर्ण्णज्ञानं पुनःपुनः पूरयामासेत्यर्त्थः–

‘ज्ञानपूर्ण्णं विधातारं मोक्षदानेन केशवः ।
‘स्वपुत्रं पूरयामास महिषं महतां महान्’ इति प्रवृत्ते ॥ ✻ ॥

यथास्थिताः प्रज्ञाताः । इतस्ततः संयोजनं विना यथास्थितशंसनं पथः प्राप्तिः ॥ ✻ ॥

✻ ✻ ✻

व्याप्तो विशेषेणाऽपन्नः । अविहृतमसंसृष्टम् । कृच्छ्रादयथावस्थितशंसननिमित्ताद् दुःखादवाग्गतिं गतश्रीकतामेव न प्राप्नुयाम्–

‘विलोमः शत्रुजयकृत् संसर्ग्गः पापनाशनः ।
‘यथास्थितः श्रीकरः स्यात् स्वाद्ध्यायः शंसनेऽपि च’ इति प्रवृत्ते ॥
‘गतश्रियः श्रियोऽहानिं पापहानिं परस्य च ।
‘संसर्ग्गश्छन्दसां कुर्य्याच्छ्रियो वृद्धिं यथास्थितः’ इति स्वाद्ध्यायतत्वे ॥
‘किञ्चित्त्वे चोभयत्वे च संशये सदृशे तथा ।
‘इवशब्दः प्रयुज्येत न्यक्कारेऽपिच पण्डितैः’ इति च शब्दनिर्ण्णये ॥

अतो गतश्रीत्वसंशयेऽपीत्यर्त्थः । इतस्ततो विशेषेण संहृतं संयोजितं विहृतम् ॥

'पापानां व्यतिषक्तत्वाद् व्यतिषक्तं विनाशकम् ।
'धनस्याव्यतिषङ्गेण व्यतिषङ्गोऽविनाशकः ॥

'सदृशं सदृशस्यैव यतः स्याद् प्रविनाशकम् ।
'तथाऽप्यप्राप्तनाशस्य धनस्य बलवत्त्वतः ॥

'शक्नुयान्न विनाशाय पापस्येच्छासमेधितम् ।
'संसृष्टं स्यात् विनाशाय नहीच्छा धनसङ्क्षये' इति स्वाद्ध्यायतत्वे ॥

व्यतिषक्तत्वं च मोक्षे विद्यत इत्युभयार्त्थ इवशब्दः । एवम्भूतेन शंसनेन पाप्मानमपहन्ति । शमलं रागादिकं च । पापस्य पृथगुक्तेः–

'शमलं पापमुद्दिष्टं रागद्वेषादिकं तथा ।
'अपराधश्च शमलं मलं च शमलं विदुः' इति शब्दनिर्ण्णये ॥

य एवमुपास्ते सोऽपि पाप्मानमपहते–

'ऋक्षु संसृज्यमानासु प्रोच्यमानं जनार्द्दनम् ।
'पुंसंसृष्टस्य पापस्य निहन्तारं विशेषतः ॥

'तत्प्रसादेन मुक्तस्य पापासंसृष्टतामपि ।
'द्ध्यायन् कर्म्माणि कृत्वाऽपि मुच्यते सर्वपातकैः'

इति प्रवृत्ते ॥ * ॥

* * *

नचैवमादिवाक्यानां स्वार्त्थे प्रामाण्याभावः । सिद्धार्त्थे प्रामाण्यस्य साधितत्वात् । अविरोधाच्च । न च बह्वर्त्थेषु तात्पर्य्यकल्पने कल्पना-गौरवम् । वचनेनैव प्रतीयमानत्वादर्त्थस्य कल्पनाभावात् । नच वाचनिकार्त्थस्तात्पर्यार्त्थ इति विशेषः । तन्मानाभावात् । यत्र वाचनिकादन्य-स्तात्पर्य्यार्त्थः प्रतीयते लौकिकवाक्येषु न तत्र साक्षात् वचनं बोधकम् । वचनलिङ्गाऽनुमा हि सा । विरोधादमुख्यवृत्तिर्वा आप्तत्वनिश्चये । आप्तत्वा-निश्चये प्रमाणमेव न भवति । वेदवाक्यस्य तु वाचनिकार्त्थं विना नैवान्यो युज्यते । वाचनिकानां तु बहूनामप्यविरोधे स्वीकार्य्यता–

'स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि' इति ।

'वानात् सूतेर्द्देवनाद् वासुदेवो वासात् द्युतेश्छादनात् क्रीडया
च । बलादसुत्वात् दातृतो वर्त्तनाच्च तं वासुदेवं प्रवदन्ति वेदाः'
इत्यादि सौकरायणश्रुतौ ।

मोक्षेऽपि सुप्तिरस्तीत्याशङ्कानिवृत्त्यर्त्थमेवान्यतरपदम् ॥

'रूढियोगौ विना कश्चिन्नैवार्त्थो वेदगो भवेत् ।
'तत्रापि यौगिको मुख्यः सर्वत्रास्ति स वैदिके ॥

'अनवस्थानिवृत्त्यर्त्थं यौगिके रूढिकल्पना ।
'ज्ञाते विशेषविज्ञानं व्यवहारोऽपि रूढितः' इति ब्रह्मतर्के ॥

वाचनिकमर्त्थं परित्यज्य नियोगार्त्थकल्पने श्रुतहानिरश्रुतकल्पनेति सर्वदोषाधिकौ तस्य व्यर्त्थमापद्येते । एवं च वदतो विधिशब्दा निरर्त्थकाः सिद्धार्त्था वा, सिद्धशब्दा वा स्वार्त्थे प्रमाणभूता इत्युक्ते किमुत्तरम्? नच कारणं किञ्चिद् वाचनिकानां बहूनामप्यर्त्थानां त्यागे । प्रतीयमाने तु विरोधे तदन्योऽर्त्थः स्वीकार्य्यो वाचनिक एव । सोऽपि वाचनिक एवेत्यपि तत एव सिद्ध्यति–

'मुख्यार्त्थानां च सर्वेषां तारतम्यं तु विद्यते ।
'तत्रापि परमो मुख्यो वाच्योऽशेषरवैर्हरिः ।।

'तत्तन्मुख्याविरोधेन तदन्यार्त्थस्य सङ्ग्रहः ।
'स्वतो मुख्यविरोधे तु त्याज्योऽन्योऽर्त्थोऽखिलेष्वपि ।
'इति सर्वत्र नियमः शब्दार्त्थज्ञानभूमिषु' इति च ।।

नच क्रियायामेव प्रयोजनं न सिद्ध इति युक्तम् । ज्ञानमात्रेऽपि महाप्रयोजनदृष्टेः पितृजीवनादिवाक्ये । आह च स्वयं भगवान्–

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
'क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।।

'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
'यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वरः ।।

'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
'अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥

'यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
'स सर्व्वविद् भजति मां सर्व्वभावेन भारत ॥

'इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
'एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत' इति ॥

'श्रेयान् द्रव्यमयाद् यज्ञाज्ज्ञानयज्ञः परन्तप' इति च ॥

'ध्यानं त्वखिलकर्म्मभ्यो ध्यानाच्च ज्ञानमुत्तमम् ।
'न ज्ञानसदृशं किञ्चित् पुरुषार्त्थप्रसिद्धये' इति च प्रवृत्ते ॥

'दूरेण ह्यवरं कर्म्म बुद्धियोगाद् धनञ्जय' इति च ॥

'अशेषकर्म्मपूगोऽपि न विष्णुध्यानलेशभाक् ।
'तच्च ध्यानं हरेर्ज्ञानकोट्यंशाय न पूर्य्यते' इति कर्म्मविवेके ॥

'तमेवं विद्वान् अमृत इह भवति
'नान्यः पन्था अयनाय विद्यते' इति श्रुतिः ॥

नच कर्म्ममात्रे पर्य्यवसितिर्व्वेदस्य । सुखज्ञानस्यैव प्रयोजनत्वात् । अतः सिद्धस्यैव प्रयोजनत्वम् । प्रशंसादीनां च तात्पर्य्यं वाचनिकार्त्थात्यागेनैव कथितं स्वयं भगवता– 'भाक्तं वाऽनात्मवित्त्वात् तथाहि दर्शयति' इति ॥

तस्माद् विरुद्धवत् प्रतीयमानानि प्रशंसादीनि ज्ञानसहकार्य्यपेक्षया योजनीयानि । पुराणादीनां तु श्रुत्यादिविरोधे गौणोऽप्यर्थो युज्यते–

‘कुहकं चेन्द्रजालं च विरुद्धाचरणानि च ।
‘दर्शयित्वा जनं सर्वं मोहयाऽशु महेश्वर’ इति वाराहे ॥ * ॥

* * *

ब्रध्नस्य सूर्य्यस्य विष्टपं स्वर्गं उद्गन्वहि इन्द्रोऽहं च । यत्तदिन्द्रगृहं ब्रध्नविष्टपं मध्वः पीत्वा तत्र सचेवहि सुखमनुभवाव । सख्युः इन्द्रस्य त्रिस्सप्तस्थानेषु–

‘एकविंशति दिव्यानि स्थानानि दिवि चक्रिणः ।
‘वज्रिणो वाऽपि तद्भक्तैर्भुज्यन्ते तानि याज्ञिकैः’ इति प्रवृत्ते ॥ * ॥

* * *

पूर्वान् प्रातःसवनगान् सोमानपाः । हरीनिन्द्रियाणि वर्त्तयति हरिभिर्वर्त्तत इति वा । इदं माद्ध्यन्दिनं सवनं ते केवलम् । अथो इत्यत्यर्थान्तरम् । मधुमन्तं सोमं जठर आवृषस्व सिञ्च, ममद्धि च । सत्रा अस्मत्त्राणेन सह ॥ * ॥

पीतशब्दवत् । अपूर्वपानत्वात् तदेव पानं मुख्यत इति पीतशब्दः । इन्द्रस्य केवलत्वात् केवलं माद्ध्यन्दिनं सवनम् । ममद्धीति तृतीयसवनम् । तत्र

हि मदो विशेषतो भवति, पूर्त्तेः । इति सवनत्रयरूपता षोळशिनः । वृषण्वत् वृष्ण इन्द्रस्य विशेषतः प्रियत्वात् । एवं चतूरूपता षोळशिनः । राध्नोति ऋद्धो भवति ॥ * ॥

* * *

विहृतपक्षे तु– 'पादान् व्यवधायार्द्धर्चशः शंसेत् पूर्वासां पूर्वाणि पदानि गायत्र्यः पङ्क्तिभिः पङ्क्तीनां तु द्वेद्वे पदे शिष्येते ताभ्यां प्रणुयादुष्णिहो बृहतीभिरुष्णिहां तूत्तमान् पादान् द्वौद्वौ कुर्य्याच्चतुरक्षरमाद्यं द्विपदाश्चतुर्द्धा कृत्वा प्रथमां त्रिष्टुभोत्तरा जगतीभिरुत्तमायाश्चतुर्थ-मक्षरमन्त्यं पूर्वस्याऽद्यमुत्तरस्यानुष्टुभमतिच्छन्दस्स्ववदद्ध्यात् द्वितीयतृतीययोस्तृतीययोः पादयोरवसानत उपदध्यात् प्रचेतनेति पूर्वस्यां प्रचेतयेत्युत्तरस्यामुत्तरास्वितरान् पादान् षष्ठान् कृत्वाऽनुष्टुप्-कारं शंसेत्' ॥ (आश्व.श्रौ.सू-अ.६.खं.३)

महानाम्नीनां पञ्चाक्षरानुपसर्गानुपसृजत्येकादशाक्षरेषु पादेषु 'एवाह्येवैव अपाः पूर्वेषां हरिवः सुतानाम् , एवैवाहीन्द्रँ अथो इदं सवनं केवलं ते, एवाहि शक्रो ममद्धि सोमं मधुमन्तमिन्द्र, वशी हि शक्रः सत्रा वृषञ्जठर आवृषस्वेति' ॥ * ॥

(आश्व.श्रौ.सू.अ.६.खं.३)

* * *

भगवद्भक्तिज्ञानवैराग्यपूर्वकं च कर्म्म कर्त्तव्यम्–

‘इष्टापूर्त्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।
‘नाकस्य पृष्ठे ते सुकृतेऽनु भूत्वा इमं लोकं हीनतरं वाऽऽविशन्ति’ ॥

‘नैष्कर्म्म्यमप्यच्युतभाववर्ज्जितं न शोभते ज्ञानमलं निरञ्जनम् ।
‘कुतः पुनः शश्वदभद्रमीश्वरे नचार्प्पितं कर्म्म यदप्यकारणम्’ ॥

‘यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
‘स्वकर्म्मणा तमभ्यर्च्च्य सिद्धिं विन्दति मानवः’॥

‘त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्ग्गतिं प्रार्त्थयन्ते ।
‘ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान्’ ॥

‘मयि सर्वाणि कर्म्माणि सन्न्यस्याद्ध्यात्मचेतसा ।
‘निराशीर्न्निर्म्ममो भूत्वा युद्ध्यस्व विगतज्वरः ॥

‘ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
‘श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्म्मभिः ॥

‘ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
‘सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः’ ॥

'तपस्विनो दानपरा यशस्विनो मनस्विनो मन्त्रविदः सुमङ्गलाः ।
'क्षेमं न विन्दन्ति विना यदर्प्पणं तस्मै सुभद्रश्रवसे नमोनमः' ॥

'एष उ एव दाश्वान् य एनमेवं वेद',

'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरं भवति',

'परं भावमजानन्तो मम भूतमहेश्वरम् ।
'मोघाशा मोघकर्म्माणो मोघज्ञाना विचेतसः' ॥

'सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
'इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥

'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
'मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे' ॥

'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम् ।
'तिष्ठमानस्य तद्विदः' इत्यादिश्रुतिस्मृतिभ्यः ॥ * ॥

* * *

नमो नारायणायाजभवशक्रोष्णरुङ्मुखैः ।
सदा वन्दितपादाय श्रीपाय प्रेयसेऽधिकम् ॥

* * *

'यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
'बट् तद् दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
'वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-
'र्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥ * ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादरचितः**
**खण्डार्थनिर्णयः समाप्तः[१] ॥**

—०—

१. श्रीहृषीकेशतीर्थपरम्परागतं पीठमधिष्ठितैः श्रीरघुवर्यतीर्थैः लिखिते प्राचीनकोशे खण्डार्थनिर्णयस्यान्ते पद्यमेकं लिखितम् । तद् यथा–

'दशप्रकरणान्येवं दशप्रमतिराण्मुदे ।
'मूलकोशावलम्बेन रघुवर्योऽलिखद् यतिः' इति ॥

श्रीमदानन्दतीर्थभगवत्पादरचितः

# खण्डार्थनिर्ण्णयः

गोविन्दपण्डिताचार्य्यरचितया

खण्डार्थचन्द्रिकया सहितः

# खण्डार्थचन्द्रिका

शफरति कमठति किटयति नरहरयति पटुवटयति सुरगणमवितुम् ।
वहति स्वधितिं धनुषं मुरळीं शममश्वरणं दशधा भवितुम् ॥ * ॥

दशधिषणपूजितं तं दशावतारवन्तमवन्तम् ।
सन्तं जगति वसन्तं वन्दे सन्देहगुहं भगवन्तम् ॥ * ॥

खण्डार्थवादविषये बहवः पफक्कुः[१]
केचित् पुनः कुमतयः कुपथेन चेरुः ।
धन्याः कथश्चिदपि साधितसाधुमार्गाः
श्रीपूर्णबोधभगवत्करुणाकटाक्षैः ॥ * ॥

यदधीतं तदधीतं यदनधीतं तदप्यधीतमिव मे ।
यत्पुरुकरुणाबलतस्तं वन्दे मद्गुरुं मध्वम् ॥ * ॥

ऐतरेयब्राह्मणस्य
षोडशेऽध्याये यौ तृतीयतुरीयौ ।
खण्डौ तद्व्याख्यानपरं खण्डार्थनिर्णयं नाम
मध्वकृतमुपन्यासं किञ्चिद् विवरीषामि मुदे विदुषाम् ॥ * ॥

यस्य किलार्थविशेषान् स्वादंस्वादं समुत्थरोमाञ्चः ।
किञ्चिद् व्यञ्जिजिषामि प्रीत्यै श्रीमध्वमाधवयोः ॥ * ॥

---

१. फक्क नीचैर्गतौ ।

व्याचख्याविति शृणुमः खण्डार्थनिर्णयं नरहरितीर्थः ।
श्रीमध्वमुखादधिगततत्वो दद्यात् स बुद्धिशुद्धिं नः ॥ * ॥

प्रनष्टा तत्कृता टीका दौर्भाग्यात् तत्ववादिनाम् ।
नैयून्यमेतन्निर्मार्ष्टुं यथाशक्ति प्रयत्यते ॥ * ॥

आनन्दतीर्थो भगवान् स्फोरयत्वनिशं मम ।
रहस्यं मन्त्रवर्णानां दुर्गमं विदुषामपि ॥ * ॥

अथातः खण्डार्थनिर्णयं व्याख्यास्यामः ॥

कथं खण्डार्थनिर्णयः? ऐतरेयब्राह्मणे षोडशेऽध्याये तुरीयखण्डस्य तत्पूरकतया भागतस्तृतीयखण्डस्य, ऐतरेयारण्यके च महानाम्नीखण्डस्य यत्रार्थनिर्णयः क्रियते । खण्डानामर्थनिर्णयोऽत्रेति । पूर्वमीमांसकानामपार्थखण्डनपूर्वकं यथावदर्थनिर्णयाच्चायं खण्डार्थनिर्णयः । कर्मकाण्डीयखण्डानां योऽर्थः, 'मां विधत्तेऽभिधत्ते माम्' इति वचनात्, नारायणाख्यः, तस्य निर्णयाच्च ॥

कुतः केवलमेषां खण्डानाम्? शृणु तत्रेतिहासम् । तथाहि श्रीमध्वविजये–

स ग्रामं परमपि यात उच्चभूतिं विद्वांसः क्व कुहरकूपदर्दुराभाः ।
इत्यूचे मदमतिमानिनोऽखिलज्ञम्मन्यस्य क्षपयितुमेव तज्जनस्य ॥

सर्वज्ञोऽप्ययमधिकं न यज्ञभङ्गीं संवित्ते यतिरिति बद्धनिश्चयोऽसौ ।
आभान्तं परिषदि मत्सरादपृच्छत् कर्मार्थश्रुतिगहनार्थखण्डभावम् ॥

छन्दोभिश्च्युतरससङ्ग्रहप्रवीणान् षष्ठेऽह्नि प्रतिविहितान् प्रजाधिपेन ।
नाराशंस्यचरमचारुमन्त्रभेदानूचेऽसौ तमभिदधद् विसंशयांशः ॥

पाण्डित्यं परममवेत्य तस्य तादृक् सङ्घर्षक्षुभितमना विपक्षसङ्घः ।
नार्थः स्यादयमिति वर्णयन्नथ त्वं तं ब्रूहीत्युरुमतिनोदितोऽद्रवद् द्राक् ॥

सोऽपृच्छत् तमथ महाह्वयोपसर्गा यत्रोक्ता मनुचरणोपसृज्यरूपाः ।
तस्यार्थं वचनचयस्य तं ब्रुवाणः स्थैर्यार्थं सपदि स लेखयाम्बभूव ॥

(१६.४१–४५) इति ॥

अयमत्र खण्डविशेषार्थनिर्णयनिदानभूतः सन्दर्भविशेषः–

अस्ति तौळवमण्डले धर्मस्थळमिति सम्प्रति प्रथितं क्षेत्रम् । तदात्वे यस्य नाम 'कुडुम' इति । समया तस्य जनार्दनाधिष्ठितमस्ति क्षेत्रमेकम् । यस्य प्रतनं नाम 'उजेर्य' इति । सम्प्रति 'उजिरे' इत्याचक्षते । निकषैव धर्मस्थळस्यापरमस्ति वैद्यनाथक्षेत्रम्, 'कोक्कड' (ಕೊಕ್ಕಡ) इति ख्यातम् । कदाचिद् यात्रामिषेण तेनाध्वना गच्छन्नाचार्यमध्वः कोक्कडग्रामादुजेर्यग्राममाजगाम । अध्युवास च श्रीजनार्दनालयम् ॥

ज्ञात्वाऽपि लोकप्रथितमाचार्यमध्वं स्वग्राममागतं तत्रत्या पण्डितमण्डली कर्मकाण्डप्रकाण्डपाण्डित्यभ्रमदुर्मदान्धा नाययावेव भगवत्पादसन्दर्शनाय– किमसकौ कर्मन्दी जानीयाद् दुर्गमकर्मकाण्डगहनप्रक्रिया इति । तां कर्मकाण्डिमण्डलीमुद्दिधीर्षुराचार्यमध्वः स्वसन्दर्शनार्थमागतान् ग्रामीणान् मुग्धजनानपृच्छत्– 'किं न दृश्यन्तेऽत्रत्याः कर्मकाण्डिनः कूपमण्डूकाः? क्व ते निलिल्यिरे' इति ॥

उदन्तः प्रससार । बिभाय पण्डितमण्डली । अथापि कथमप्ययं जेतव्यः, रक्षणीयं ग्रामगौरवमिति दुराशया बद्धपरिकराः सर्वेऽपि कर्मकाण्डपण्डिताः सभायां प्रवक्तुं प्रवृत्तमाचार्यं श्रोतुमिव समाजग्मुः । अन्तर्भीता अपि कर्मकाण्डकवचिता बहिर्धीरा इव वयमेव जयेमेति भ्रान्ता उदश्वयन् । अहो कथमप्यन्ते भेकाः कूपादुत्पेतुः ॥

अवसाने च प्रवचनस्य कश्चिच्चलकुण्डलो विपश्चिदुत्थाय पप्रच्छ– कर्मार्थे ऐतरेयब्राह्मणे गहनार्थस्य कस्यचित् खण्डस्य भावम् । तावत्पर्यन्तं कर्मवादिभिरपि यथावदविदितं समग्रं खण्डभावं भगवत्पादः सपदि तदा विववार । अन्ते केनाप्यनधिगतार्थस्य कुन्तापसूक्तस्यार्थमपि सविनियोगं व्यवृणीत लीलया । भेकाः सर्वे सर्वज्ञप्रवचनभेका मूका बभूवुः ॥

पराभवोऽपलापं जनयति । ऊजेर्यपण्डिता अपि तमेवापलापं शरणमीयुः, नायं प्रतनानां सम्प्रदायसिद्धः सूक्तार्थ इत्यपलपन्तः ॥

'उच्यतां तर्हि सम्प्रदायागतोऽर्थः' इति प्रत्युवाद वादपटुर्भगवत्पादः । भग्नतुण्डास्ते पण्डिताः, 'नष्टः सम्प्रदायः । किमु शक्यं कर्तुम्' इति वदन्तः समज्यातो निर्जग्मुः किमपि वक्तुमपारयन्तः । अथापि जयाशा न निर्जगाम ॥

दौर्भाग्यमेतदस्माकं यदेतं प्रवचनभागं भगवत्पादो न लेखयाम्बभूव। कुन्तापसूक्तार्थस्तु श्रीमध्वविजयटीकायां यथाभगवत्पादप्रेरणं विवृतोऽस्माभिः ॥



एतावती पूर्वपीठिका । अथ परिषदो निर्गताः पण्डिताः क्वचिदुपह्वरे सम्मिमिलुः । मिलित्वा च परिचचर्चुः– 'कथङ्कारमयं सर्वज्ञः सन्यासी जेतव्यः' इति ॥

किमपि विनिश्चित्य परेद्यवि पुनरायायुः । आयाय च महानाम्नीनामृचामुपसर्जनसङ्गतं प्रश्नमप्राक्षुः ॥

श्रीमध्वस्तैरेवं पृष्टः, 'महानाम्नीनामुपसर्गानुपसृजति' इत्यैतरेयब्राह्मणखण्डस्यार्थं सपदि साधु संवर्णयामास । तदुपयुक्तं किञ्चित् तत्पूर्वखण्डार्थं च । सार्धमेव च ऐतरेयारण्यके समग्रं महानाम्नीखण्डार्थं च ॥

मूकविस्मिता बभूवुः पण्डिताः सर्वे । परस्ताद् बभूवुश्च भगवत्पादशिष्याः ॥

पूर्वदिवसीयकथावदत्रापि मा पण्डिता अपलपिषुरिति, भविष्यतां कर्मकाण्डयाथार्थ्यजिज्ञासूनां यथा यथार्थबोधः स्यादिति लोके मन्त्रार्थस्थैर्यार्थं चापव्याख्याननिरासार्थं च तत्रैव संसदि सपदि तत् प्रवचनं स्वशिष्यैः स लेखयाम्बभूवेति ॥



सोऽयं ग्रन्थरत्नराजस्यास्य पूर्वेतिहासः । अतः खण्डार्थनिर्णय इत्येव प्रतनं समुचितं नाम । ऐतरेयब्राह्मणस्य षोडशेऽध्याये तुरीयखण्डस्य, तदुपबृंहणतया किञ्चित् तृतीयखण्डस्य, तथा आरण्यकान्ते पठितस्य महानाम्नीखण्डस्य चार्थनिर्णयोऽयं ग्रन्थ इति । कर्मनिर्णय इति पाश्चात्यं नाम ॥



अथ वेदब्रह्मणश्च चत्वारि मुखानि भवन्ति– संहिता ब्राह्मणमारण्यकमुपनिषदिति । तत्र व्याख्यातान्यृक्संहितायाश्चत्वारिंशत् सूक्तानि । शृङ्गग्राहिकेयम् । अनयाऽनवद्यया पद्यया समग्रां

संहितामधिजिगांसध्वमिति । मा पुनरपव्याख्यानैः सुपथात् प्रच्योतिष्टेति । दर्शिता दिक् संहिताध्ययनस्य । सम्यग् व्याख्याता दशोपनिषदः । अनेन पथाऽन्या अप्युपनिषदोऽधिजिगांसध्वमिति । अथ खण्डार्थनिर्णयं निबबन्ध । अनया दिशा ब्राह्मणारण्यकान्यधिजिगांसध्वमिति । मा पुनरपव्याख्यानैः सुपथात् प्रच्योतिष्टेति । तेन चतुर्मुखोऽपि वेदः परिचायितो भवति भाविचतुर्मुखेन ॥

* * *

उपनयनानन्तरं गुरुकुलेषु क्रियमाणाः षोडशसंस्कारेषु चत्वारः संस्काराः शिरोव्रतानीत्युच्यन्ते । तानि चेमानि– महाव्रतम्, उपनिषद्व्रतम्, महानाम्नीव्रतम्, गोदानव्रतं चेति । तानीमानि शिरोव्रतानीत्युच्यन्ते । कथं शिरोव्रतानि? उपनयनान्ता दशसंस्काराः पित्रा क्रियन्ते । ततः परं विवाहात् पूर्वं गुरुकुले स्वयमनुष्ठीयमानानीमानि चत्वारि व्रतानि भवन्ति । उपनयनस्य शिरसि क्रियन्त इति शिरोव्रतानि । तत्र तुरीयं गोदानम् । गवां केशानां दानं मुण्डनमिति विवाहसम्बद्धम् । नाध्ययनसम्बद्धम् । आद्यानि त्रीणि गुरुकुलेऽध्ययनसङ्गतानीति मुख्यतः शिरोव्रतानि ॥

अथ महानाम्नीव्रतमिति महानाम्नीनामृचां रहस्यार्थचिन्तनं गुरूपदेशेन ॥

तत्र महाव्रतमिति **‘अथ महाव्रतम्’** इत्यादेरैतरेयारण्यकस्य गुरुमुखादध्ययनम् । येन बृहतीसहस्रमधिगतं भवति । उपनिषद्व्रतमिति मुख्यत ऐतरेयोपनिषदः, ततः सर्वासामप्युपनिषदामध्ययनम् ॥

तदेतेषां त्रयाणामवश्यानुष्ठेयत्वबोधनार्थं विशेषतः महानाम्नीनामृचामर्थविशेषज्ञानपूर्वकं विशेषोपास्यत्वज्ञापनार्थं चेमं ग्रन्थं जग्रन्थ । तेन विस्मृतप्रायं महानाम्नीव्रतं पुनर्ज्ञापयामास ॥

वस्तुतस्तु याज्ञिकानामप्यज्ञातचराणां महार्थानां महद् वैशिष्ट्यं स्पष्टयितुमेवायं प्रबन्धः । यासामृचामेकदेशस्योपसर्जनमात्रेण उपसृष्टानां मन्त्राणां महत्त्वमाधीयते किमु वक्तव्यं तासामृचामिति ॥

**॥ इति ग्रन्थरचनपूर्वेतिहासः ॥**

एवं स्थिते भगवत्पादो ग्रन्थे मङ्गलं निबध्नाति । मङ्गलाचरणमिदमुपन्यासाङ्गतयोक्तं स्यात् । परस्तात् ग्रन्थाङ्गतया निवेशितं वा स्यात्– य इज्यते ॥

**ॐ ॥ य इज्यते विधीशान-शक्र-पूर्वैः सदा मखैः ।**
**रमा-प्रणयिने तस्मै सर्व-यज्ञ-भुजे नमः ॥ * ॥**

यः कर्म, विधीशानशक्रपूर्वैः देवैः कर्तृभिः, मखैः कायिकवाचिकमानसिकैः करणैः इज्यते तस्मै नम इति । न किञ्चिन्मम । सर्वं तवैवेति नमःशब्दार्थः ॥

**यज देवपूजा-सङ्गतिकरण-दानेषु** । देवैः क्रियमाणा देवपूजा देवदेवस्य नारायणस्य पूजेति स्फुटम् । इतरदेवतोद्देशेनान्यैः क्रियमाणा यजिक्रियाऽप्यन्ततः नारायणस्यैव । अन्यदेवतानाम्नां नारायण एव सङ्गतिकरणात् । हविस्त्यागो हि दानम् । तदपि **'केशवं प्रति गच्छति'** ॥

अयं कायिको मखः । स्तुतिरूपो वाचिकः । ध्यानरूपो मानसिकः । सदा मोक्षेऽपि । तथाहि श्रूयते–

**'ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्करीषु ।**
**'ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः'** इति ॥

(ऋ.१०.७१.११)

चतुर्थचरणेन मानसिको यज्ञश्चोक्तः । **'त्वस्तु ब्रह्मा यज्ञस्य मात्रामु विष्णो रूपमेवं विशेषेण पश्यति'** इति हि तत्वमञ्जरी ॥

ननु शक्रादयोऽपीज्यन्ते । इन्द्राय स्वाहेत्याह । इन्द्रमेव यियक्षति । अग्नये स्वाहेत्याह । अग्निमेव यियक्षति । तत् कथं य एक एवेज्यते? आह– विधीशानशक्रपूर्वैः सर्वैरपि शब्दैर्य एवेज्यते विष्णुरिति । तदुक्तम्– **'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति'** इति । इन्द्राय स्वाहेत्याह । इन्द्रान्तर्यामिणे विष्णवे स्वाहेत्याह । अग्नये स्वाहेत्याह । अग्न्यन्तर्यामिणे विष्णवे स्वाहेत्याहेत्यादि ॥

ननु नायं मीमांसकानां पन्थाः । मन्त्रदेवत्या हि ते । येऽपि देवता ऊरीकुर्वन्ति तैरपि राजसतामसैः विधीशानशक्रपूर्वा अपीज्यमाना दृश्यन्ते । नेत्याह– **सर्वयज्ञभुजे** । सर्वे यज्ञाः राजसतामसैः क्रियमाणा अपि, अज्ञानिभिरन्यपरतया क्रियमाणा अपि, तान् सर्वानपि यज्ञानयमेक एव भुङ्क्ते च, भुनक्ति पालयति च । **'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च'** इति ह्याह स्वयं भगवान् ॥

ईशान इति विष्णुरुच्यते । ईशान इति ब्रह्मवायू उच्येते । ईशान इति शिव उच्यते । अत्र क ईशान उच्यते? विधेरनन्तरत्वात् न विष्णुर्न ब्रह्मा । तेनात्र ईशान इति वायुरुच्यते, ईशं शिवमपि प्राणयतीति । ईशान इति शिवश्चोच्यते । ईशान् बाह्येन्द्रियमानिनः इन्द्रादीनपि स्वस्वकर्मणि प्रणयतीति । ईशानश्च ईशानश्चेशानौ । विधिश्च ईशानौ च शक्रश्च पूर्वे येषां कामाहम्प्राणादीनामिति विग्रहः ॥

अथ ईशानपदेन गरुडशेषावप्युक्तौ । विधेः परत्वात् । शक्रात् पूर्वत्वात् । ईशं नारायणं स्वस्कन्ध आदाय नयतीति ईशानो गरुडः । रुद्रत्वे तमोमानितया किञ्चिदिव दूरे स्थितः शेषत्वे भगवतः पर्यङ्कतया स्वनिकटमानीयत इतीशानः शेषः ॥

अथवा विधिर्भविष्यन् वायुरपि विधिशब्देनोच्यते । समकक्ष्याविति गरुडशेषावपीशानशब्देन । कामोऽपि शक्रशब्देन । शक्नोति रमयितुं स्त्रीपुंसाविति च । आदिना तदनन्तराः शतं सोमाधिकारिणः । सर्वैः देवैर्मनुष्यैरिति वा । तेन सर्वसङ्ग्रहः । अनेन देवानां तारतम्यं चाऽह । सदेति मोक्षेऽपि तारतम्यतादवस्थ्यमाह ॥

रमा हि दक्षिणादेवता । तेनादक्षिणो यज्ञस्तं न प्रीणयतीत्याह । रमायाः प्रणयी सुहृत् । त्रिरूपां रमां सृष्टिस्थितिसंहारेषु प्रणयतीति च रमाप्रणयी । ब्रह्मादिभ्यः प्रकृष्टतां नयतीति च । आकूतिसूनुर्भगवान् यज्ञनामा दक्षिणादेवताया रमायाः पतिर्विशेषतः स्तुतो भवति । **ओ श्रावय, अस्तु श्रौषट्, यज, येयजामहे, वौषट्** इति सर्वयज्ञेष्वाहूयमानः यज्ञः, यज्ञपुरुषः, यज्ञेश्वरः, यज्ञभावनः, यज्ञभोक्ता चेति पञ्चात्मानमेकयोक्त्याऽऽह– **सर्वयज्ञभुजे** ॥

तदुक्तम्–

**'चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।**
**'हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु'** इति ॥

**'यज्ञो यज्ञपुमान् नाम यज्ञेशो यज्ञभावनः ।**
**'यज्ञभुक् चेति पञ्चात्मा यज्ञेष्विज्यो हरिः स्वयम्'** इति च ॥

अथ च विधीशानशक्रपूर्वैरिति जीवानां परस्परं भेदः । सदेति मोक्षेऽप्यनुवर्तमानः सत्योऽयं भेद इत्याह । मखैरिति जडानां भेदः । कर्तृतया करणतया च जीवजडयोर्भेदः । इज्यस्य नारायणस्य यज्ञैर्यष्टृभिश्च भेद इति पञ्चभेदा अपि न्यरूपिषत । समतीतक्षराक्षरत्वं च नारायणस्य, विधीशान-शक्रपूर्वैः सर्वशब्दैर्वाच्यत्वेन सर्वगुणपूर्णता चासूचि । मखैरिति ज्ञानिभिरपि कर्म कर्तव्यमिति । तदेवं तत्ववादसारसर्वस्वमनेनैकेन श्लोकेन न्यग्रन्थीद् भगवत्पादः ॥

एभिस्त्रिभिर्लक्षणैर्लक्ष्यं स्फोरयति । रमाप्रणयिने इति स्फुटम् । तदेव बीजरूपेणाऽह– **य** इति । किमुक्तं भवति? लक्ष्मीनारायणः परं ब्रह्मेत्युक्तं भवति । कथम्? ईः लक्ष्मीः । **'तां पद्मिनीमीं शरणं प्रपद्ये'** इति श्रवणात् । तया सहितः अः यः । भगवान् लक्ष्मीनारायण इत्यभिहितं भवति । **'अः इति ब्रह्म'** इति हि श्रुतिः ॥

अनेनैव विषयादयश्चोक्ताः । नारायणो विषयः । कर्मविनियोगज्ञानम्, तेन भगवत्प्रसादश्च प्रयोजनम् । तज्जिज्ञासुरधिकारी । यथायोग्यं सम्बन्ध इति ॥

षोळशिना आनुष्टुभेन मङ्गलाचरणेन शास्त्रस्य षोळशित्वसम्पादनमत्र निर्णीयत इत्यप्यसूचि ॥ ❊ ॥

**॥ इति मङ्गलपद्यार्थनिर्णयः ॥**

## [ॐ ॥ महानाम्नीनामुपसर्गानुपसृजति[1] ।] (ऐ.ब्रा.अ.१६.खं.४)

यद्यपि मूलकोशेषु **'महानाम्नीनाम्–'** इत्यादि ब्राह्मणवाक्यं न पठ्यते । तेन भगवत्पादेन प्रवचनकाले मूलवाक्यं न पठितमेवेति नार्थः । भगवत्पादशिष्याणाम्, याज्ञिकानामुजेर्यपण्डितानां च सर्वोऽपि ब्राह्मणभागो मुखोद्गत इति न प्रायो लिपिबद्धं चक्रुरिति भाति ॥

तत्र तावत् प्रथममुजेर्यपण्डितैर्जिगीषया पृष्टस्य ऐतरेयब्राह्मणस्य षोडशाध्याये चतुर्थखण्डस्य व्याख्यान-मुपक्रमते–

१. अयं व्याख्येयः श्रुतिभागो मूले न पठ्यते । यथा ऋग्भाष्ये ऋङ्मन्त्रा न पठिताः । भागवततात्पर्ये वा भागवतमूलश्लोकाः । अथाप्यध्येतॄणां सौकर्याय व्याख्येयः श्रुतिभागः अत्र [ ] एतच्चिह्नान्तर्गतो निवेशितः । एवमुत्तरत्रापि सर्वत्र ॥

# महानाम्नीनामृचां उपसर्ग्गा ये उपसर्ज्जनभूतास्तानुपसृजति संयोजयति ।

**महानाम्नीनामिति** ।। किमत्र विशेष्यम्? ऐतरेयारण्यके प्रथमप्रघट्टकस्य षष्ठाध्यायादारभ्योपनिषद् भवति । आ द्वितीयप्रघट्टकान्तम् । संहत्य नवाध्यायी भवत्युपनिषत् । तदन्ते पुनरेकः खण्डः पठ्यते । यं महानाम्नीखण्डाध्याय इत्याचक्षते । महानाम्नीनां खण्ड इति । सामवेदेऽपि महानाम्न्यार्चिक इति । अत्र संशय्यते । किमत्र विशेष्यमिति । अत आह– **महानाम्नीनामृचामिति** ।।

ननु तथाऽपि महानाम्नामित्येव वक्तव्यम् । **'मनः'** (अ.सू.४.१.११) इति सूत्रे पाणिनिना मन्नन्तस्य ङीपो निषेधात् । अयि व्याकरणमुग्ध, किमृषयो पाणिनीयमधीत्य मन्त्रानदर्शन् । प्रत्युत पाणिनिः स्वयं मन्त्रानध्यायमध्यायं शब्दानुशासनमसुसूत्रत् । अतः अष्टाध्याय्यामेव **'अन्यत्र नाम्नः'** इत्युपस्कर्तव्यम् । सर्वत्राऽपि किल नामशब्दः स्त्रियां ङीबन्त एव प्रायः पठ्यते वेदेषु च लोकेषु च । **'नित्यं सञ्ज्ञाछन्दसोः'** (४.१.२१) इति वदन् पाणिनिरप्येतमर्थं सूचयतीव ।।

उपसर्ग इत्युत्पातेऽर्थेऽपि पठन्ति कोशकाराः– **'उपसर्ग उपद्रवः'** इति । पदात् पूर्वं संयुज्यमानमव्ययमुपसर्ग इति वैयाकरणाः । अतः प्रकृते विवक्षितमर्थमाह– **य उपसर्जनभूता** इति । एतेन निर्वचनमपि सूचयाम्बभूव– उप समीपे सर्गः सर्जनं संयोजनमिति ।।

उपेत्यधिके पठ्यते । उपेत्यन्तिके पठ्यते । उपेति हीनेऽपि पठ्यते । **'उपाधिकेऽन्तिके हीने'** इति यादवप्रकाशाचार्यः । यथा– उपेन्द्रः । इन्द्रादप्यधिको भगवान् । अथाप्युपेन्द्रः इन्द्रानुजत्वादिन्द्रादवरः । तदेतदुक्तम्– **'अजघन्यो जघन्यजः'** इति । अथापि भ्रातृत्वेन सहयोगान्नैकट्यम् । अथ केवलमाधिक्यार्थे– उपनयनम्, उपरि नयनमित्यर्थः । उपवासः, उपरि वास इत्यर्थः । उपशमः, उत्कृष्टानन्द इत्यर्थः । अन्तिके यथा– सहायार्थमन्तिके भवन् उपसम्पादकः । हीने यथा– उपनदी । महानद्या सह प्रवहन्ती कुनदीत्यर्थः ।।

प्रकृते तु उप मन्त्रान्तरस्यान्तिके आदौ वाऽन्ते वा सर्गाः, अवयवत्वेन सृज्यन्त इति सर्गाः सम्बद्धा इत्यर्थः ।।

अथ च ये मन्त्रान्तरे उप उपक्रमे उपसंहारे वा संसृज्यन्ते ततोऽपि उपसर्जनभूताः । गुणभूता इत्यर्थः । **'गुणाः पुंसि क्लीबे स्यादुपसर्जनम्'** इति । मन्त्रावयवभूता वाक्यखण्डा इत्यर्थः । तानुप-

सृजति । तस्मान्मन्त्रादपकृष्य मन्त्रान्तरे संयोजयति शस्त्रपठनकाले होतेत्यर्थः । विध्यर्थे लट् । उपसृजेदित्यर्थः ॥

पुनः संशय्यते । एतासामृचां कथं महानाम्नीत्वम्? अतोऽन्यैरनाविष्कृतमज्ञातमुजेर्यपण्डितानामप्य-पूर्वमर्थमाविष्करोति भगवत्पादः—

## महन्नाम यास्वृक्षु विद्यते ता महानाम्न्यः ।

नाम इन्द्रादिकमिति वक्ष्यमाणत्वात् समुदायैकवचनम् । सर्वेषां महत्त्वमेकरूपमिति चैकवचनम् । तेन महान्ति नामानि यासु ता महानाम्न्यः ॥

ननु सर्वाण्यपि नामानि समानि भवन्ति । न तेषु चेतनेष्विव तरतमभावः । तत् कथं महानामानि? आह—

## परस्य ब्रह्मणो यन्नामेन्द्रादिकं तन्महात्थत्वान्महत् ।

**परस्य ब्रह्मणो** नारायणस्येति । कथं नाम्नां महत्त्वम्? महार्थत्वात् । एकस्य हि शब्दस्य बहवोऽर्था भवन्ति । नहि सर्वेऽप्यर्थाः समाना भवन्ति । तारतम्यवन्तो ह्यर्था भवन्ति । तथाह्यामनन्ति कोशकाराः—

> **'विष्णुचन्द्रेन्द्रवातार्कयमाश्वांशुशुकाग्निषु ।**
> **'कपिभेकाहिसिंहेषु हरिर्ना—'** इति ॥

नहि विष्ण्वादीनां देवानां कपिभेकादीनां च समानता कोशकारस्याप्यभिमता । यथा वा बालानां आत्मेति देह उच्यते । किञ्चिदभिवृद्धानामात्मेति मन उच्यते । ततोऽपि व्युत्पन्नानामात्मेति जीव उच्यते । ततोऽप्यन्तर्मुखानामात्मेति परमात्मोच्यते । स हि परममुख्यार्थः । आन्तरआन्तरोऽर्थः पूर्वस्मान्मुख्यो भवतीति न तिरोहितं भाषाशास्त्रविदाम् । सर्वान्तरो हि परमात्मा । तस्मान्महार्थः । अथ च यत्र महायोगो महारूढिश्च स महार्थः । तथाचाऽस्वृक्षु पठितानीन्द्रादिनामानि परममुख्यार्थं नारायणं वदन्तीतीमा महानाम्न्य इत्यर्थः ॥

ननु तर्हि सर्वा अप्यृचो महानाम्न्यः । अन्ततः सर्वपदानामपि भगवत्परत्वात् । सत्यम् । सर्वाण्यपि नामानि महान्ति यदा भगवन्तमाविशन्ति । यदा पुनरिन्द्रादिदेवतावचनानि तदा न महान्ति । तदुक्तम्—

**'ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः ।**
**'ता एव परमा विद्या यदा विष्णोस्तु वाचकाः'** इति ॥

ऐतरेयोपनिषदन्ते महानाम्नीखण्डाध्याये पठ्यमानानि नामानि केवलं नारायणपराणीति भवति तेषां महानामत्वम् ॥

ननु तत्रापि अमहान्ति नामानि श्रूयन्ते यानि केवलमिन्द्राग्न्यादिपराणि– **'एवा ह्येवैवा ह्यग्ना३इ'** इत्यादीनि । सत्यम् । अत एव महानाम्नीनामृचामित्याह । न ते ऋङ्मन्त्राः । निगदा हि ते ॥

कुतो नारायणस्य महार्थत्वम्–

## महद्धि तत् परं ब्रह्म । अशेषगुणसम्पूर्त्तेः ॥

महद्धीति हिशब्देन **'परमं यो महद् ब्रह्म'** इति विष्णुसहस्रनामवचनं स्मारयति । अशेषाः कालतः स्वरूपतश्च येऽनन्ता गुणास्तैः सम्पूर्त्तेरित्याह । सर्वेऽपि गुणा अंशतः सन्तीति मा भूदित्याह– सम्पूर्त्तेरिति । तदुक्तम्–

**'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे'** इति भागवते ॥

एकैकगुणतोऽप्यनन्ते इत्यर्थः । तथाचानन्तगुणेषु एकैकगुणस्याप्यनन्तत्वं सम्पदार्थः ॥ ✻ ॥

इयमत्र पूर्वकथा–

प्रतिमासं प्रवर्तमाने यागपूगे कश्चन पृष्ठ्यषळहो नाम क्रतुर्भवति । तत्र चतुर्थेऽहनि षोळशी नाम क्रतुर्भवति ॥

कथं क्रतोः षोळशित्वम्? यत्र शस्त्रादीनि षोळशाक्षराणि भवन्ति तत् षोळशिनः षोळशित्वम् । तथाच यत्र शस्त्रादिषु पठनीयेषु मन्त्रेषु षोळशाक्षराणि न भवन्ति तत्र मन्त्रान्तरादपकृष्य न्यूनाक्षरे मन्त्रे संयोज्य षोळशित्वं सम्पादनीयम् । तदेतदुक्तम्– **'महानाम्नीनामुपसर्गानुपसृजति'** इति ॥ ✻ ॥

अधिगतं क्रतोः षोळशित्वम् । अथाप्यनधिगतमृचां महानाम्नीत्वं याज्ञिकानामपि । अतः करुणया भगवत्पाद आदावेव तत्पदार्थं निराह ॥

तावन्तमनेहसमश्रुतमहानाम्नीपदार्थाः सङ्केतमात्रमेतदिति मन्यमाना उजेर्यकर्मकाण्डपण्डिता विस्मय-जलधौ ममज्जुः । केचिन्नासान्यस्तशयशाखा हृष्टरोमाण आहुः– 'अहो अस्य कर्मकाण्डेऽप्यखण्डं पाण्डित्यम्' इति । अथापि केचित् कपिचापलमाचेरुः । त उत्तस्थुर्जगद्गुरोः पुरः पराभवायैव । उत्थाय च पप्रच्छुः कम्पमानपश्चशाखाः– 'मन्त्रदेवता वयम् । ब्रह्मैव नास्ति । कुतस्तरां तस्याशेषगुण-सम्पूर्त्तिः? अथापि सम्प्रदायतः शाङ्करा वयम् । तेन निर्गुणं ब्रह्माऽचक्ष्महे । तत् कथं निर्गुणस्य गुणसम्पूर्त्तिः? वेदप्रवचनाचार्यास्तत्रभवन्त उभयकाण्डप्रकाण्डपण्डिताः । उन्मीलयन्तु कृपया नयन-मस्माकम्' इति । अन्तः कुहकगर्भमेतद् वचनमाचार्यो विभीः शुश्राव । श्रुत्वा मन्दं जहास । जगाद च सोरुताडं तेषां हृदयग्रन्थिं भेदयन्निव–

## तत्रैक आहुरगुणं ब्रह्मेति । न तद् युक्तम् । श्रुतियुक्तिविरोधात् ॥

तत्र वेदवादिनां मध्ये । तदिति कथं वेदवादिनः परामृश्यन्ते? वेदार्थविचारस्य प्रस्तुतत्वात् । एके मायावादिनः । अत्रोपस्थितपण्डितेष्वपि एकेचन । तत् ब्रह्मणः निर्गुणत्वम्, तथावचनम्, तथोपासनं च न युक्तम्, न युक्त्युपेतमित्यर्थः । साक्षादाचार्यमुखादेवाधिगततत्ववादैः प्राचीनाचार्यैस्तथा व्याख्यानात् । का वाचोयुक्तिः? युक्तिरस्यास्तीति युक्तम् । का युक्तिः? **युजिर् योगे** । युक्ति-रिति साङ्गत्यम् । युक्तिरित्यौचित्यम् । तदेतदाह– **न युक्तमिति** । असङ्गतमित्यर्थः । अनुचित-मित्यर्थः । अथवा मनसो लगनं युक्तिः । **न तद् युक्तम्**– न तन्मनसि लगतीत्यर्थः । शोभनं सुन्दरमित्यादिरार्थिकोऽर्थः । यन्मनसि न लगति न नूनं तच्छोभनं भवितुमर्हतीति ॥

अथवा युक्तिरिति वाचोयुक्तिः । कयाऽपि वाचोयुक्त्या आगमेन वा तर्केण वा न तत् साधयितुं शक्यमित्यर्थः ॥

अथवा युक्तिरित्यनुमैव । कथायां श्रुतिरप्यनुमात्वेनैव ह्युपयुज्यते । इदमित्थं भवितुमर्हति, इदं नेत्थम्, इति श्रुतेरिति । तस्मादिदमसदिति वचनस्य पूर्वाग्रहादन्यत् कारणं नोत्पश्यामः ॥

अथ कथमनुमिमीषे? शृणु सावधानतया । अत्र द्वयी गतिर्भवति । ब्रह्मणोऽगुणत्वं न युक्तम् । तद्वचनस्य श्रुतियुक्तिविरोधादित्येकम् । ब्रह्मागुणमिति वचनं न युक्तम् । ब्रह्मणोऽगुणत्वस्य श्रुतियुक्तिविरोधादिति द्वितीयम् । अथवा न तद् युक्तमिति युक्त्युपेतमित्यर्थः । तस्मादनुपादेयमिति

फलितम् । तथाचानुमानम्– ब्रह्मणोऽगुणत्वं नोपादेयम् । तस्य श्रुतियुक्तिविरोधादित्यादिकमूह्यं चतुरमतिभिः ॥

कथायां पृष्टेनाऽगम एवाऽदौ वक्तव्य इति नियममनुसरन्नाह– **श्रुतियुक्तिविरोधात्** । श्रुतिरूपया युक्त्या श्रुत्यनुसारिण्या युक्त्या च विरोधादित्यर्थः । प्रत्यक्षस्यानवसरात्, सर्वप्रमाणविरुद्धो ब्रह्मागुणत्ववाद इत्युक्तं भवति ॥

श्रुतिमूलैव ह्यत्र युक्तिः प्रवर्तते । अतः युक्तिमूलभूताः श्रुतीः प्रथममाह–

**तथाहि श्रुतिः– 'सत्यं ज्ञानमनन्तं ब्रह्म', 'विज्ञानमानन्दं ब्रह्म', 'यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः । तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते', 'दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रोऽक्षरात् परतः परः', 'एतावानस्य महिमा ततो ज्यायांश्च पूरुषः', 'यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा', 'पूर्ण्णमदः पूर्ण्णमिदं पूर्ण्णात् पूर्ण्णमुदच्यते । पूर्ण्णस्य पूर्ण्णमादाय पूर्ण्णमेवावशिष्यते', 'सर्वनामा सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः', 'विष्णोर्नु कं वीर्य्याणि प्रवोचं यः पार्त्थिवानि विममे रजांसि', 'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति', 'न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप' इत्यादिका ॥**

**तथाहि श्रुतिरिति** । हिर्हेतौ । यस्मात् श्रुतिः तथा ब्रह्मागुणत्वविरुद्धा तस्मादिति । हि प्रसिद्धमेतदिति च । भवताऽपि श्रूयते हीति परिहसतीव । श्रुतिरित्यैकार्थ्याच्छ्रुतीनां समुदायैकवचनम् । शाङ्कराः समग्रं वेदं कर्मकाण्डत्वेनातत्वावेदकमाचक्षते । केवलमुपनिषदामेव प्रायो ज्ञानकाण्डत्वम् ।

अत एव शाङ्करे सूत्रभाष्ये केवलमुपनिषद एव विषयवाक्यतयोदाह्रियन्ते । तान् प्रीणयन्निव प्रथम-मुपनिषद्वचनान्येवोज्जहार भगवत्पादः ॥

**'सत्यं ज्ञानमनन्तं ब्रह्म'** इति तैत्तिरीयोपनिषत् । **'विज्ञानमानन्दं ब्रह्म'** इति बृहदारण्यके । यजुर्वेदिन एव, तत्रापि तैत्तिरीयशाखिन एवास्मिन् देशविभाग आध्वर्यवं निर्वहन्तीति प्रथमं तामेव याजुषीमुपनिषदमाह **'सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान्त्सह ब्रह्मणा विपश्चिता'** इति ॥

साधुगुणत्वतः सत्यम् । पूर्णज्ञानरूपम् । देशतः कालतो गुणतः सामर्थ्यतश्चानन्तं च ब्रह्म हृदयगुहायां परमाकाशे निहितं यो वेद सोऽश्नुते सर्वान् कामान् ब्रह्मणा चतुर्मुखेन परब्रह्मणा च सहेति मोक्षेऽप्यनन्तगुणैर्भेदाभिधानात् । अतो न व्यावहारिकमेतत् ॥

किमेते न गुणाः? किमेवङ्गुणकं ब्रह्मागुणं भवितुमर्हति?

अत्र शाङ्करं भाष्यम्– **'सत्यादीनि त्रीणि विशेषणानि विशेष्यस्य ब्रह्मणः । सत्यं ब्रह्म ज्ञानं ब्रह्मानन्तं ब्रह्म । यद्रूपेण यन्निश्चितं यद्रूपं न व्यभिचरति तत् सत्यम् । ज्ञानं ज्ञप्तिरवबोधः । यद्धि न कुतश्चित् प्रविभज्यते तदनन्तम्'** इति ॥

**'वेद्यत्वेन यतो ब्रह्म प्राधान्येन विवक्षितम् । ततो विशेष्यं विज्ञेयं ततोऽन्यत् स्याद् विशेषणम्'** इति सुरेश्वराचार्यः ॥

अहो एतानि विशेषणानि ब्रूषे । कथमथ निर्विशेषं ब्रह्म ब्रवीथा इत्यर्थः ॥ ✲ ॥

अथ शुक्लयजुर्वेदसङ्गताया बृहदारण्यकोपनिषदो वाक्यमुद्धरति– **'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम् । तिष्ठमानस्य तद्विदः'** इति । सर्वविलक्षणं विशिष्टज्ञानरूपम् । आनन्दमयं ब्रह्म यज्ञेषु हविरादिदातॄ रातिः इष्टप्रदः । तस्मिन्नेव तिष्ठमानस्य तद्विदः मोक्षदानेन परायणमिति । अनेनैव काण्वोपनिषद्वचनेनोपसञ्जहार च । तेन काण्वान् बहिष्कुर्वन्तो दत्तोत्तराः ॥ ✲ ॥

याज्ञिकानां नोपयुक्त इत्याथर्वणं वेदं विहाय त्रय एव वेदास्त्रयीति बहवः । भगवान् भ्रम एवायम् । गद्यमयः पद्यमयो गानमय इति चत्वारोऽपि वेदास्त्रयीपदगदिता इति याज्ञिकानां बोधयन्नथाथर्वणीं

श्रुतिमाह– **'यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः । तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते'** इति । सर्वं जानातीति सर्वज्ञः । सर्वत्र विद्यत इति सर्ववित् । यद्यपि पाणिनीयाः– **'सत्-सू-द्विष-द्रुह-दुह-युज-विद–'** (३.२.६१) इति ज्ञानार्थस्य विदधातोरेव क्विपमिच्छन्ति– सर्वं वेत्तीति सर्वविदिति । नैवं पाणिनिराह । केवलं विदधातोरित्याह । न ज्ञानार्थस्येति । सत्तार्थस्यापि स्यादिति तत्ववादिनः– सर्वत्र विद्यत इति सर्वविदिति । वस्तुतः पाणिनीयैरप्येतदङ्गीकर्तव्यम् । यदाह पाणिनिः– **'अन्येभ्योऽपि दृश्यन्ते'** (३.२.७५), **'क्विप् च'** (३.२.७६) इति । यत्र प्रयोगा दृश्यन्ते तत्रान्येभ्योऽपि धातुभ्यः क्विप् स्यादिति ॥

यस्य तप आलोचनं ज्ञानमयम् । **'तप आलोचने'** इति प्रतनानां धातुपाठः । न संशयात्मकम् । नापि जिज्ञासात्मकम् । तस्मादेतच्चतुर्मुखं ब्रह्म जायते । एतदिति सृज्यकोटिप्रविष्टम् । ब्रह्मेति जीवगणो वा । **'ब्रह्माणि जीवाः सर्वेऽपि'** इति स्मरणात् । ब्रह्मेति भोक्ता जीवः । अन्नमिति भोग्यजातं जडम् । एवं नामरूपात्मकं सर्वं जगज्जायते ॥

अर्वाचीनानां वैयाकरणानां मतमेवानुसरति शाङ्करं भाष्यं चक्षुषी निमील्य– **'सामान्येन सर्वं जानातीति सर्वज्ञः । विशेषेण सर्वं वेत्तीति सर्ववित् । यस्य ज्ञानमयं तपः । नाऽयास-लक्षणम् । एतद् ब्रह्म हिरण्यगर्भाख्यम् । नाम देवदत्तो यज्ञदत्त इत्यादि । रूपं शुक्लं नील-मित्यादि । अन्नं व्रीह्यादिलक्षणम्'** इति ॥

न नो हानिः । किन्तु न मनो लगति । यः सर्वमशेषविशेषतो जानाति स सामान्यतोऽपि जानातीति किं पुनर्वक्तव्यम्? विराटनगरे षष्टिः सहस्राणि गाव आसन्, न केवलम् । विंशतिसहस्राणि चाऽसन्निति वदिदम् । अर्थान्तरे गुणान्तरानुसन्धानं भवतीति लाभश्च ॥ * ॥

**'दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रोऽक्षरात् परतः परः'** इति चाऽथर्वण्युपनिषत् । यत्राग्निमुग्धानां धूमतान्तानां कर्मठानां निन्दा कृता– **'इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः'** इति, तेनोजेर्यपण्डितान् जागरयन्निवाथर्वणीमेव श्रुतिं पुनरुज्जहार । मुण्डकानामियं श्रुतिर्न सजूटानामिति भ्रमनिवारणाय च ॥

दिव्यो हि जगत्सर्जनादिक्रीडायुक्तो हि । **दिवु क्रीडायाम्** । तथाऽपि अमूर्त्तः प्राकृतमूर्त्तिरहितः । पुरुषः सर्वशरीरगतः, न केवलम् । स बाह्याभ्यन्तरो हि । **'अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः'** इति श्रूयते हि । अत एव सः । नारायणः इत्यर्थः । **'सारत्वात् स इति प्रोक्तः'** इति हि स्मरन्ति । अत एव न पराधीनो जायते । कर्मफलत्वेन वा । अप्राणो ह्यमनाः । प्राणमन-आदिषोळशकलावर्जितो हि । **'यत् प्राणेन न प्राणिति', 'यन्मनसा न मनुते'** इत्यादि च हि श्रूयते । प्राण इति मुख्यवायुः । मन इति शिवश्च । तावेनं न नियन्तुमीशाते । शुभ्रः निरवद्यः । अक्षरात् जडप्रकृतेः परतः चित्प्रकृतेरपि परः समतीतक्षराक्षरः । किमेते न गुणाः? किमेवमाद्यनन्तगुणाश्रयं ब्रह्मागुणं भवितुमर्हति? तस्मादनन्तगुणमेवागुणमुच्यते ॥

अत्र शाङ्करं भाष्यम्– **'दिव्यो द्योतनवान् । स्वयञ्ज्योतिष्ट्वात् । अमूर्तः सर्वमूर्तिवर्जितः । पुरुषः पूर्णः । पुरिशयो वा । सबाह्याभ्यन्तरः सह बाह्याभ्यन्तरेण वर्तत इति । अतो न जायते कुतश्चित् स्वतोऽन्यस्य जन्मनिमित्तस्याभावात् । अविद्यमानः क्रियाशक्तिभेदवांश्चलनात्मको वायुर्यस्मिन्नसावप्राणः । तथा अनेकज्ञानशक्तिभेदवत् सङ्कल्पाद्यात्मकं मनोऽप्यविद्यमानं यस्मिन् सोऽयममनाः । शुद्धः शुभ्रः । अक्षरात् नामरूपबीजोपाधिलक्षितस्वरूपात् परमव्याकृताख्यमक्षरम् । तस्मात् परतोऽक्षरात् परः निरुपाधिकः पुरुष इत्यर्थः'** इति । किमपि व्याहरतु । अन्ततो गुणा एव हि ते । केचिद् भावरूपाः । केचिदभावरूपाः ॥ ❋ ॥

अथ सर्ववेदमूलं चतुर्ष्वपि वेदेषु पठितं पुरुषसूक्तमुज्जहार– **एतावानस्य महिमा** । अनेन श्लोकार्धेन समग्रं पुरुषसूक्तं सञ्जग्राह । समग्रमेव हि सूक्तं कर्मकाण्डेऽपि महत् पात्रं वहति । समग्रेण हि सूक्तेन षोडशोपचारान् निर्वर्तयन्ति । समग्रेण च सूक्तेन चरुं निर्वपत्यनन्तफलायेति ऋग्विधाने शौनक उवाच । विस्तरस्तु अस्मत्कृतायां षट्प्रश्नभाष्यचन्द्रिकायां द्रष्टव्यः ॥

एतावान्, यावानुक्तः पुरुषसूक्ते, अस्य पुरुषस्य महिमा । न केवलमेतावानेव । ततो ज्यायांश्चानन्तगुणत्वात् पूरुष इति ॥

अस्य मन्त्रस्योद्धरणे महत् कौशलं दर्शयामास भगवत्पादः । तथाहि– **'एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः'** इति बाह्वृच्यस्य यजुषश्च पाठः । **'तावानस्य महिमा ततो ज्यायांश्च पूरुषः'** इति

च्छन्दोगानाम् । **'तावन्तोऽस्य महिमानस्ततो ज्यायांश्च पूरुषः'** इत्याथर्वणाः । भगवत्पादः पुनरत्र वेदवादचतुरश्चतुरोऽपि पाठानेकयोक्त्या सञ्जग्राह । तथाहि बह्वृचानां याजुषाणां च, तत्रापि वाजसनेयिनां तैत्तिरीयाणां चेत्युभयेषामपि,पाठंपूर्वार्द्धेन समग्रहीष्ट– **'एतावानस्य महिमा'** इति । छन्दोगानामाथर्वणिकानां च पाठमुत्तरार्द्धेन– **'ततो ज्यायांश्च पूरुषः'** इति । एवं वेदचतुष्टयगतमपि पुरुषसूक्तपाठं श्लोकार्द्धेन समुद्धरन् अनन्तवेदविन्माहाचमस्य आचार्यः स्वस्य वेदार्थचिन्तने महत् कौशलमाविश्चकार । ततः **'एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः'** इति येऽत्र पाठं पेठुः, ये च तमेव पाठमागृह्य व्याचख्युः त उभयेऽपि भगवत्पादस्य ग्रन्थरचनसारस्यमेवापघ्नन्ति ।। ✻ ।।

इदानीं वेदत्रयगतानि वचनानि क्रमेणोल्लिखति । प्रथममृग्वेदगतम्– **'यो नः पिता–'**(१०.८२.३) । पातृत्वात् पिता । धातोराकारस्येकारः । **'नप्तृ-नेष्टृ-होतृ-पोतृ-भ्रातृ-जामातृ-मातृ-पितृ-दुहितृ'**(२.९६) इत्युणादिसूत्रम् । तपतीति वा पिता वर्णविपर्ययेणैव । जनयतीति जनिता । **'जनिता मन्त्रे'** इति पाणिनिः (६.४.५३) । जनीधातोः तृचो णिलोपो मन्त्र इति पाणिनीयाः । तृच इति न वक्तव्यम् । **'जनन्त उषसो भगम्'** (ऋ.९.१०.५) इत्यादिदर्शनात् । न केवलं मन्त्रे । स्मरन्ति च– **'जनिता चोपनेता च'** इत्यादि । सर्वे णिजन्ता अणिजन्ता अपि प्रयुज्यन्ते । यथा– तताड, चुचोर- इत्यादि । विधाता धारणपोषणकर्ता ज्ञानमोक्षदानेन । विश्वानि भुवनानि वेद । तत्र तत्तद्धामानि च वेद ।।

**'न केवलमस्माकम् । किन्तु सर्वस्यापि जगतो विधाता'** इति सायणः । नैतच्चारु । पुनरुक्तेः । नः सर्वेषामित्युक्तत्वात् । न तत्र सङ्कोचे कारणं पश्यामः ।। ✻ ।।

**'पूर्णमदः पूर्णमिदम्–'** इति याजुषः शान्तिमन्त्रः, बृहदारण्यकोपनिषदि च पठ्यते । व्याख्यातं च तत्वप्रदीपे– **'पूर्णमदो मूलरूपम् । पूर्णमिदमवताररूपम् । अमुष्मादिदं सङ्ख्यामात्रेण उदच्यते उद्रिच्यते । एकमेव बहुसङ्ख्याकं भवति विशेषादेव । स्वस्य पूर्णस्य पूर्णमिदमवताररूपमादाय तन्मूलरूपमेवावशिष्यते'** इति ।।

उदच्यते । **अञ्चु गतिपूजनयोः** । **अन्चु** इति क्षीरस्वामी । उदच्यते उद्गतत्वेन ज्ञायते । विविक्तत्वेन गम्यत इत्यर्थः । उद्गच्छतीति बहवः । **'अदः निरुपाधिकं परं ब्रह्म पूर्णम् । इदं शरीराद्युपाध्युपहितं जीवाख्यं च पूर्णम्'** इत्यादि शाङ्करं भाष्यम् ।। ✻ ।।

अथ छन्दोगानां श्रुतिमाह– **सर्वनामा** । ननु च्छन्दोगोपनिषदि भिन्न एव पाठः पठ्यते– **'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः–'** इत्यादि । तत् किमिदमपूर्वं श्रुतिपाठं पठति भवदाचार्यः– **सर्वनामा सर्वगन्धः सर्वरस** इति । सत्यम् । अनेन तत्समानार्थकं श्रुत्यन्तरं ग्राहयत्याचार्यः । आचार्यग्रन्थेषु सर्वत्राप्ययमेव न्यायोऽनुसर्तव्यः । तथाहि तत्वप्रदीपे– **'यत्र प्रचलितश्रुतिपाठादन्यः पाठो दृश्यते तत्र तत्संवादि श्रुत्यन्तरमवगन्तव्यम्'** इति ॥

सर्वाणि नामान्यस्यैवेति सर्वनामा । सर्वेषां नामान्यस्मादेवेति च । **'यो देवानां नामधा–'** इति श्रवणात् । **धाञ् दाने** च ॥

चिदानन्दात्मकसर्वगन्धरसरूपः । सर्वे शुभगन्धा रसाश्चास्यैव भोगायेति च । सर्वेषां गन्धरसाद्यनुभवोऽनेनेति च । सर्वान् संसारे गन्धयते दुःखयतीति सर्वगन्धः । **गन्ध अर्दने** । सर्वान् मोक्षे रसयति रमयतीति सर्वरसः । **रस आस्वादनस्नेहयोः** । सर्वेन्द्रियानुभवोऽनेनेत्येतत् । अत आह– सर्वमिदमभ्यात्तः । सर्वमिदमिन्द्रियजातं चेतनजातं च नियन्तुमभितोऽन्तर्बहिश्च आदत्त इत्यभ्यात्तः । **'अच उपसर्गात् तः'** (अ.सू.७.४.४७) इति ददातेस्तादेशे रूपम् । अभित आततो वा ॥

वाक इति निगद उच्यते । वाक इति सूक्तमुच्यते । वाक इति वागुच्यते । वाकी शब्दव्यवहारगोचरः न भवतीत्यवाकी । **'यतो वाचो निवर्तन्ते'**, **'यद् वाचाऽनभ्युदितम्'**, **'न वाग् गच्छति नो मनः'** इत्यादेः ॥

आदरः प्रीतिः । योग्यतातिरेकेण न कस्मिन्नप्यादरोऽस्येत्यनादरः । न कस्मादपि आ ईषदपि दरति बिभेतीत्यनादरः । **दॄ भये** । अने प्राणे पुनरत्यन्तीन आदरोऽस्येत्यनादरः । अनेन नित्यमाद्रियत इति चानादरः ॥ ❋ ॥

अत्र शाङ्करं भाष्यम्– **'सर्वे गन्धाः सुखकरा यस्य स सर्वगन्धः । तथा रसा अपि विज्ञेयाः । सर्वमिदं जगत् अभ्यात्तः अभिव्याप्तः । अततेर्व्याप्त्यर्थस्य कर्तरि निष्ठा । वागेव वाकः । स यस्य विद्यते स वाकी । न वाकी अवाकी । अनादरोऽसम्भ्रमः'** इति ॥

किमेते न गुणाः? किमेवङ्गुणविशिष्टोऽप्यगुणो भवितुमर्हति? ॥ ❋ ॥

उदाहारिषत वेदचतुष्टयवचनानि । उपपादि च परस्य ब्रह्मणः सगुणत्वम् । यद्यपि शक्यमितिहास-पुराणैरपि सगुणत्वं साधयितुम् । तथाऽपि शाङ्कराणामुजेर्यपण्डितानां तत्र नातीव भर इति तानि नोदाह्रियन्त । अत एवोपक्रमेऽपि श्रुतिविरोधादित्येवाऽह । नतु श्रुतिस्मृतिविरोधादिति ॥

अथापि पञ्चायतना भागवतसम्प्रदाया वयमिति वृथा कथयतामुजेर्यपण्डितानामेका पृच्छाऽवा-शिष्यतैव । तेऽन्तश्चिन्तयामासुः– यद्यपि हरिहरयोर्न भेदं पश्यामः । अथापि शैवा वयं भाले भासित-लसिताः । यदाह मधुसूदनसरस्वती– **'शैवा वयं न खलु तत्र विचारणीयम्'** इति । तस्मात् **'विष्णुरेव परं ब्रह्मेति नास्मभ्यं रोचते वचः'** इति । भगवत्पादस्तेषामाशयं मुखभावत एव पश्यन् ऋग्वेदगतं मन्त्रत्रयं पपाठ– **'विष्णोर्नु कम्'** इति । **'परो मात्रया–'** इति । **'न ते विष्णो–'** इति ॥

**'विष्णोर्नु कम्–'** इति प्रथममण्डले (१.१५४.१) । **'परो मात्रया–'** इति सप्तममण्डले (७.९९.१) । **'न ते विष्णो–'** इति च सप्तममण्डले (७.९९.१.) ॥

पूर्वमुक्तम्, **'यो नः पिता–'** (१०.८२.३) इति चात्रोपसङ्ग्रहणीयम् ।

अनेन **'आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते'** इत्येतदाह ।

नन्वन्येऽपि गीयन्तेऽग्निवाय्वादयः । गीयन्तां नाम । अथापि मुख्यतो विष्णुरेव गीयते । यतस्तान्यपि विष्णुनामान्येव मुख्यत इति रहस्यं ज्ञापयितुमेव छन्दोगोपनिषदः संवादि श्रुत्यन्तरमुज्जहार पूर्वम्– **सर्वनामा सर्वगन्ध** इति । अपूर्वं श्रुत्यन्तरं करुणया शिष्यान् ग्राहयन्नपीदमुज्जहार ॥

**'विष्णोर्नु–'** इति मन्त्रोऽयं तैत्तिरीयसंहितायाम्, वाजसनेयसंहितायां च पठ्यते । किञ्चित् पाठभेदे-नाथर्वसंहितायां च । अतश्चास्य प्राथम्यम् । **'परो मात्रया–'** इति तैत्तिरीयब्राह्मणेऽपि पठ्यते ॥

एभिस्त्रिभिरर्धर्चैस्त्रीण्यपि सूक्तानि सङ्गृह्णाति । **'विष्णोर्नु कम्–'** इति षळृचं विष्णुदेवत्यं सूक्तम् । औचथ्यस्य दीर्घतमस आर्षम् ॥

उत्तरयोरर्धर्चयोः विष्णुर्देवता । मैत्रावरुणिर्वसिष्ठ ऋषिः ॥

**'विष्णोर्नु–'** इति मन्त्रार्थो भागवत एवोक्तः–

> **'विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह**
> **'यः पार्थिवान्यपि कविर्विममे रजांसि'** इति ॥

मन्त्रे 'कम्' इति बिन्दुरवधारणे । क एव । प्रवोचम्, प्रावोचत् ॥

**'परो मात्रया मात्रायाः परः । परिमाणातीतः । तन्वा वृधान वर्धमान । ते महिमानं न प्राप्नुवन्ति नानुभवन्ति'** इति तत्वप्रदीपे ॥

अस्मादुत्तरो मन्त्रः **'न ते विष्णो–'** इति । **'अन्यमहिम्नां परमन्तं ते महिमानं न कश्चिदाप'** इति च ॥

सायणस्तु– **'विष्णोर्देवस्य वीरकर्माणि नुकं अतिशीघ्रं प्रब्रवीमि'** इति व्याचख्यौ । तदेतत् बह्वृचानां पदपाठाननुगुणम् । याजुषाणां तु स्यात् । ते हि नुकमिति प्रतृन्दन्ति । स पुनराह–**'पार्थिवानि पृथिवीसम्बन्धीनि रञ्जनात्मकानि लोकत्रयाभिमानीनि अग्निवाय्वादित्यरूपाणि रजांसि विशेषेण निर्ममे । अत्र त्रयो लोका अपि पृथिवीशब्दवाच्याः'** इति । न जानीमो भागवतोक्तस्य अर्थस्य परित्यागे किं कारणमिति ॥

उत्तरयोरर्धर्चयोरपि तद्व्याख्यानम्– **'मात्रायाः परस्ताद् विद्यमानया अपरिमितया तन्वा शरीरेण वृधान वर्धमान, हे विष्णो, ते महित्वं महत्त्वं नानुव्याप्नुवन्ति'** इति । **'हे विष्णो, तव महत्त्वस्यावसानं नास्ति । अत एव सर्वैर्न ज्ञायत इत्यर्थः'** इति च ॥

यथाकथाच व्याख्यायताम् । अथापि किमेते न गुणा भवन्ति? किमेवङ्गुणगणविशिष्टं ब्रह्मागुणं भवितुमर्हति? ॥ ✻ ॥

किं विशिष्य द्वित्राणां श्रुतीनामुद्धरणेन? सर्वा अपि श्रुतयो विष्ण्वाख्यस्य परब्रह्मणोऽनन्तगुणत्व-मेवाभिदधतीत्याह– **इत्यादिका श्रुतिरिति** । नन्वनन्ताः श्रुतयः । अन्यासु श्रुतिषु अन्यथाऽप्युक्तं स्यात् । यथोक्तम्– **'नैको मुनिर्यस्य वचः प्रमाणम्'** इतीति न शङ्क्यम् । **'गतिसामान्यात्'** (ब्र.सू.१.१.१०) इति भगवतो बादरायणस्य वचनेन श्रुतीनामैकार्थ्यादिति स्मारयत्यनेनैकवचनेन । तदुक्तम्– **'सर्वे वेदा यत् पदमामनन्ति'** इति काठके । **'वेदैश्च सर्वैरहमेव वेद्यः'** इति गीतायाम् ॥

भवदाचार्योदितमर्थं न वयमङ्गीकुर्म इत्यपलपतां सम्प्रत्ययार्थमस्माभिः परेषां व्याख्यानान्युदाहृतानि, तदनुसरणेऽपि सगुणत्वं निराबाधमिति दर्शयितुम् ॥ ✻ ॥

# युक्तिश्च– बुद्धिपूर्वं सर्वकर्त्तृत्वात् सर्वज्ञत्वादयो युक्ताः ॥

अथेदानीं श्रुतिमूलां युक्तिमाह– **युक्तिश्चेति** । चकार उक्तानुक्तसमुच्चयार्थः । आधिक्यार्थश्च । तेन उक्तानुक्ताः श्रुतीः, अनुक्ता युक्तीश्च समुच्चिनोति । श्रुतिमूलत्वेन युक्तेराधिक्यं च । अत एव श्रुतिमूलत्वेन सर्वासां युक्तीनामैकार्थ्यं चैकवचनेनाऽह । तथाहि श्रूयते काठके– **'तपांसि सर्वाणि च यद् वदन्ति'** इति । सर्वा युक्तय इत्यर्थः । **'समुच्चये तथाऽऽधिक्ये न्यूनत्वे चः प्रयुज्यते'** इति ह्यभिदधति । तामेव युक्तिमाह– **बुद्धिपूर्वमित्यादि** । ब्रह्म सर्वज्ञत्वादिगुणोपेतम्, बुद्धिपूर्वं सर्वकर्तृत्वात् । यन्नैवं तन्नैवं यथा यज्ञदत्तः, यथा वा शिलाशकलम् ॥

अतः ब्रह्मणः **सर्वज्ञत्वादयो** गुणाः **युक्ताः** युक्त्युपेताश्चेत्यर्थः ॥

ननु कथमेवमनुमित्ससि बुद्धिपूर्वं सर्वकर्तृत्वादिति? बुद्धिपूर्वमेव हि कर्तृत्वम् । अयि प्रियतर्क, मास्म तात सहसा प्रतिक्रियथाः । सावधानं शृणु । ब्रह्म सगुणं कर्तृत्वादिति भागवते पठिता युक्तिरनुपदमेव वक्ष्यते । नहि यत्किञ्चित्कर्तृत्वाद् यत्किञ्चिद्गुणकत्वं भागवतार्थः । किन्तु वस्तुमात्रस्य तद्गुणकर्मणां तद्धर्मविशेषाणां च कर्तृत्वात् सार्वज्ञ्यादिगुणसर्वस्वबृंहितं ब्रह्मेति । तच्च सर्वकर्तृत्वं जडे प्रकृतावपि गतम् । उपादानतया तस्या अपि सर्वकर्तृत्वात् । तद् व्यावृत्त्यर्थं बुद्धिपूर्वमित्युपस्कर्तव्यम् । सर्वस्य निमित्तकारणत्वादित्येतत् । तदपि श्रीतत्वे गतमिति माऽतिशङ्कीति स्पष्टत्वाय बुद्धिपूर्वमिति । बुद्धि-पूर्वमिति स्वबुद्धिरेवोच्यते । स्वेच्छया सर्वकर्तृत्वादिति पर्यवसितम् । तेन श्रीतत्वस्यापि व्यावृत्तिः । अत एवोपसञ्जहार– **'अतोऽनन्तगुणो भगवान्नारायण इति सिद्धम्'** इति ॥

कृतिमत्त्वम्, इच्छापूर्वककृतिमत्त्वम्, स्वतन्त्रेच्छापूर्वककृतिमत्त्वमिति त्रिविधं हि कर्तृत्वं तत्ववादिना-मपि सम्मतम् । तथाहि ब्रह्मतर्कवचनं श्रीभगवद्गीतातात्पर्ये– **'–विकृतिर्नाम कर्तृत्वं जडसंश्रयम् । पुमान् दोग्धा च गौर्दोग्ध्री स्तनो दोग्धेति च क्रमात्'** ॥

# 'कर्त्तृत्वात् सगुणं ब्रह्म पुरुषं पुरुषर्षभम्' इति च भागवते ॥

सम्प्रति स्वयुक्तिमूलं भागवतवचनं दर्शयति– **कर्तृत्वात् सगुणं ब्रह्म** । सर्वकर्तृत्वात् सर्वगुणं ब्रह्मेत्यर्थः । सृष्ट्याद्यष्टकस्य कर्तृत्वात् इति प्रत्येकमष्टौ वा हेतवः । कर्तृत्वादिति स्वतन्त्रकर्तृत्वा-

दित्यर्थः । अतः सगुणत्वादेव ब्रह्मपदवाच्यम्– **'अथ कस्मादुच्यते ब्रह्मेति । बृहन्तो ह्यस्मिन् गुणाः'** इति श्रुतेः । अत एव पूर्णषड्गुणत्वात् पुरुषपदवाच्यम् । पुरि शयनाच्च पुरुषः । ननु जीवा अपि पुरि शेरते? सत्यम् । जीवोऽपि शेते । किन्त्वेकदा एकस्मिन् शरीरे । अयं पुनरेक एकदैव सर्वासु पूर्षु शेत इति पुरुषर्षभः । अथ च जीवपरमात्मानावुभावपि पुरि शयाते । किन्तु जीवः पराधीनतया शेते । भगवांस्तु स्वतन्त्रः स्वेच्छया शेत इति पुरुषर्षभः । एको नियम्यतया शेते । अपरो नियन्तुमिति च । पुरुष इत्यक्षरपुरुषे रमायामपि गतम् । अतश्च पुरुषर्षभमिति । किमुक्तं भवति? क्षराक्षरपुरुषोत्तम इत्युक्तं भवति ॥

अस्य भागवतश्लोकार्धस्योत्तरश्लेकेनान्वयः–

**'स सङ्गत्य पुनः काले कालेनेश्वरमूर्तिना ।**
**'जाते(ऽ)गुणव्यतिकरे यथापूर्वं प्रजायते'** इति ॥ (भाग.३.३३.१३)

**'सङ्गत्य लये परमेश्वरं प्रविश्य । यथापूर्वं प्रजायते उच्चनीचादिभावेन जायते । अगुणव्यतिकरे बहिः श्वेतद्वीपे निर्गच्छति'** इति श्रीभागवततात्पर्ये ॥

ईश्वर्यः सर्वसमर्था मूर्तयोऽस्य तेन, पूर्वं ब्रह्मपदोदितेन कालेन कलितसम्पूर्णसद्गुणतया कालपदोदितेन नारायणेन गुणव्यतिकराख्ये सृष्टिकर्मणि जाते, गुणव्यतिकररहिते मोक्षे सः ब्रह्मादिजीवसङ्घः ईश्वरमूर्तिना यथापूर्वं नीचोच्चभावेनैव प्रजायत इति समग्रवचनार्थः ॥ ✻ ॥

## नच ' एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्म्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्ग्गुणश्च' इत्यादिश्रुतिविरोधः । सत्त्वादिगुणाभावोक्तेस्तत्र । अन्यथा 'एको देवः सर्वभूतेषु गूढः–' इत्यादीनामपि गुणत्वात् स्वोक्तिविरोधः ॥

ननु भवदुदितं सृष्ट्यादिकारणं सगुणं ब्रह्म शबलम् । शुद्धं तु ब्रह्म निरस्तनिःशेषविशेषम् । तस्माद् भवदुदितं सर्वं भस्मनि हुतमित्याशङ्कते– नचेति । **'एको देवः–'** (श्वे.उ.६.११) इति भगवती

श्रुतिरेव निर्गुणं ब्रह्मेत्याह । नास्माभिस्तत्र पृथक् प्रयतितव्यमित्यर्थः । पूर्ववाद्युदितं श्रुतिवचनं न तदुक्तनिर्गुणत्वसाधनक्षममिति तद्वादस्य नीचत्वं नचेति चशब्देनाऽह । तत् कुतः? तत्र यत्र निर्गुणत्ववचनं तत्र सर्वत्र सत्वादिगुणत्रयाभावोक्तेः । तदपि कुतः? अन्यथा स्ववचनविरोधेन श्रुतेरुन्मत्तवचनत्वप्रसङ्गात् । तज्ज्ञापनार्थमेव हि समग्रस्य मन्त्रस्योद्धरणम् ॥

अयमर्थः– स्थानतोऽपि भेदरहित एकः । समाधिकरहितश्च एकः । द्योतनाद्देवः । सृष्ट्यादिकं यस्य क्रीडामात्रं सोऽपि देवः । क्रीडादिगुणक इत्येतत् । सर्वव्यापी सर्वोत्तमश्च देवः । **दिवु क्रीडाविजय-व्यवहारद्युतिस्तुतिमोदकान्तिगतिषु** इति प्राचीनो धातुपाठः । सर्वभूतेषु द्योतते, अथापि गूढः । देशतः कालतो गुणतश्च सर्वं व्याप्नोतीति महतो महीयान् । सर्वजीवानामन्तः स्थित्वाऽऽदानादि करोतीति सर्वभूतान्तरात्मा । अणोरणीयान् । सर्वकर्मणामुपर्यस्याक्षाणि वर्तन्त इति कर्माध्यक्षः । कर्माधिपतिः प्रवर्तकश्च । सर्वभूतानामधिवासः । साक्षादीक्षत इति साक्षी । **'साक्षाद् द्रष्टरि सञ्ज्ञायाम्'** (अ.सू.५.२.९१) इति पाणिनिः । चेता चैतन्यरूपः । **चिती सञ्ज्ञाने** । केवलः देहेऽपि जडमिश्रितो न भवतीति केवलचैतन्यरूपः । समाधिकरहितो वा । एवं दशभिः पदैर्बहून् गुणान् वदन्ती श्रुतिः किमन्ते **'निर्गुणश्च'** इति स्ववचनमेव व्याजिघांसत्यनुन्मत्ता? अतो निर्गुण इत्यपि गुणान्तरं विधत्ते दोषमूलसत्त्वादिगुणरहित इति । भारते च स्फुटमाह– **त्रैगुण्यवर्जितमिति** । **'श्रुतत्वाच्च'** (१.१.११) इति च बादरायणसूत्रम् । **'इत्यादि–'** इत्यादिपदेन– **'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्'** (काठ.१.८), **'अद्रेश्यमग्राह्यमचक्षुःश्रोत्रं तदपाणिपादम्'** (आथ.१.१.), **'अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा'** (माण्डू.१.२) इत्यादीनां ग्रहणम् ॥ ❊ ॥

अथ युक्तिभिः सर्वत्र ततां शाङ्करीं निर्गुणत्वपरिकल्पनामेव निरास्यत्–

## नच निर्विशेषं नाम किञ्चिदस्ति ।

उजेर्यपण्डितानां द्वे मुखे बभूवतुः । यज्ञकर्मणि निर्देवाः । व्यवहारे शाङ्करा इति निर्गुणदेवाः । उभयमपि निरस्तम् । सम्प्रति शशशृङ्गतुल्यं निर्गुणत्वमिति नैर्गुण्यवादमेव समूलं निर्मूलयितुमय-मारम्भः । 'अयि उजेर्यपण्डिताः, यूयमाचारे निर्देवा बभूव । विचारे पुनर्निर्गुणदेवाः बभूव । कथमिदं

द्वयमेकत्र सङ्घाघटीति । नरकसाधनं द्वयमपि परित्यजत । वयं वः सुपन्थानं दर्शयितुमेवैनं ग्राममावसामः' इति करुणया तान् बोधयन्निव भगवत्पाद उत्तरं सन्दर्भं निबबन्ध । अन्यथा वेदार्थचिन्तनसुखमपहाय कथं शुष्ककल्पे तर्के मनो लगयेत् ॥ * ॥

निर्विशेषं किमपि नास्तीति मयोच्यते । तदा किं वदसे? अथ तूष्णीकामास्से निगृहीतोऽसि । गतं ते वादित्वम् । यदि वदसे– अस्ति निर्विशेषमिति तदाऽपि निगृहीतोऽसि । गतं ते वादित्वम् । आगतो निर्विशेषेऽप्यस्तित्वं नाम विशेषः । व्याहतमभाषथाः । एवमुभयतःपाशा रज्जुस्ते गलमलङ्करोति । तदिदमुक्तम्–

## निर्विशेषत्वोक्तेरेव व्याहतत्वात् ।

एवं **'सत्यं ज्ञानमनन्तं ब्रह्म'** इत्यादीन् बहून् विशेषानुदधरच्छ्रुतिः । तत्राप्येवमेव । **'गुरोस्तु मौनं व्याख्यानं शिष्यास्तु च्छिन्नसंशयाः'** ॥

## निर्विशेषत्वेन विशिष्टं नवेत्युक्ते, यद्यविशिष्टम्, न विशेषनिराकरणम् । विशेषवत्त्वमेव भवति । यदि तेन विशिष्टम्, स एव विशेष इति व्याहतिः ॥

आस्तामन्यत् । इदमुच्यताम् । निर्विशेषं निर्विशेषत्वेन विशेषेण विशिष्टं नवा? यदि विशिष्टम्, गतं तर्हि निर्विशेषत्वम् । यद्यविशिष्टम्, ननु भोः, तर्ह्यपि गतं निर्विशेषत्वम् ॥

ननु विचित्रेयं वादसरणिस्तत्त्ववादिनाम् । सत्यम् । निर्विशेषं निर्विशेषत्वेन विशेषेण विशिष्टम् । किं तेन? स न दोषः । किन्तु गुण एव । तथाहि– पट्टणप्रतोल्यां पार्श्वभित्तिकायां राजाधिकृताः स्थानिका एवं गमनिकापट्टिं लेखयित्वा स्थापयन्ति– 'अत्र किमपि न लेखनीयम् । लिखन् शिक्षार्हो भवति' इति । तां पट्टिं पठित्वा कश्चिदपटुः पल्लीवासी ब्रूयात्–'तर्हि कथमियं लेखबद्धा पट्टिकाऽत्र घट्टिता । अन्यथा सोऽपि लेखयिताऽधिकारी शिक्षार्हः स्यात्' इति । नागरिका एनं हसन्ति । तद्वदियं तत्ववादिनां वादसरणिरिति ॥

अयि भोः, अद्भुतं भाषसे । खण्डखाद्यमिव स्वादु भाषसे । तेनाकुशलान् वादे मोहयितुमपि प्रभूयाः । शृणु वैदिकम्मन्य, तत्र द्वौ घटकौ भवतः । आज्ञापयिता स्थानिकोऽधिकारी । आज्ञापालकश्च प्रजावर्ग इति । अतो न विरोधः । अत्र तु न तथा । त्वमेव निर्विशेषत्वमूरीचकर्थ । उवक्थ च विशेषान् । अतो निर्विशेषत्ववादी व्याहतमेव बभाषे ॥ ✻ ॥

ननु अशेषविशेषनिषेधो हि निर्विशेषत्वम् । तत् कथं व्याहतिः । भावधर्मानेव हि वयं निराकुर्ष्महि । अयि प्रियसुहृत् मायावादिन्, मा स्मैतावता निरातङ्को भवः । सम्प्रत्यपि व्याहतिपिशाचस्तव स्कन्धमध्यास्य नृत्यत्येव । यतः सर्वेऽपि भावधर्मा अभावधर्मा अपि भवन्ति । अभावधर्माश्च भावधर्माः । घटाभावाभावो घट एव हि । देहाभावश्च भस्मता । कोशकारा न स्त्रियामिति पठन्ति । पुन्नपुंसकमित्येवोक्तं भवति । तस्माद् भावमुखनिर्देशे भावत्वम् । अभावमुखनिर्देशे तस्यैवाभावत्वम् । तस्मान्मा व्याहतेरुत्तीर्ण इत्युच्छीर्षो भूः ॥

ननु तत्ववादिन्, न मे काऽपि युक्तिः प्रतिभायात् । न हि न मे प्रतिभातीत्येतावता तथ्यमतथ्यं भवति । सम्प्रदायविद्भिः पूर्वाचार्यैः शिष्टैरभ्युपगतमिति वयमप्यनुवर्तामहे । उक्तं हि– **'शिष्टाचारात् स्मृतिः कल्प्या स्मृतेश्च श्रुतिकल्पना'** इति । तमेतं सम्प्रदायमुग्धं प्रत्याह भगवत्पादः–

## नच निर्विशेषत्वे किञ्चिन्मानम् ।

ब्रह्मणो निर्विशेषत्वे । कुतः? अदर्शनादेव । ननु शिष्टाचारो दृश्यते । ततः श्रुतिस्मृती कल्प्येते । तदिदं सम्प्रदायान्ध्यं नाम । सम्यक् प्रकृष्टो दायो दानं हि सम्प्रदायः । श्रुतिस्मृतिसिद्धत्वं सम्यक्त्वम् । परम्परया शिष्टैरनुवर्तितत्वं प्रकर्षः । तथाच अनिर्णयगर्त्ते पतितोऽसि । शिष्टानामविगीतत्वे श्रुतिस्मृतिकल्पना । श्रुतिस्मृतिसाहित्ये शिष्टानामविगीतत्वमित्यन्योन्याश्रयात् ॥

न केवलं प्रमाणाभावः । किन्तु–

## अशेषविशेषवचनानुभवयुक्तिविरोधश्च ।

समुच्चयार्थश्चकारो प्रमाणविरोधस्य प्राबल्यं नामाऽधिक्यं चाऽह ॥

अशेषाण्यपि वचनानि विशेषविषयाणि । न यङ्किञ्चिद् विशेषमृते वचनस्य प्रवृत्तिः सम्भवति । विरोध-परिहाराय मूकतैव भूषणं भवेत् । विशेषमृते व्यवहार एव न सम्भवतीत्यशेषलोकानुभवश्च । नहि निर्विशेषो वाग्व्यवहारो केनाप्यनुभूतचरः । नापि युक्तयः । अनुभवविरोधादेव । सर्वाण्यप्यनुमानानि विशेषवन्ति हि भवन्ति । श्रुतिर्न निर्विशेषवादिनी शब्दत्वादिति युक्तिश्च ॥ ✽ ॥

## नच मित्थ्याविशेषवत् । व्याहतेः । मित्थ्याविशेष इत्युक्ते ह्यसद्विशेष इत्येव भवति । तथाचाविशेषपक्षोक्तदोष एव ॥

ननु विशेषं वक्ति श्रुतिः । किन्तु मिथ्याभूतम् । किमुक्तं भवति? मिथ्येति विशेषस्यासत्वमुक्तं भवति । मतुपा च सत्त्वम् । मम माता वन्ध्येतिवदिदं व्याहतं भवति । भवांश्च व्याहतभाषी भवति । मिथ्याशब्दो ह्यसद्वचनो लोके प्रथितः । मिथ्यैव रजतं प्रत्यभादित्युक्ते असदेव रजतं प्रत्यभादिति सर्वोऽपि प्रत्येति । **‘मिथ्या मृषा च वितथे’** इति यादवप्रकाशाचार्यः । तथाच निर्विशेषत्वमेवोक्तं भवति । तत्पक्षे ये दोषा उक्तास्ते सर्वेऽत्राप्यनुसन्धेयाः । तथाच भगवतीं श्रुतिमपि मिथ्याभाषिणीं व्याहतभाषिणीं च चकर्थ ॥

## नचानिर्वचनीयविशेष इति भवति । अनिर्वचनीयासिद्धेः ॥

विशेषो न मिथ्या शशशृङ्गमिव, किन्त्वनिर्वचनीय इत्ययं पक्षोऽपि नैव सम्भवति । आदौ तावद् भवदभिमतमनिर्वचनीयत्वं नाम किमिति निर्वक्तव्यम् । इदमित्थमिति साकल्येन वक्तुमशक्यमिति निरुक्तज्ञा निर्वदन्ति । नच तत् तव सम्भवति । **‘यद् वाचाऽनभ्युदितम्’**, **‘न तत्र वाग् गच्छति’** इत्यादिना ब्रह्मैवानिर्वचनीयमिति मिथ्या, निर्वचनीयमिति जगत् सत्यमिति स्यात् । तस्मादस्मद-भिमतं श्रौतं चानिर्वचनीयत्वं तव पक्षे न सम्भवति । यदि ब्रूषे, यद् दृश्यते, अथापि परमार्थतो न विद्यते तदनिर्वचनीयमिति । तदपि अस्मत्पक्षे जगति न भवति । मिथ्येत्युक्ते नास्तीत्येवार्थः प्रतीयते । अनिर्वचनीयस्य मिथ्याशब्दार्थत्वमपि नास्ति । पठ शब्दशास्त्रम् । पठाभिधानानि । पठ निरुक्तम् । न क्वापि मिथ्यापर्यायत्वेनानिर्वचनीयं पठ्यते । तत् कोऽयमनिर्वचनीयविशेषो नामाष्टमो

रसः? तदिदमाह– **अनिर्वचनीयासिद्धेः** । त्वदभिमतानिर्वचनीयस्याप्रसिद्धत्वात्, उभयसम्मतस्यानिर्वचनीयत्वस्याभावात् किमेतेन परिष्कारेण बस्तगलस्तनायितेन? ॥ ✻ ॥

कोशेष्वपाठि, मा च वा पाठि । प्रामाणिकत्वात् तत्ववादिभिरप्यङ्गीकार्यमिति स्वमताभिमानेन प्रलपन्तं प्रत्याह–

## नहि तत्र प्रत्यक्षमस्ति । मित्थ्याशब्दस्त्वभाववाद्येव । तदन्यत्र प्रमाणाभावात् ॥

भगवद्गुणा वा तेषामनिर्वचनीयत्वं वा न प्रत्यक्षविषय इति तवापि सम्मतं हि । न तत्साधनाय प्रयतनीयम् । ननु लोके प्रत्यक्षतोऽनुभूयते । दूरतः शुक्तिं पश्यति । रजतमिदमिति भ्रमति । तद्ग्रहणार्थमभ्याशमेति । यदा शिरोऽवनम्य हस्तं प्रसारयति तदा जानाति नेदं रजतमिति । तदा निराश एवमुद्गिरति । मिथ्यैवेदं प्रत्यभादिति । सोऽयं मिथ्याशब्दोऽनिर्वचनीयं वदतीत्यस्माकमभ्युपगमः । तत् कथं न प्रत्यक्षमस्तीति । अत आह– **मिथ्याशब्दस्त्वभाववादी** । नहि भवदभ्युपगमेन शब्दस्यार्थो निर्णीयते । मिथ्याशब्दस्त्वभावं वदति– असदेवेदं रजतं प्रत्यभादिति । नहि '**अनिर्वचनीयमेवेदं प्रत्यभात्**' इति कोऽप्यनुभवति । सत्यं मिथ्याशब्दोऽभावं वदति । को नेत्याह? नाभावमात्रं वदति । अनिर्वचनीयं च वदतीति वयमाचक्ष्महे । अवश्यमाचक्ष्व । न तेनार्थसिद्धिः । अनिर्वचनीयवादित्वे न किञ्चित् प्रमाणं पश्यामः । तदेतदाह– **तदन्यत्र प्रमाणाभावात्** ॥

ननु विश्वं मिथ्येत्युक्ते विश्वमनिर्वचनीयमित्यनुभवो भवति । अयि प्रियानिर्वचनीय, क एवमनुभवति? नहि लोके कोऽपि तथाऽनुभवन् दृश्यते । आ बालादा वृद्धं सर्वोऽपि मिथ्येति पदमाकर्ण्य नास्तीत्येवावधारयति ॥

ननु वयं मायावादिनोऽनुभवामः । अवश्यमनुभव । गुरुस्ते मिथ्याशब्दोऽनिर्वचनीयवचन इत्युपदिदेश । क्रियासमभिहारेण तत् श्रावंश्रावं तदेव परमं सत्यमिति भ्रमिथ । स एष भगवान् भ्रमस्त्वां तथाऽनुभावयति । अनुभावयन् तदेव सत्यमिति भ्रामयति । मिथ्यादृष्टिरियम् । हन्त, शतवारमावर्तने

असत्यमेव सत्यमिति भाति । तेन भ्रान्तिमेव यथार्थानुभवममन्यथाः । बलवान् हि भगवानभ्यासः । दासेरकः कण्टकमपि मधुरमास्वदते ॥

## नचान्यत् प्रमाणम् । प्रतिज्ञाव्याहतेः ॥

अथ भवदभिमतमनिर्वचनीयत्वं न क्वापि देशेषु वैदिकेषु वा श्रुतम् । तत्र पुनर्ब्रह्मणोऽनिर्वचनीयत्वमुच्यते– **'अद्भुतत्वादनिर्वाच्यम्'** इति । निर्वर्णयन्तोऽपि न निर्वर्णयन्ति । तेन वर्णयन्तोऽपि न वर्णयन्तीत्येतत् । तदिदमन्धानां गजदर्शनम् । गुरुणोक्तमिति शिष्यः श्रद्धत्ते । एवं तच्छिष्यः । तच्छिष्योऽपि । एवमन्धपरम्पराऽपि शास्त्रपदवीमध्यास्ते । तदेतदुक्तम्– **'अन्धेनैव नीयमाना यथाऽन्धाः'** इति । दुर्गमोऽयं पन्थाः । प्रतिपदं जागरूकेण भवितव्यम् । किञ्चित् स्खलनमपि सतः पथः प्रच्यावयेत् । सुकरोऽधःपातः । दुष्करमूर्ध्वगमनम् । अथापि गन्तव्यमेव । नान्यः पन्थाः । निराग्रहेण मनसा पृष्ट्वापृष्ट्वा विम्रष्टव्यं भवति । विमर्शंविमर्शं चक्षुषी निमील्य चिरं मन्तव्यं भवति । मत्वा-मत्वा ध्यातव्यं भवति । ध्यायन्ध्यायं द्रष्टव्यं भवति । एवं चिरप्रयतनेऽपि सत्यं भायात्, न वा भायात् । तस्मात् केवलतर्केण न किञ्चित् प्रयोजनम् । तदिदं प्रथमं ज्ञातव्यं वादमुग्धैर्मायावादिभिरपि तत्ववादिभिरपि । न स्वयमनुभवन्ति । ग्रन्थेषु पठितं सभासु वमन्ति । तदेतद् ग्राहयितुमाचार्यः तर्केणैव तर्कस्य वैफल्यं विश्लिष्यविश्लिष्य दर्शयति । तदिदं शत्रुप्रयुक्तस्याऽयुधस्य तं प्रत्येव प्रतिनिवर्तनं नाम । तदेतदाह– **नचान्यत् प्रमाणम्** ॥

प्रत्यक्षमागमश्च नानिर्वचनीयं साधयत इत्युक्तम् । ताभ्यामन्यदवशिष्टमनुमानम् । प्रत्यक्षमागमं वाऽनुसृत्य यन्मानं तत् कथं स्वयमनिर्वचनीयं साधयेदिति पूर्वपक्षस्य दौर्बल्यं चकार आह समुच्चयेन सह । दुर्बलोऽपि शत्रुरामय इवोपेक्षितः प्रवर्द्धत इति तदपि निराह– **प्रतिज्ञाव्याहतेः** ॥

यद्यप्यनिर्वचनीयं साधयितुं नानुमानं क्षमम् । अथापि मिथ्याशब्दः अनिर्वचनीयवचनः तथा शिष्टैर्व्यवह्रियमाणत्वात्, विश्वमनिर्वचनीयम्, बाध्यत्वादित्याद्यनुमित्ससे श्लाघामहे तुभ्यं साहसिने विप्रतीपभाषिणे । यदनिर्वचनीयं वचनीयमुवचिथ । एवं सर्वदा व्याहतमेव भाषमाणः शोभसे ॥

## नहि सदन्तरादसतश्चान्यत् सदसद्विलक्षणं प्रसिद्धम्?

ननु निर्वक्तुं योग्यं निर्वचनीयमिति तत्ववादिनां प्रक्रिया । न वयं तथा ब्रूमः । त्वत्प्रक्रियया मास्म नष्टीकेथाः । वयं तु सदसद्विलक्षणमनिर्वचनीयं ब्रूमः । को नाम जगतः सदसद्विलक्षणत्वं निरुरुत्सति, निरोद्धुमीष्टे वा? अयि किमुवक्थ? को नाम निरुरुत्सतीति? सत्यम्, न वयं निरुन्ध्महे । सदन्तराद् विलक्षणम्, असतश्च विलक्षणं जगदिति को नाम नाङ्गीकरोति? तदेवाऽह–

**नहि सदन्तरादसतश्च अन्यत् सदसद्विलक्षणं प्रसिद्धम् ॥**

अत्र मूलपाठविषये किञ्चिद् विवेक्तव्यं भवति । श्रीहृषीकेशतीर्थलिखिते मूलकोशे नायं ग्रन्थ उपलभ्यते । येन पाठस्य ऐदमित्थ्यं निश्चीयेत । श्रीनरहरितीर्थव्याख्यानमपि दौर्भाग्यान्नष्टम् । तेन श्रीहृषीकेशतीर्थपरम्परायामागतैः श्रीरघुवर्यतीर्थैः मूलपाठमनुसृत्य लिखित्वा संरक्षितं पुस्तकमेव सम्प्रति पाठनिर्णये शरणम् । तत्रापि '**नहि**' इत्येव पठ्यते । सर्वैरपि पूर्वव्याख्यातृभिः स एव पाठः समादृतः । आपातत इदमनन्वितमिव भाति । अतोऽध्याहारेण कथञ्चिद् योजयन्ति– '**सदन्तरादसतश्च विलक्षणादन्यत्**' इति ॥

मितभाषिणां महतां ग्रन्थेषु स्युरध्याहाराः । अयं तूजेर्यपण्डितानां चक्षुरुन्मीलयितुं भगवत्पादेन कृत उपन्यासः । ईदृशेषूपन्यासेषु प्रायो नाध्याहारस्यावकाशः । अतः विनाऽध्याहारं वाक्यार्थनिर्णयः प्रदर्श्यते । वस्तुतः काक्वा भणितमिदम् । भाषणे स्वरेणाभिप्रायो बोध्यते । नाध्याहारेण । का काकुः? श्रूयताम्– प्रश्नार्थे हिः । तथाहि मेदिनीकारः– '**हि पादपूरणे हेतौ विशेषेऽप्यवधारणे । प्रश्ने हेत्वपदेशे च सम्भ्रमासूययोरपि**' इति । तथाचायमर्थः– सर्वमपि वस्तु स्वेतरस्मात् सर्वस्मादपि भिन्नमेव प्रतीयत इति सदन्तरादन्यत्वं सर्वलोकप्रसिद्धम् । एवमसतोऽन्यत्वमपि । एवं स्थिते जगत् सदसद्विलक्षणमिति सर्वलोकप्रसिद्धं नहि? सर्वलोकप्रसिद्धं न किमित्यर्थः । तथाच सिद्धसाधनता । इष्टापत्तिश्च । तथाच ननु इतिवत् नहि इत्यपि । एवं प्रश्नार्थककाकुस्वरेणैव वाक्यार्थपूर्तौ नाध्याहारापेक्षा ॥ ✻ ॥

## असन्न भवतीत्युक्ते च, द्वौ नञौ प्रकृतमर्थं गमयत इति सदेव भवति । असदन्तरं वा, विशेषविवक्षायाम् ॥ ✻ ॥

ननु यदसन्न भवति सच्च न भवति तदेव सदसद्विलक्षणं ब्रूमहे । नूनं ब्रुवीथाः । अथापि व्याहतिं न निवारयसि । तथाहि **असन्न भवतीत्युक्ते सदेव** इत्युक्तं **भवति** । कुतः ? **द्वौ नञौ प्रकृतमर्थं**

**गमयत** इति न्यायात् । अत्र घटाभावो न वर्तत इत्युक्ते घटो वर्तत इत्येव किलार्थः । पुनः सच्च न भवतीति वदन् कथं न व्याहतभाषी भवेः? अत्र घटाभावो न वर्तते घटश्च न वर्तत इतिवत् । एवं सन्न भवतीत्युक्ते असदित्युक्तं भवति । परस्परविरुद्धयोरेकस्य विरहेऽपरसत्तानियमात् । पुनः सच्च न भवतीति व्याहतिरेव ॥

असन्त्यपि विशेषवन्ति भवन्ति । नृशृङ्गमसत् । अश्वशृङ्गमसत् । श्वशृङ्गमप्यसत् । नृशृङ्गमित्यत्र शृङ्गाभावसम्बन्धितया ना प्रतीयते । नाश्वः, न श्वा । अश्वशृङ्गमित्यत्र शृङ्गाभावसम्बन्धितयाऽश्वः प्रतीयते । न ना, न श्वा । श्वशृङ्गमित्यत्र शृङ्गाभावसम्बन्धितया श्वा प्रतीयते । न ना, नाश्वः । नतरां गर्दभः । नचैतेषां न कोऽपि विशेष इति वक्तव्यम् । विशेषणवैयर्थ्यात् । एभ्यः सर्वेभ्यो विशिष्टमन्यादृशमसत् जगद् वक्ष्यामः । कामं वग्धि । कस्ते लाभस्तेन? असदन्तरं जगदित्युक्तं भवति । नत्वसद्विलक्षणं जगत् । तेन तदपि तवाहितमेव । तदेतदाह– **असदन्तरं वा विशेषविवक्षायाम्** ॥ ❋ ॥

## किञ्चैतद् वैलक्षण्यं भेदोऽभेदो भेदाभेदौ वा? न तावद् भेदः । अनङ्गीकारात् । व्यावहारिकभेदश्चानिर्वाच्यसिद्धौ वक्तव्यः ॥

आचार्यप्रागल्भ्यं स्फुटमनुभूय तत्पुरत उत्थाय प्रतिवदितुमप्यपारयन्त उजेर्यपण्डिताः परस्परं मुखं प्रेक्षमाणा अन्तश्चिन्तयाश्चक्रिरे – **'बाध्यत्वात् सद्विलक्षणम्, रज्जुसर्पवत् । प्रत्यक्षं दृश्यमानत्वात् असद्विलक्षणम्, रज्जुसर्पवदेव । सोऽयं नः सिद्धान्तसारः । तत्किमाचार्योऽयमेवं वदति'** इति ॥

तेषां मनोगतं जानन् भगवत्पादो वदितुमारेभे– **किञ्चेति** । अन्यच्चेदं पृच्छ्यत इत्यर्थः । सदसद्विलक्षणं जगदिति वदन्तं भवन्तमेव पृच्छामः– भवन्मते वैलक्षण्यमिति किमुच्यते? ननु भेदः । विभिन्नं लक्षणं यस्य तत् किल विलक्षणम् । विरुद्धं लक्षणं वा । तर्हि सद्विलक्षणमिति सतो ब्रह्मणो भिन्नमित्यायातम् । न तद् युक्तम् । भेदो मिथ्या भेदत्वादित्यद्भुतं तर्कं प्रतुष्टूषता भवता **अनङ्गीकाराद्** भेदस्य । अन्यथाऽस्मत्समयपक्षपाती स्याः ॥

नात्र पारमार्थिको भेद उच्यते । किन्तु व्यावहारिकः । तथाच सद्विलक्षणं नाम सतः सकाशात् व्यावहारिकभेदवदित्युक्तं भवति । अस्मन्मते सत्यमेव व्यवहारपात्रमुच्यते । न तत् तेऽभिमतम् । तस्मात्

भवत्प्रक्रियानुसारेण व्यावहारिकमित्यनिर्वाच्यमुच्यत इति वक्तव्यम् । किमङ्ग, अनिर्वचनीय-मनिर्वचनीयमित्याम्रेड्यते? तदेव किमिति न स्फुटं साधितम् । प्रथमं तन्निरूप्यताम् । यन्निरूपितं तदस्माकमप्रसिद्धम् । तथाच व्यावहारिकभेदश्चानिर्वाच्यसिद्धौ वक्तव्यः । अनिर्वाच्यं च व्यावहारिक-भेदसिद्धौ वक्तव्यम् ॥

## नचाव्यावहारिकं किञ्चित् । नचाशेषव्यवहारनिवृत्तौ किञ्चिन्मानम् ॥

अस्माकं तु नये व्यावहारिकत्वं नाम व्यवहारगोचरत्वम् । तेनाव्यावहारिकं किञ्चिदपि नास्ति । नहि कदाचिदशेषव्यवहारनिवृत्तिर्भवतीत्यत्र किञ्चिन्मानम् । उभयमपि निर्हेतुकत्वात् कल्पनामात्रमिति नीचत्वं चशब्दाभ्यामाह । तस्मात् पारमार्थिकसत्यस्यापि निराबाधं व्यावहारिकत्वम् ॥

## नच मित्थ्यातत्थ्ययोः सामान्यं व्यावहारिकत्वम् । धूमबाष्पयोर्द्धूमत्ववत् ॥

अस्तु सत्यस्यापि व्यावहारिकत्वं भवन्मते । विशेषमविवक्षित्वोभयसाधारणं वैलक्षण्यं साध्यमिष्यते । तर्हि धूमबाष्पसाधारणं धूमत्वमपि त्वमपहाय त्रपां हेतूकुर्याः । अत्यद्भुतं ते तर्ककौशलम् । तदुक्तं भट्टेन श्लोकवार्त्तिके–

**सत्यत्वं नहि सामान्यं मृषार्थपरमार्थयोः ।**
**वञ्चनार्थमुपन्यासो लालावक्त्रासवादिवत् ॥**

## नचाभेदः । अनङ्गीकारादेव । तथैवोभयम् ॥

चकारो गर्हासमुच्चययोः । यदि कश्चिन्निरपत्रपो जाल्मो जल्पेत्– ज्ञानिभिर्गर्हितमपि वैलक्षण्यमित्यभेद एवेत्यहं ब्रवीमीति, तदप्याशामात्रमित्यर्थः । कुतः? **अनङ्गीकारादेव** । वैलक्षण्यं नामाभेद इति न केनाप्यङ्गीकृतम् । अशब्दार्थत्वात् । न भवताऽपि । तेन तन्निरासार्थं विशिष्य नास्माभिः प्रयतितव्य-मित्येवकारार्थः । उभयमिति भेदश्च अभेदश्च । तदुभयं वैलक्षण्यमिति पक्षोऽपि **तथैव** अनङ्गी-कारादेव । उद्भवन्नेव यो मृतस्तस्य वधाय किमायुधान्वेषणेन?

ननु सर्वमिदमभित्तिचित्रायितम् । नभसि रेखाविन्यासः । नपुंसकस्य पुंसवनम् । परैरनुक्तमनूद्य किं मुधा निराक्रियते?

शृणु कारणम् । बालानां बोधाय यथा विदलंविदलं विश्लिष्य पाठयन्ति तथेदमिति जानीहि । तथाहि– शाङ्करं समयमपि सम्यगजानतः उजेर्यपण्डितपूगस्य आ प्रातरा सायं अग्निमुग्धस्य धूमतान्तस्य वेदाभ्यासजडस्य तर्ककर्कशं मार्गं परिचाययन् भगवत्पादस्तं कान्दिशीकयन् लीलया विजहार जितकाशी । पण्डितपूगस्तु विलक्षस्तूष्णीं तस्थौ गहने वने पान्थइव भ्रष्टाध्वा । सोऽयं तर्कस्य कर्कशः पन्थाः यत् प्रतिवादिनमनल्पविकल्पगहने निपात्य तस्य दिङ्मूढताजननम् । उजेर्यपण्डितानां तदिदं तर्कवैतथ्यमनेन दर्शयामास भगवत्पादः ॥ ✻ ॥

## अभेदे चानिर्वाच्यब्रह्मणोस्तच्छब्दयोः पर्य्यायत्वम् । नच व्यावर्त्त्यविशेषेणापर्य्यायत्वं क्वचित् ॥

नन्वनङ्गीकारादेव नाभेदोऽर्थ इत्युक्तम् । अङ्गीक्रियते चेत् को दोषः? नचाशब्दार्थत्वं दोषः । विगतं भेदलक्षणं लक्षणं यत्रेति योगवृत्त्या शब्दार्थत्वसम्भवात् । एतमेव योगमाश्रित्य भागुरिः निष्प्रयोजनमस्तित्वं वैलक्षण्यशब्दार्थमाह– **'विलक्षणं मतं स्थानं यद् भवेन्निष्प्रयोजनम्'** इति । एवमपलपन्तं प्रत्याह– **अभेदे च** । सद्वैलक्षण्यमित्यत्र अभेदे वैलक्षण्यशब्दार्थेऽङ्गीक्रियमाणे च । चकारः पूर्वोक्तं दोषं समुच्चिन्वन्नस्य पक्षस्यातिनीचत्वमाह । इदमुक्तं भवति– एवं सति सतः ब्रह्मणः सकाशात् विलक्षणमभिन्नं जगदित्युक्तं भवति । ब्रह्मैकमेव हि तन्मते सदित्युच्यते । एवमनिर्वचनीयब्रह्मणोरभेदे च ब्रह्मैवानिर्वचनीयमिति विपरीते पर्यवसानं स्यात् । न केवलं तावदेव, अनिर्वाच्यब्रह्मशब्दयोः पर्यायत्वं च स्यात् । काको मौकुलिरितिवत् । एवं सत्यं ज्ञानमनन्तं ब्रह्मेत्यपि ब्रह्म ब्रह्म ब्रह्मेत्युक्तं स्यात् ॥

**नच क्वचित्** न क्वचिदपि । अन्यथा अमरा निर्जरा इत्यनयोरप्यपर्यायत्वं स्यात् । यतोऽमरा इत्यनेन मरणं व्यावर्त्यते । निर्जरा इति जरा । एवं सर्वत्र । तथाच सत्यमिति असत्याद् व्यावृत्तमुच्यते । ज्ञानमिति जडाद् व्यावृत्तमुच्यते । अनन्तमिति नश्यमानाद् व्यावृत्तमुच्यत इति वदन्तो दत्तोत्तराः । तथा ह्याचक्षते–

**'अनृतजडविरोधिरूपमन्तत्रयमलदुःखताविरुद्धम्'** इति ॥ ✻ ॥

**व्यावर्त्यविशेषस्तद्व्यावृत्ते ब्रह्मणि विशेषमापादयति चेत् विशिष्टवाक्यार्थता । न चेन्न ब्रह्मज्ञानार्थिनः पदान्तरं वाच्यम् । असङ्गतत्वात् ॥**

असत्याद् व्यावृत्तिरुच्यत इति कोऽर्थः? तदिदं पदमसत्याद् व्यावृत्तत्वरूपं विशेषं ब्रह्मण्यापादयतीति किलोक्तं भवति । तर्हि न निर्विशेषं ब्रह्मोच्यते । असत्याद् व्यावृत्तिविशिष्टं ब्रह्मोच्यत इति किल वाक्यार्थः । ननु भावधर्मा एव निषिध्यन्ते नाभावधर्मा इत्युक्तम्? तस्योत्तरमप्युक्तम्– सर्वे भावधर्मा अभावधर्मा अपि भवन्ति । अभावधर्मा भावधर्मा अपीति । तदेतद् दर्शयन् व्यावृत्तिविशिष्टमित्याह । व्यावृत्तिविशिष्टत्वं भावधर्म एव हि । घट्टकुट्टीप्रभातमिदम् । ततो वरं यथाश्रुतं सत्यत्वादिविशिष्टं ब्रह्मोच्यत इत्यङ्गीकरणम् ॥

न कमपि निर्विशेषे ब्रह्मणि विशेषमापादयतीति चेत्, तर्हि निर्विशेषब्रह्मज्ञानार्थिनः ब्रह्मेति पदमेकं पर्याप्तम् । व्यर्थं पदान्तरम् । असङ्गतं च श्रुतिवचनं भवति । नहि श्रुतिरपार्थमाम्रेडतीति वक्तुं युक्तम् ॥

**मित्थ्याविशेषस्य चासिद्धिरुक्ता ।**

ननु सन्ति व्यावर्त्यविशेषाः । तेऽपि मिथ्याभूता इति वदामः । अयि मायिरूप, जानास्यपलपितुम् । किन्तु न शक्यमेतत् । यतो मिथ्येति किमुच्यत इति नैतावन्तमनेहसं निरवोचः ॥

**ततोऽन्योन्याश्रयताऽनवस्थितिश्चक्रकं वा ॥**

फलितमाह– तत इति । अनिर्वचनादेव हेतोः । मिथ्यात्वसिद्धौ व्यावहारिकसत्यत्वसिद्धिः । व्यावहारिकसत्यत्वसिद्धौ मिथ्यात्वसिद्धिरित्यन्योन्याश्रयता । एवं भगवतो निर्गुणत्वसिद्धौ मिथ्याविशेषसिद्धिः । मिथ्याविशेषसिद्धौ निर्गुणत्वसिद्धिरित्यन्योन्याश्रयता ॥

ननु निरवोचम्– सदसद्विलक्षणत्वं व्यावहारिकसत्यत्वमिति । तर्हीदमन्यदापतितं चक्रकं नाम । सदसद्विलक्षणत्वसिद्धौ व्यावहारिकसत्यत्वसिद्धिः । तत्सिद्धौ मिथ्यात्वसिद्धिः । तत्सिद्धौ सदसद्विलक्षणत्वसिद्धिरिति । एवं **'केवलो निर्गुणश्च'** इति श्रुतेर्भगवतो निर्गुणत्ववाचित्वसिद्धौ

भगवतो निर्गुणत्वसिद्धिः । तत्सिद्धौ मिथ्याविशेषसिद्धिः । तत्सिद्धौ श्रुतेर्निर्गुणत्ववाचित्वसिद्धिः । एवमन्योन्याश्रयतागर्ते वा पततः, चक्रके वा लगित्वा निरन्तरं भ्रमतस्ते सतां संसत्सु अनवस्थितिरेव शरणम् ॥

अपिच मिथ्याविशेषाणां ब्रह्मणः सकाशाद् भेदोऽभेदो भेदाभेदौ वा । भेद इत्येव वक्तव्यम् । सोऽपि भेदो मिथ्याविशेषाद् भिन्न इति वक्तव्यम् । भवन्मते भेदभेदिनोरभेदानङ्गीकारात् । तेन सोऽप्येवं सोऽप्येवमित्यनवस्थितिः ॥ ❋ ॥

## भेदाभेदविलक्षणमप्युक्तरीत्यैवापाकृतम् ॥

नन्वेतेषां सर्वेषां दोषाणामपाकरणाय अस्माभिर्नवीनः पन्था आविरक्रियत चतुर्थः प्रकारः । वैलक्षण्यमिति न भेदः । नाभेदः । नतरां भेदाभेदौ । भेदविलक्षणमभेदविलक्षणं भेदाभेदविलक्षणं कश्चन प्रकारमङ्गीकुर्मः । हे प्रियसुहृत्, अथापि नोदतारीः जलधिम् । तथाहि– सदसद्विलक्षणमिति किमिदं वैलक्षण्यम्? भेदो वा, अभेदो वा, उभयं वा, उभयविलक्षणं वा? नाऽद्यः । अनङ्गीकारात् । न द्वितीयः । अनङ्गीकारादेव । नापि सत्त्वाक्रान्तत्वे सत्यसत्त्वाक्रान्तत्वरूपं तृतीयम् । विरोधात् । नापि सत्त्वानाक्रान्तत्वे सति असत्त्वानाक्रान्तत्वरूपश्चतुर्थः प्रकारः । विरोधादेव । योऽष्टमरसायते । अथापि साहसादङ्गीकरोषि चेत् शृणु दुरन्तम् । सदसद्विलक्षणमपि सदसद्विलक्षणमित्यङ्गीकर्तव्यम् । तदपि तथा, तदपि तथेत्यनवस्थितिः ॥ ❋ ॥

अत्रैवं भाति । कथमन्योन्याश्रयत्वम्, कथं चक्रकम्, कथमनवस्थितिरिति भगवत्पादोऽवश्यं विववारेत्यूहामहे । भाषणं किलेदम् । नहि भाषणे प्रतिज्ञामात्रेण पूर्यते । अन्यथा उजेर्यपण्डितानामनवबोध एव स्यात् । नहि श्रोतृगणो मा नाम बोधीति कोऽप्युपन्यस्यति । प्रायो लिपिकारा ग्रन्थाल्पत्वाय विस्तारं लोपयित्वा समक्षिपन् । आचार्याज्ञया वा परस्तात् ॥ ❋ ॥

## किञ्च, असद्विलक्षणमित्यत्राभावान्यविरोधिनां मद्ध्ये नञः कोऽर्थः?

किञ्च, अन्यत् किञ्चिद् दोषान्तरमुच्यत इत्यर्थः । अभावान्यविरोधिनाम् । अल्पाच्तरं पूर्वमिति द्वयोरेव । बहुष्वनियम इति वैयाकरणाः । त्रय एव ह्यर्थाः नञः श्रूयन्ते– अभावोऽन्यत्वं विरोधश्च इति । '**नाभावान्यविरोधेषु**' इति हि यादवप्रकाशाचार्यः । तथाहि– अपुत्रोऽयम् । नास्ति पुत्रोऽस्येति

पुत्राभावोऽर्थः । नात्र भूतले घट इति घटाभाव उच्यते । घटः पटो न । अत्र पटादन्यत्वं घटस्योच्यते । सुरा असुराश्च । अत्रासुरा इति सुरविरोधिन उच्यन्ते । ननु सुरभिन्ना असुरा इति किं न स्यात्? न स्यात् । तथात्वे ऋष्यादयोऽपि मनुष्यतिर्यगादयोऽपि असुराः स्युः ॥

ननु उपमार्थेऽपि नञ् पठ्यते । पठ्यते वेदेषु केवलम् । न लोके । ननु लोकेऽपि अल्पार्थे पठ्यते । यथाऽनुदरा कन्या । उपचारोऽयम् । न पदार्थः । अतस्त्रय एव नञर्था इति त एवात्र विकल्प्यन्ते ॥

## यद्यभावः, न, असद्विलक्षणत्वं भावत्वमेव जगतः स्यात् ।

अभावो नञर्थ इति प्रथमं पक्षं प्रतिक्षिपति– **यदीति** । यद्यभावः नञर्थ इति स्वीक्रियते । न युक्तं तत् । यतः **असद्विलक्षणत्वं** नाम **भावत्वमेव** स्यात् । तेन **जगतः भावत्वमेव** स्वीकृतं स्यात् । सदिति भाव उच्यते । स न भवतीति असदभाव उच्यते । पुनस्तद्विलक्षणमित्युक्ते भावत्वमेव किल जगत उक्तं भवति । अथवा सद्विलक्षणमित्यभाव उच्यते । तन्न भवतीति असद्विलक्षणमित्युक्ते भावत्वमेव जगत उक्तं भवति ॥

## नच सतोऽन्यस्मादसतो विलक्षणं जगत् । असतोऽन्यत्वादिधर्म्मानङ्गीकारात् । ब्रह्मणश्च ॥

द्वितीयं पक्षं दूषयति– **नचेति** । सन्न भवतीति असत् । सतोऽन्यदित्यर्थः । तस्मात् सतो भिन्नादसतो विलक्षणं जगदित्युक्तं भवति । तदपि न शक्यं वक्तुम् । नचेति प्रथमपक्षसमुच्चये । नैव शक्यमित्यवधारणे वा । कुतो नैव शक्यम् । असत् केनापि प्रकारेण न प्रतीयत इति हि ते वदन्ति । तर्हि कथं सत्प्रतियोगिकभेदानुयोगित्वं नाम धर्मोऽसति प्रतीयेत? असच्चेन्न प्रतीयते कथं तद्विलक्षणत्वं जगतः प्रतीयेत?

तन्मते ब्रह्मणोऽपि शून्यस्येव सर्वधर्मविधुरत्वात् सतोऽन्यत्वमसतोऽन्यत्वं वा नैव शक्यं वक्तुम् । अभावधर्माङ्गीकारपक्षः पूर्वमेव निराकृतः । अस्मत्पक्षे तु ब्रह्मणः सतो जगतोऽन्यत्वात् सद्विलक्षणत्वम्, असतः शशशृङ्गादन्यत्वादसद्विलक्षणत्वं च ब्रह्मण एव स्यात् ॥

**असतोऽनिर्वचनीयत्वाङ्गीकाराच्च न वैलक्षण्यं ततोऽनिर्वाच्यस्य । तथाऽपि चेद् वैलक्षण्यमनिर्वाच्यत्वं न जगतः ॥**

अयि प्रियमायावाद, यदस्माकमसत् तस्यानिर्वचनीयत्वमङ्ग्यकार्षीद् भवान् । तेन नासद्वैलक्षण्यं भवताऽनिर्वचनीयत्वेनाभिमतस्य जगतः । अथापि दुराग्रहादसद्वैलक्षण्यमिष्यते तर्हि गतमनिर्वाच्यत्वम् ॥

**नच विरोधि । विरोधिनोरन्यतरनिषेधेऽन्यतरत्वानुभवात् । अविद्यमानं न भवतीत्युक्ते विद्यमानमित्येव हि सर्वलोकानुभवः । अतोऽनन्तगुणो भगवान् नारायण इति सिद्धम् ॥ * ॥**

मा भूदन्यत्वं नञर्थः । मा च भूदभावः । स्यादेव विरोधित्वमिति न काऽप्यनुपपत्तिः । अस्त्येवानुपपत्तिः । यदि सद्विरोधि, असदेव तर्हि । यद्यसद्विरोधि सदेव तर्हि । नह्युभयविरुद्धं लोके किमपि पश्यामः । परस्पविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वात् । अनुभवमूला हि सर्वाऽपि युक्तिः पदं प्रसारयति । अनुभवविरुद्धा युक्तिः गर्भ एव स्रवेदिति सूचयितुं भगवाननुभवान्तमाह– **अन्यतरत्वानुभवादिति** । तमेवानुभवं स्फुटं दर्शयति– **अविद्यमानं न भवतीत्युक्ते** । तस्मान्निर्गुणं नाम न किञ्चित् । अविद्यमानेऽपि धर्मिणि धर्मो विद्यते । अविद्यमानेऽपि शशविषाणे शशविषाणत्वं विद्यते । एवं स्थिते का गतिर्विद्यमानेऽपि वस्तुनि निर्गुणत्ववादस्य ॥

**अतोऽनन्तगुणो भगवान् नारायण इति सिद्धम्** । अन्त इति सङ्ख्यात उत्तरावधिः । अन्त इति विनाशः । तदुभयाभावादनन्तगुणो भगवान् । हेया अपि गुणा भवन्ति । यथा त्रिगुणाः । यथा दुःखित्वपारतन्त्र्यादयः । अत्र तु गुणशब्देन शुभगुणा एव विवक्षिता इत्याह– **भगवानिति** । तदुक्तम्–

**'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।**

**'भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः'** इति ॥

उभयमपि भगवन्नामत एव सिद्धमित्याह– **नारायण** इति। असाधारणं चेदं नाम भगवतः। अरविरुद्धाः नाराः शुभगुणाः तेषामयमयनः। अराणां दोषाणामयनो न भवतीति च ॥

ज्ञानिनामनुभवतः सिद्धम्। श्रुतिस्मृतिभिः सिद्धम्। तदनुसारिभिस्तर्कैश्च सिद्धं निष्पन्नमित्यर्थः। सर्ववेदप्रसिद्धं चैतत् ॥ * ॥

**॥ इति ब्रह्मणोऽनन्तगुणत्वनिर्णयः ॥**

——o——

## नच सिद्धेऽर्थे वाक्यस्य प्रामाण्याभावादीश्वराद्यसिद्धिः।

एतावदुक्त्वा भगवत्पाद ईषदिव वक्रोष्ठिकया जहास। उपरराम च उजेर्यपण्डितानां विच्छवि वदनमवेक्षमाणः। भगवत्पादस्य तर्कताण्डवलीलामवलोक्य सर्वेऽपि पण्डिताश्चलितचित्ता बभूवुः। अस्य च पुरुषपञ्चाननस्य दन्तच्छदान्तर्निलीनः शशकशिशुरिव पण्डितपूगः कदाऽस्मात् प्रचण्डकर्मन्दिनो मुखान्मुच्येयेति चिन्ताकुलो बभूव। का गतिः, किं शरणम्, क्व गच्छेम, कोऽस्य प्रतिवक्ता, को नो मानस्य रक्षिता, क्व उजेर्यस्य गौरवं रिरक्षिषति, को नः शाङ्करं मतमुद्धरिष्यति, कः कर्मकाण्डस्याखण्ड्यतां समर्थयते इति चिरं चिन्तयन्तश्चिखिदिरे ॥

अथ कश्चिदकस्मात् साहसिको मीमांसकपाश उदस्थात्। सोऽमन्यत पण्डितम्मन्यः उजेर्यविद्वन्मण्डलीमान-सर्वस्वं सम्प्रति मदधीनम्। अतो न मया तूष्णीकामासितव्यम्, इति कृतनिश्चयः स्खलद्वचनः कथञ्चिद् वाचमुवाच– 'श्रीचरणाः, महान्तस्तत्रभवन्तः, भवतां पुरतः के वयम्? अङ्गीकुर्मः सर्वं भवद्भिरुदितम्। धन्या वयं भवतां दर्शनभाग्यभाजः। पूता वयं भगवन्मुखकमलगळितवाङ्मयसुधां धयन्तः। अथापि किञ्चिद् विज्ञापयितुमुत्सहे। क्षम्यतां चापलम्। सह्यतां बालिश्यम्। मृष्यतामविनयः। विचारे शाङ्करा अपि वयमाचारे जैमिनीयाः। पूर्वमीमांसायामधीतिनो वयम्। कार्ये व्युत्पत्तिवादिनो वयम्। तेन सिद्धेऽर्थे प्रामाण्याभावादीश्वराद्यसिद्धिः' इति ॥

वस्तुतस्तु प्रश्न एवायमसङ्गतः। मुख्यतो मीमांसकेषु द्वौ पन्थानौ। केचित् प्रभाकरमतानुयायिनः, केचित् कुमारिलभट्टाचार्यानुयायिनः। कार्ये व्युत्पत्तिवादी प्रभाकरः, अन्विताभिधानवादी च। भट्टाचार्यस्तु

सिद्धे व्युत्पत्तिवादी । शाङ्कराणामप्ययं पन्थाः, 'व्यवहारे भट्टनयः' इति वदताम् । परन्तु भाट्टा अभिहितान्वयवादिनः । तत्रान्विताभिधानवादी प्रभाकरगुरुः साधुः । तस्य कार्यतावादोऽसङ्गतः । सिद्धे व्युत्पत्तिवादी भट्टः साधुः । तस्याभिहितान्वयवादोऽसङ्गतः । तदुभयमुजेर्यपण्डितानामवगमयितुमयमवकाश इत्याचार्यमध्व उजेर्यपण्डितस्य प्रश्नं स्वीचकार । ततः प्रियमीमांसस्यैतां शङ्कामपनेतुमुत्तरमुपन्यसनं प्रारभत भगवत्पादः– **नच सिद्धेऽर्थे वाक्यस्य प्रामाण्याभावात्** । ईश्वरस्यैवासिद्धौ कुतस्तरामनन्त-गुणत्वसिद्धिरित्यादिपदार्थः मीमांसकरीत्या । अथ मीमांसकः अरणीं मथ्नाति । अग्निं जनयति । षोडशर्त्विजः आह्वयते । आनाय्यः प्रणीयते । चरुं पचति । आमिक्षां मिश्रयति । पृषदाज्यं संयोजयति । जुह्वा जुहोति । पशुं प्रोक्षति । सर्व एते सिद्धाः । अन्ते चानेन स्वर्गं गच्छामीति श्वयति । मा भूदीश्वर-सिद्धिः । केवलकार्यान्वयाङ्गीकारे कथमेषां सिद्धिरिति परिहसतीव भगवत्पाद आदिशब्देन– **ईश्वराद्य-सिद्धिरिति** ॥

## सिद्धातिरिक्तकार्य्याभावात् । लिङाद्यर्थस्त्विष्टसाधनत्वमेव ॥

**सिद्धेत्यादि** । तदुक्तम्– '**कार्यता च न काचित् स्यादिष्टसाधनतां विना**' इति । ननु '**ज्योतिष्टोमेन स्वर्गकामो यजेत**' इत्यादौ यजनक्रियायाः कर्तव्यत्वं किलोच्यते लिङा । तत् कथं सिद्धातिरिक्तस्य कार्यस्याभावः? आह– **लिङाद्यर्थ** इति । यानियानि विध्यर्थानि पदानि तानि सर्वाणि आदि-पदार्थः । तथाहि– क्रियतां कुर्वित्यादीनि लोडन्तानि । क्रियात् कुर्यादित्यादिलिङ्द्वयम् । माङ् योगेन लुङन्तानि पदानि, मास्मयोगेन लङन्तानि च । कर्तव्यं दैवमाह्निकम्, करणीयम्, कार्यं कृत्यमित्यादीनि कृत्प्रत्ययान्तानि । विरळतया मदाज्ञया करोषि कर्तासिकरिष्यसीत्यादीनि च । वेदेषु '**यावज्जीवमग्निहोत्रं जुहोति**' इत्यादि च । जुहुयादित्यर्थः ॥

तुः भेदे । लिङादेः भवदुक्तादन्योऽर्थः कथ्यत इत्यर्थः । पक्षान्तरे वा । '**तु भेदावधारणयोः**' इति यादवप्रकाशाचार्यः । '**तु पादपूरणे भेदे समुच्चयेऽवधारणे । पक्षान्तरे–**' इति मेदिनी । इष्टसाधनत्वमेव लिङाद्यर्थः । एवकारेण तदर्थत्वेन मीमांसकाभिमतं नान्यत् किञ्चित् कल्प्यमित्याह । किमुक्तं भवति? ज्योतिष्टोमेन यजेत, स्वर्गाख्यमिष्टं साधयेदित्युक्तं भवति । अवश्यं चैतन्मीमांसकैरप्यङ्गीकर्तव्यम् ।

तेषां पक्षे विषं भुङ्क्ष्वेति लोटः कोऽर्थः? विषभोजनं कर्तव्यमित्यर्थः स्यात् । नहि मीमांसकोऽपि तमर्थमाह । कुतः? विषभोजनस्येष्टसाधनत्वाभावात् । तस्माद् विपरीतलक्षणया 'विषं माऽभ्यवहार्षीः' इत्येव बालोऽप्यवधत्ते ॥

## नहि कर्त्तव्यत्वं नामेष्टसाधनत्वादन्यत् किञ्चित् । तन्मानाभावात् ॥

अतः सर्वत्रेष्टसाधनत्वमेव विधिपदार्थः । **'गामानय'** इत्यत्रापि सायं व्याघ्रादिभ्यो रक्षार्थं गवां गृहं प्रत्यानयनमिष्टम् । अतस्तत् साधय इत्यर्थः । 'कुमार, पिण्डीं खाद' इत्युक्ते पिण्डी किल तवेष्टं भक्ष्यम् । अतस्तदभ्यवहर इत्येव किलार्थः । ततोऽतिरिक्तं काल्पनिकं कार्यं किमित्यङ्गीक्रियते? अपिच मानाधीना मेयसिद्धिः । नतु भवन्मताभिमानाधीना । नच इष्टसाधनत्वातिरिक्तस्य कर्तव्यत्वस्य किञ्चिन्मानं पश्यामः । अतो मानाभावाद् गर्भस्रावेण गतस्ते कार्यतावादः ॥

## शब्दस्तु न तद् वक्तीत्युक्तम् । लिङादेरिष्टसाधनत्वार्थत्वेनैव कृतार्थत्वे तदन्यकार्य्यकल्पने कल्पनागौरवं च ॥

ननु यजेतेत्यादिरूपः लिङादिशब्द एव कार्यतायां मानम् । पाणिनिरप्याह– **'विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्'** (अ.सू.३.३.१६१), **'लोट् च'** (१६२) इत्यादि । अत्र विध्यर्थकत्वं मुखत उक्तम् । निमन्त्रणादयोऽप्यन्ततो विधिप्रभेदा एव । विधिश्च कार्यतैव । न भोः । इष्टसाधनत्वमेव लकारार्थ इत्युक्तम् । तेन कार्यत्वं न लकारार्थ इत्येवोक्तं भवति । इष्टसाधनमिति विधत्ते । इष्टसाधनमिति निमन्त्रयते । इष्टसाधनमित्यामन्त्रयते । अधीष्टमिति स्पष्टमिष्टसाधनत्वम् । इष्टसाधनमिति सम्पृच्छते । इष्टसाधनमिति प्रार्थयते । तस्मात् कार्यताया विध्यर्थत्वे न तावच्छब्दः प्रमाणम् । शब्दार्थसम्बन्धस्य प्रत्यक्षागोचरत्वान्न तन्निराकरणं पृथक् कृतम् ॥

ननु इष्टसाधनत्वं च लिङर्थः । कार्यता च । विषभक्षणस्यापि कर्तव्यत्वं मा भूदिति इष्टसाधनत्वे सति कर्तव्यत्वं लिङाद्यर्थ इत्युच्यते । तर्हि तावदेव पर्याप्तम् । कर्तव्यत्वं च लिङाद्यर्थ इति कल्पनागौरवादेवापास्तम् । न केवलम्, शब्दानां सिद्धेऽर्थे प्रामाण्याभावदोषश्च । इष्टसाधनत्वं कार्यत्वमित्यङ्गीकारे सिद्धे कार्ये च वाक्यानां प्रामाण्यं सेत्स्यतीति सर्वं सुन्दरम् । भवतां मतमेवासुन्दरमित्यापतितम् ॥

भवन्मते कल्पनागौरवम् । अस्मन्मते सिद्धे व्युत्पत्तिसौलभ्यं चेति चकारेणाऽह ॥

## नच तत्कल्पकं किञ्चित् । विप्रतिपत्तौ चान्यन्मानं वक्तव्यं तद्भावे ॥

तस्य कार्यतैव लिङाद्यर्थ इत्येतस्य प्रमेयस्य कल्पकं समर्थकं साधकं प्रमाणं न किञ्चित् दृश्यते । यदुक्तं मीमांसकैस्तस्यासमर्पकत्वरूपं नीचत्वं चकारेणाऽह– **नचेति** । **'कल्पना समर्थनाऽपि'** इति यादवप्रकाशाचार्यः ॥

नन्वस्मत्पूर्वाचार्यैः बहुधा समर्थितम् । तत्प्रतिपत्तिरेवास्माकं मानम् । अस्मद्विप्रतिपत्तिरेव ते मानभित्तिं भिनत्ति । काळिदासोऽप्याह– **'पुराणमित्येव न साधु सर्वम्'** इति । नहि 'इदमुपपन्नं पूर्वाचार्यैरुक्तत्वात्' इति जल्पन् सत्संसत्सु माननीयो भवति । किन्त्वपहास्यो भवति । तस्मात् तस्य विप्रतिपन्नस्य भावे पूर्वाचार्यैरुक्तत्वादन्यन्मानं वक्तव्यं भवति ॥

## नचानुमा । अप्रसिद्धविशेषणत्वात् । नचार्थापत्तिः । अनुपपत्त्यभावात् ॥

तस्मान्मृग्यतां मानान्तरम् । यद्यस्ति । नन्वस्ति । किं तत्? नन्वनुमा । का सा? खलु वृथाऽनुमाय । यङ्कमपि हेतूकृत्य किं सिषाधयिषसि? लिङादिः इष्टसाधनतातिरिक्तकार्यताबोधक इति किलान्ततो वक्तव्यम् । इष्टसाधनत्वमेव कार्यत्वमिति वदतोऽस्मान् नैकमप्यनुमानं बाधते । अप्रसिद्धविशेषणत्वात् । इष्टसाधनत्वातिरिक्तं कार्यत्वमेवाप्रसिद्धं नः पक्षे । तत् कथमनुमिमीषे? अपिच प्रमाणान्तरमनुसृत्य प्रमापयतीत्यनुमेत्युच्यते । निर्मूलेयं त्वदनुमा न कमप्यर्थं साधयितुं क्षमते ॥

पूर्वमीमांसकानामर्थापत्तिरपि पृथक् प्रमाणमिति तामप्यपाकरोति । तथाहि शाबरभाष्यम्– **'अर्थापत्तिरपि दृष्टः श्रुतो वाऽर्थो नोपपद्यत इत्यर्थकल्पना'** इति ॥

नन्वनुभवमूलमिदं वदामः । तत् कथं निर्मूलम्? सर्वोऽपि हि लोकः लिङादिना कार्यतां प्रत्येति । तस्मात् सर्वलोकानुभवस्यान्यथानुपपत्त्याऽर्थापत्त्या कार्यतां साधयामः । अयि भोः, सम्भ्रान्तोऽसि । न वयं कार्यता नास्तीति ब्रूमः । किन्तु इष्टसाधनतातिरिक्ता कार्यता नास्तीति । तत्र काऽन्यथाऽनुपपत्तिः? हे मीमांसकम्मन्य, सर्वलोकानुभवं प्रतिनिधातुं कस्तेऽधिकारं ददौ?

नन्वस्माभिरनुभूयते । तत्सामान्यादितरेषु तथात्वमित्यनुमिमीमहे । नायमनुभवः । गुरूक्तमिति गौरवातिशयजननीं भगवतीं भ्रान्तिमेवानुभवममन्यथाः । वञ्चितोऽसि । लिङादिना सर्वोऽपि लोक इष्टसाधनतामेव वक्तीत्युक्ते किं ते प्रत्युत्तरम् । यद्यपि मीमांसकेषु प्राभाकराः प्रमाणपञ्चकमिच्छन्ति– प्रत्यक्षमनुमानमुपमानं शब्दश्चार्थापत्तिश्चेति । अनुपलब्ध्या सह षट् प्रमाणानीति भाट्टाः शाङ्कराश्च । अथाप्युपमानाभावयोरत्रानवसरादनुल्लेखः ॥

अपि च इष्टसाधनत्वं लकारार्थ इति पक्षे महान् लाभः । तेन सिद्धेऽप्यर्थे वाक्यस्य प्रामाण्यमुपपद्यते ॥ ✻ ॥

## कार्य्याभावादेव कार्य्यान्वयान्वयिनि व्युत्पत्तिरित्यादि दूरतो निरस्तम् ॥

ननु कार्यतावादपक्षेऽपि द्वयी गतिर्भवति । कार्यप्रतियोगिकोऽन्वयः सिद्धे । सिद्धप्रतियोगिकोऽन्वयः कार्ये । स्वर्गकामो यजेतेत्यत्र प्रथमं यजिक्रियायामन्वयः । ततस्तत्प्रतियोगिकान्वयानुयोगी सिद्धः स्वर्गादिरिति, सिद्धस्वर्गादिप्रतियोगिकान्वयानुयोगिनी यजिक्रियेति न कोऽपि दोषः । एवमविदितभाषाशास्त्रं भाषमाणं प्रत्याह– इष्टसाधनातिरिक्त**कार्याभावादेव** । प्रथमं तावत् कार्ये व्युत्पत्तिमेव साधयितुं न प्राभवः । का कथा तदन्वयान्वयिनः । इष्टसाधनत्वातिरिक्तस्य कार्यत्वस्य निराकरणादेवायमपि पक्षो जननात्पूर्वं गर्भ एवाम्रियत । मृतस्य शिशोर्नामकरणमिदम् ॥

वस्तुतस्तु भाषाभिज्ञा नैवं भाषन्ते । तदुक्तं भगवत्पादशिष्येण पण्डिताचार्येण– **'नच कार्यान्वयान्वयिनीति वाच्यम् । तथाविधवस्तुव्यवहाराभावात् । नहि देवदत्तो देवदत्तपुत्रपुत्रीत्युच्यते'** इति ॥

तर्हि द्विधा व्युत्पत्तिरस्तु । कार्ये कार्यान्विते च । तदेतदाह– **इत्यादीत्यादिपदेन** । तस्यापीदमेवोत्तरम्– कार्याभावादेव । द्विविधा व्युत्पत्तिरिति कल्पनागौरवं च ॥

## कार्य्यान्विते व्युत्पत्तिरिति वदतोऽकार्य्यान्विते व्युत्पत्तिरित्युक्ते किमुत्तरम्?

नन्वनधीतपूर्वमीमांसः अनधिगतकार्यतागन्धः स्तनन्धयोऽपि **'इयं ते माता, अयं ते पिता'** इति श्रुत्वा किलाकार्यन्विते सिद्ध एवार्थे व्युत्पत्तिमवधारयति । सैव च प्रथमा प्रतिपत्तिः । नहि मातुरङ्के

शयानं शिशुं प्रति '**गामानय**' इति कोऽपि प्रचोदयति । त्रिचतुरवत्सरो बालः कथञ्चित् कार्यान्वितं वाक्यं शृणुयात् । एवमनुभवे सति का ते विभीषका कार्यतावादः कार्यतावाद इति? शिशुकस्यानुभवानुसारेण अकार्यान्वित एव व्युत्पत्तिरिति वदतः किमुत्तरं वदसि?

## अध्याहार इत्युक्ते लोप इत्युत्तरम् ॥

ननु तत्रापि 'इयं ते मातेति विद्धि', 'अयं ते पितेति विद्धि' इत्यादि क्रियापदमध्याह्रियते । तेन कार्यान्वयः सेत्स्यति । हन्त भवन्तमिदानीं पिपृक्षिषामः– 'किं भवन्मतस्य साधुत्वार्थमध्याहारः क्रियते, आहोस्वित् अध्याहाराद्दते शाब्दबोध एव न जायत इति?' नाऽद्यः । सापेक्षत्व एवाध्याहार इति नियमात् । अत्र घटोऽस्तीत्यादौ नञोऽध्याहारेण घटो नास्तीत्यपि स्यादर्थः । तेन सर्वव्यवहारविप्लवः स्यात् । न द्वितीयः । अध्याहारं विनाऽपि शाब्दबोधदर्शनात् । अन्यथा प्रतिवादी च प्रतिब्रूयात्– यत्र क्रियापदं दृश्यते तत्रापि तस्यार्थलोपः । नचानर्थक्यं पदानां न युक्तं वक्तुमिति वक्तव्यम् । अङ्गीकृतं हि मीमांसकैर्मायावादिभिश्च– सन्ति वेदेष्वप्यनर्थकानि हवै स्मेत्यादीनि केवलं वाक्यालङ्कारार्थानि पादपूरणार्थानि वेति । अङ्गीकृतश्चार्थवादानां स्वार्थे तात्पर्याभावः । तद्वदयमपि स्यादालङ्कारिकः । स्यात् पादपूरणः । एवं वदतः किमुत्तरं प्रयच्छेः?

अत्रायं विवेकः– अध्याहारः क्रियापदस्य । लोपः क्रियार्थस्य ॥

## अशेषसिद्धपदानामर्थलोपाल्लिङाद्यर्थलोप एव वरीयान् ॥

ननूभावपि समानयोगक्षेमौ तर्हि । एको वृथाऽध्याहारवादी । अपरः वृथा लिङर्थलोपवादी । यत्रोभयोः समो दोषो नैकस्तत्र शिक्षामर्हति । अत आह– **अशेषसिद्धपदानाम्** ॥

सर्वत्र भाषायां सिद्धपदानि भूयांसि । अल्पीयांसि क्रियापदानि । अतो वरं सिद्धपदानामर्थलोपापेक्षया कतीनाञ्चन क्रियापदानामर्थलोपाङ्गीकरणमिति ॥

अपिच मीमांसका अर्थवादानां स्वार्थे तात्पर्याभावमुशन्ति । एवमर्थवादोऽनर्थवादो बभूव । न केवलम् । कार्यतान्वयरहितस्य 'अग्निमीळे–' इत्यादिसमग्रमन्त्रजातस्य, भारतपुराणरामायणादिषु

गतानां महापुरुषचरितानाम्, विष्णुसहस्रानामादिस्तोत्रवाङ्मयस्य, अशेषकोशव्याकरणादीनां च स्वार्थे तात्पर्याभावकथनात् वरं लिङादीनामर्थलोपेनालङ्कारिकत्वकथनमिति ॥

## हससि हसामीत्यादि सिद्धार्त्थ एव बालानां व्युत्पत्तेः । प्रथमप्राप्तत्वाच्च ॥

वस्तुतस्तु न लोपः । नाप्यध्याहारः । तदलं वृथा शुष्कतर्केण । अनुभवं पृच्छ । लोकानुभवं पृच्छ । अनधीततर्का अमलीमसमानसा बालाः प्रष्टव्याः 'कथं व्युत्पद्यध्वे' इति । न भवादृशास्तर्क-दूषितान्तःकरणाः । पृच्छ बालान् । तेऽपि न ते पक्षपातिन इत्याह– **हससि हसामीत्यादि** । अविभक्तिको निर्देशः साप्तविभक्तिकः, इत्यादिष्वित्यर्थः । अथवा समस्तं पदम् । इत्यादौ सिद्धेऽर्थे इति ॥

अयि बाल, किं हससीति पृष्टो बालः वदति– 'ह्यो दृष्टे नाटके विदूषकस्याभिनयं स्मारंस्मारं हसामि' इति । वृद्धः किं हससीति वदेति नोवाच । बालोऽपि हसामीति विद्धीति नोवाच ॥

स्तनन्धयस्यापि प्रथमं स्वाशयाभिव्यक्तिर्हासेन रोदेन वेति हासमेवोदाजहार । तदिदमुक्तम्– **प्रथमप्राप्तत्वाच्चेति** ॥

एवं सिद्धरूप एवार्थः प्रथमप्राप्तः । क्रिया पश्चात्तनी । गामानयेत्यादिष्वपि गौः प्रथमप्राप्ता । द्वितीयया कर्मत्वं च । गोकर्मकं किं तदिति जिज्ञासामानयेति पदं परिहरति । गोकर्मकानयनक्रिया मया करणीयेति वृद्ध आहेति बालोऽवगच्छति ॥

## नच तत्त्यागे कारणम् । तथैव व्युत्पत्तिदर्शनाच्च ॥

प्रथमप्राप्तस्य सिद्धार्थे तात्पर्यस्य त्यागे, त्यक्त्वा कार्यपर्यन्तं धावने च कारणं न पश्यामः । कारणं विनाऽपि स्वेच्छया कल्पने सर्वत्र सर्वं कल्प्येतेति अव्यवस्था च स्यादिति चकारेण विपक्षे बाधकं चान्वाचिनोति ॥

तथैव लिङादिपदं विनैव केवलसिद्धपदेनैव सिद्धेऽर्थे क्रियायां च **व्युत्पत्तिदर्शनाच्च** । प्रत्युत न किमपि विपर्यये कारणमस्तीति चकारेणाऽह ॥

## अतः सिद्धार्थे प्रामाण्यप्रसिद्धेश्च सिद्धं महागुणत्वं विष्णोः ॥ ॐ ॥

कार्यतावादमीमांसामुपसंहरति– **अत** इति । अतः पूर्वोक्तैर्हेतुभिर्न केवलम्, कोशव्याकरणादीनां सिद्धेऽर्थे प्रामाण्यस्य सर्वलोकप्रसिद्धेश्च । अनुभवतः सिद्धिश्च प्रसिद्धिः । तत् किं लोकविरुद्धं भाषसे? **'स्वर्गो नाकः सुरावासः'** इति कोशमावर्तमानः बालोऽपि, क्रियापदं विनाऽपि एते शब्दाः स्वर्गपर्याया इति मया ज्ञातव्या इति बुद्ध्यत एव । **'उच्चैरुदात्तः'** (पा.सू.१.२.२९) इत्युक्ते ऊर्ध्वस्थाननिष्पन्नतया उदात्त उच्चारणीय इति बालोऽवगच्छति । भवानपि तथैवाधीयाय । तत् कुतोऽयं दुराग्रहः? त्यज्यतां दुर्मतदुर्मानः । निमील्य नयने मनः समाधीयताम् । पिधाय कर्णावन्तर्वाणीमाकर्णय । तदाऽनुभोत्स्यसे सर्वनामा सर्वगुणो भगवान् नारायण इति । तदिदमाह– **सिद्धं महागुणत्वं विष्णोः** । विष्णुपदेनेदमाह– विशन्ति सर्वाणि नामानि चैनमिति विष्णुरिति । **'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति'** इति हि श्रुतिः । तेन महानाम्नीनामृचां विष्णुपरत्वं च सिद्धम् । **'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे'**, **'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'** इत्यादिसिद्धवचनैः सिद्धं महागुणत्वं च विष्णोरिति ॥

यद्यपि भगवतः सगुणत्वे, शब्दानां सिद्धार्थपरत्वे च बहु वक्तव्यमस्ति । तथाऽप्यत्र खण्डार्थ-निर्णयाय प्रवृत्तो भगवत्पादः प्रासङ्गिकं किञ्चिदेवोक्त्वा सञ्चिक्षेप । वेदाभ्यासजडानां नातिपरिचित-वादप्रक्रियाणां एतावदेव पर्याप्तमिति च न वितस्तार । विस्तरेण विममर्श च विष्णुतत्वनिर्णया-दावित्यलम् ॥ ॐ ॥

**॥ इति सिद्धेऽर्थे व्युत्पत्तिनिर्णयः ॥**

——०——

## ताश्च 'विदा मघवन्' इत्याद्याः ॥

एवं प्रासङ्गिकं वक्तव्यं सङ्क्षेपतो निरूप्याथ खण्डार्थं निर्णेतुमुपक्रमते– **ताश्चेति** । ताश्चेति काः? महानाम्नीऋच इत्यर्थः । तासामृचामतिशयितमाधिक्यं चशब्देनाऽह । सृष्ट्यादौ प्रथमं चतुर्मुखेन दृष्टत्वात् । केवलं नारायणपरत्वाच्च ॥

एतावन्तमनेहसं विनैवार्थज्ञानं केवलमुपसर्गाणामुपसर्जनं याज्ञिकानां सम्प्रदाय आसीत् । तन्न साधु । अर्थज्ञानपूर्वकमेवोपसर्गा उपस्रष्टव्या इत्युजेर्यपण्डितान् बोधयन् **'विदा मघवन्'** इति खण्डार्थं तावदाह । अन्येऽपि मन्त्रा उपरिष्टाद् व्याख्यास्यन्त इति च चकारेणाऽह ॥

अत्र मूले ऋङ्मन्त्रा न पठ्यन्ते । ममत्वेवं भाति । सर्वेऽप्युजेर्यपण्डिता भगवत्पादस्य वाङ्मुखं श्रुत्वा मूकविस्मिता विवृतनयना व्यात्तवदनास्तूष्णीमासीरन् । भगवत्पादस्तु ऋङ्मन्त्रान् धीरगम्भीरं मधुरम्मधुरं पठितुमारेभे । एकैकामृचं पठित्वा व्याचख्यौ । तत्र सभायां मिलिताः उजेर्यपण्डिताः सर्वेऽपि वेदपाठिनः, जानन्त्येव मन्त्रानिति तन्न लिपिबद्धं चकार मध्वशिष्य इति ॥

अयमत्र भगवत्पादसम्मतः प्रतनः क्रमः– ऐतरेयारण्यके आद्याः षळध्यायाः प्रथमः प्रघट्टकः । (अर्वाचीनाः प्रघट्टकमारण्यकं वदन्ति सायणादयः । आद्याः पञ्चाध्यायाः प्रथममारण्यकमिति च ।) ततो नवाध्यायाः द्वितीयः प्रघट्टकः । आ षष्ठादा चतुर्दशाध्यायमुपनिषत् । तेनाऽद्याः पञ्चाध्याया आरण्यकमित्युच्यते । ततो नवाध्यायी उपनिषत् । अन्ते पुनरणुतरः पञ्चदशः महानाम्नीखण्डा-ध्यायः । मुख्यतस्तस्य खण्डस्यार्थनिर्णयोऽयमिति खण्डार्थनिर्णयः ॥ ✻ ॥

तत्राऽदौ नव ऋचः । ततो नव पुरीषपदानीति षड्गुरुशिष्यः सायणश्च । आदौ नवर्चानीति सर्वेषा-मैककण्ठ्यम् । द्वितीयभागेऽपि उपान्त्या ऋक्, तन्निगदद्वयमिति सायणः, षड्गुरुशिष्यश्च । सप्तैव निगदा इत्याचार्यमध्वः । तच्चोत्तरत्र प्रमाणवचनेन स्फुटीक्रियते । तथाच दश ऋचः, सप्त निगदा इत्युक्तं भवति ॥

कथं पुरीषपदानि? यज्ञफलपूरणादिति सायणः । सर्वोऽपि मन्त्रो यज्ञफलपूरण इत्यव्यवच्छेदक-मेतत् । भगवतो गुणपूर्णतानिर्धारणात् पुरीषपदानीति सूक्तं वचः ॥

एता महानाम्न्य ईषद् व्यत्यासेन सामवेदेऽपि पठ्यन्ते । सामवेदो हि त्रेधा विभक्तः । पूर्वार्चिक उत्तरार्चिकस्तयोर्मध्येऽणुतरो महानाम्न्यार्चिक इति । तत्र नवैव ऋचः पठ्यन्ते । पञ्च च पुरीषपदानि । गानं पाश्चात्यम् । ताभिरृग्भिर्ब्रह्मा भगवन्तमगासीत् इत्यतो न सामवेदगतानां यज्ञे विनियोगः ॥

का देवता? क ऋषिः? उपरिष्टाद् वक्ष्यति प्रमाणवचनेनैव– नारायणो देवता, नाभ्युत्थितपद्मगश्चतुर्मुख ऋषिरिति । एतेन सामवेदिभिः पठितमपि निगदव्याख्यातम्– प्रजापतिर्ब्रह्मा ऋषिरिति । त्रैलोक्य-स्वामी परमेश्वरो नारायणो देवतेति । प्रसिद्धेन्द्रस्य व्यावृत्त्यर्थं त्रैलोक्यपाल इति । स हि केवलं स्वःपालः । **'ऋचामृषिस्ततः शक्रः'** इतीन्द्रः द्वितीय ऋषिः । विश्वामित्रस्तृतीय इति ॥

छन्दस्तु प्रतिमन्त्रं भिद्यत इति तत्रतत्रैव वक्ष्यते ॥

तत्रेयं प्रथमा ऋग् भवति–

**[वि॒दा म॑घवन् वि॒दा गा॒तुमनु॑शंसिषो॒ दिशः॑ ।**
**शिक्षा॑ शचीनां पते पूर्वी॒णां पु॑रूवसो ॥ १ ॥]**

'विदा' इति, 'शिक्षा' इति, पुरूवसो' इति सांहितं दैर्घ्यम् । विद, शिक्ष, पुरुऽवसो' इति प्रतृण्णम् । आद्यः पादो बार्हतः । ततस्त्रय औष्णिहाः । तेन बृहतीमुखा स्वराडुष्णिगियम् (९+७+७+७=३०) । सर्वच्छन्दस्सु बृहत्या महत्त्वात् प्राणप्रियत्वाच्च बृहत्या समारम्भः । विराड-नुष्टुबिति षड्गुरुशिष्यः । पूर्वार्धे षोडशाक्षराणीति कृत्वा (७+९+७+७=३०)अनुष्टुबित्याह । नातिस्वरसं तत् । त्रिषु पादेषूष्णिहः साम्राज्यमित्युष्णिक्त्वमेव युक्तम् ॥

## हे मधवन्, यशस्विन् धनवन् मखपत इति वा ॥

मघवन्निति प्रथमं महन्नाम । शचीनां पते इति द्वितीयम् । पुरु+वसो इति तृतीयम् । तत्र प्रथमस्य महानाम्नोऽर्थमाह– हे **मघवन्** ॥

नन्वत्र ऐतरेयसंहितायां अग्न्यादिसूक्तैः प्रथमं मुखतः प्रतीता अग्न्यादय उच्यन्ते । ततो मुख्यार्थः प्राणः । ततः परममुख्यार्थो नारायणः । ततो युक्ता त्र्यर्थता श्रुतीनाम् । महानामसु मन्त्रेषु कथम्? भगवत्परतयैव त्र्यर्थतासम्भवादिति सूचयन्निव प्रथमस्य महानाम्नस्त्रीनर्थानाह– **यशस्विन् धनवन् मखपते इति वा** ॥

जगत्सृष्ट्यादिरूपं यशो यस्य स यशस्वी । **'तस्य नाम महद् यशः'** इति महानारायणोप-निषदि । अहं जगत्स्रष्टेति व्यपदेशमात्रमित्याह चतुर्मुखः । सर्वं सृष्टं यस्य स्वं धनं स धनवान् । एवं प्रथमसृष्टश्चतुर्मुखो मखैरियाजेति मखवानिति क्रमः ॥

अन्यत्रेन्द्रादिसूक्तेषु पठितानामिन्द्रादिशब्दानां न महानामत्वम्, नापि तासामृचां महानाम्नीत्वम् । तत्रान्यदेवतापरत्वस्यापि स्वीकारात् । अत्र तु नाम्नां केवलनारायणपरत्वात् युक्तं महानाम्नीत्वमासामृचामिति ॥

क एवं सम्बोध्य नारायणं तुष्टाव? सृष्ट्यादौ भगवतो नाभिकमलगतश्चतुरानन एवं तुष्टाव । स कथं स्वावरान् देवानभिष्टूयात्? वक्ष्यति चैतदुपरिष्टात्– **'इति ब्रह्माऽस्तुवद् विष्णुं तन्नाभ्युत्थितपद्मगः'** इति ॥

ब्रह्मा तावदादौ भगवन्तं सम्बोधयति– **हे मघवन्** । पाणिनीयाः मह्धातोः शब्दमेनं व्युत्पादयन्ति । **मह पूजायाम्** । स्वयमेव स्वात्मानं महयति मह्यते चेति मघवा । हस्य घः । **'श्वन्-उक्षन्-पूषन्-प्लीहन्-क्लेदन्-स्नेहन्-मूर्धन्-मज्जन्-अर्यमन्-विश्वप्सन्-परिज्मन्-मातरिश्वन्-मघवन्निति'** (१.१५७) इत्युणादिसूत्रे त एते त्रयोदश कनिन्प्रत्ययान्ता निपातिताः । तथाच मघवा मघवानौ मघवानः इत्यादिरूपम् । इमं पक्षमाश्रित्यैवोपरिष्टात्– **'यो मंहिष्ठो मघोनाम्'** इत्युक्तम् । पदमिदं मतुबन्तमपि भवति । तदा **'मघवान् मघवन्तो मघवन्तः'** इत्यादि रूपम् । अत्र भगवत्पादः वक्ष्यमाणश्रुत्यनुसारेण व्याचख्यौ– **मघवन् यशस्विन्निति** मतुबन्ततया ॥

## 'तं वा एतं मखवन्तं सन्तं मघवानित्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः', 'तेभिरिन्द्रं चोदय दातवे मघम्', 'तन्न आयातु मघम् । यशो वाव मघम् । मघमनु प्रापत्सि ।' 'आ मामेतु मघम् । मघमनु प्रापत्सि । धनं वाव मघम्' इत्यादिश्रुतिभ्यः ॥

लोकदृष्ट्या यज्ञो यशो धनमिति क्रममनुसृत्याह– **तं वा एत मखवन्तम्** । तं **वै** नारायणमेव । पाणिनीयाः मह्धातोर्मघशब्दं व्युत्पादयन्तीत्युक्तम् । तदस्तु नाम । तत्ववादिनां वेदोक्तं निर्वचनं मुख्यम् । अतो वेदवचनैरेव मघशब्दस्य त्रेधाऽर्थमाह– **तं वा एतम्** । मखो यज्ञः अस्यास्तीति मखवान् । यज्ञपतिः । **'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च'** इति गीतायाम् । **'यज्ञो यज्ञपतिर्यज्वा'** इति सहस्रनामसु । तदेतदप्याह– **वै** प्रसिद्धमेतदिति । अतिशयार्थे खस्य घः,

**'तृतीयोऽतिशये'** इति । तेन मघवान् सर्वयज्ञभोक्ता । विवक्षितस्यार्थस्य मुखतोऽनुक्त्वा निगूह्य कथनं परोक्षम् । परोक्षं प्रियं देवानाम्, देवदेवस्य च । **'परोक्षवादो वेदोऽयं परोक्षं मम च प्रियम्'** इति भगवद्वचनात् । यथावत् स्फुटवचनं प्रत्यक्षम् । सतां यथार्थज्ञानाय प्रत्यक्षमपीतीवकारः । **'इवोभये च सादृश्ये–'** इत्यभिधानात् । क्वचित् समाधिभाषया, क्वचित् दर्शनभाषया, क्वचिद् गुह्यभाषया त्रिविधानां जीवानां त्रिविधां प्रतीतिं जनयन्तीति प्रथितं हि शास्त्रेष्वधीतिनामिति हिकारेणाऽऽह । स यथा– **'नारायणपरा वेदा नारायणपरा मखाः'** इत्यादि । तस्मात् मघवान् देवेन्द्र इत्यमुख्योऽर्थः । नारायण इति तु मुख्योऽर्थ इति स्थितम् ॥

कथं मखो यज्ञः? मखन्ति देवा आहुतिस्वीकारार्थमत्रेति । **मख गतौ** ॥

अथ महधातुनिष्पन्नत्वेन धनवन्नित्यर्थे श्रुतिमाह– **तेभिरिन्द्रम्** ॥

**'परि सोम प्र धन्वा स्वस्तये नृभिः पुनानो वासयाऽऽशिरम् ।**
**'ये ते मदा आहनसो विहायसस्तेभिरिन्द्रं चोदय दातवे मघम्'** (ऋ.९.७५.५)

इति समग्रो मन्त्रः । पञ्चर्चं सूक्तम् । भार्गवस्य कवेरार्षम् । जागतं छन्दः । पवमानः सोमो देवता । सर्वजीवेभ्य उत्कृष्टया प्रमया सहितः पवमानो मुख्यवायुः प्रार्थ्यते– हे सोम, अस्माकं सु+अस्तये सन्ततसौख्याय, सम्यक् सत्त्वाय वा परितः रक्षकः सन् प्र धन्व । **धन्व गतौ** । परितो दत्तदृष्टिः सञ्चरन् भवेत्यर्थः । दैर्घ्यमवधारणे । नृभिस्त्वद्भक्तैः कृतया सेवया जगत् पुनानः आशिरं त्वमाश्रितं जनं त्वद्रक्षाकवचेन वासय आच्छादय । ये ते मदा आनन्दजनका भक्तिरसाः तेभिरिन्द्रं नारायणं चोदय । किमिति? अस्मभ्यं मघं विद्यावित्तात्मकं धनं दातवे दातुम् । कीदृशास्ते भक्तिरसाः? सर्वान् दोषान् घ्नन्तीति आहनसः । विः विष्णुरेक एव हायते गम्यत एभिरिति विहायसः । **ओ हाङ् गतौ** । सदा विष्णुमेव यन्तः, आखणाश्मत्वात् असुरैरहन्यमाना इत्यर्थः ॥

अत्र धनवाचित्वं न स्फुटमिति यशोवाचित्वे धनवाचित्वे च स्फुटं श्रुतिवाक्यमाह– **तन्न आयातु मघम्** । महान् भवत्यनेनेति यशो मघम् । तत् भगवज्ज्ञानजन्यं मघं यशो न आयातु । **'यशो जनेऽसानि स्वाहा'** इति श्रुतेः । श्रुतिः स्वयमेव मघशब्दं व्याचष्टे– **यशो वाव मघम्** । वाव प्रसिद्धं

किलेत्यर्थः । तादृशं यशोऽहं भगवदनुग्रहेण प्रापत्सि प्राप्तवानस्मि । **'अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव'** इति श्रुतेः । त्रिष्वर्थेषु यज्ञः मुख्यतमः । यशो मुख्यतरः । धनं मुख्यमित्यनुक्रमं सूचयन्नन्ते धनार्थकत्वे श्रुतिमाह– **आ मामेतु मघम्** । मामा समन्तात् मघमेतु इति प्रार्थनस्योत्तरक्षणे मघमनुप्राप्तवानस्मि । किं तन्मघम्? आह– **धनं वाव मघम्** । मह्यते पूज्यते लोकैरनेनेति मघं धनम् । एवं त्रयोऽर्थाः मघशब्दस्य । एतेन मघशब्दस्य केवलधनार्थकत्वं वदन्तः निघण्टुकारादयः तद्व्याख्यातारः यास्कदुर्गाचार्यप्रभृतयश्च दत्तोत्तराः ॥

इत्यादिश्रुतिभ्य इति आदिशब्देन ऐतरेय्यां श्रुत्यां प्रयुक्ताः सर्वेऽपि मघशब्दा गृह्यन्ते । तथाहि– **'स्तोतृभ्यो मंहते मघम्'** (११.३) इति प्रथममण्डले । **'यशः मंहते ददाति'** इति भगवत्पादः । **'मघं धनं दक्षिणारूपेण ददाति'** इति सायणः ॥

**'देवत्वं पणयो नानशुर्मघम्'** (१५१.९) इति च तत्रैव । **'पणयो व्यवहारशीला असुरा देवत्वं नाऽनशुः । मघं यशो धनं वा नाऽनशुः'** इत्यर्थः । **'मघं धनं च नानशिरे'** इति सायणः ॥

**'अग्निं तं वो दुवस्यत दाता यो वनिता मघम्'** (१३.३) इति तृतीये । **'किञ्च अग्निः दाता यज्ञफलदाता, मघं महनीयं धनं वनिता प्रयच्छंश्च भवति । तं दुवस्यत'** इति सायणः । मघमिति यशो वा धनं वेति तत्ववादिनः ॥

**'यद् दित्ससि स्तुतो मघम्'** (३२.८) इति चतुर्थे । **'मघं धनं दातुमिच्छसि'** इति सायणः । यशो धनं वेति सूक्तम् । **'यद् दित्ससि स्तुतो मघम्'**(१४.४) इति पुनरष्टममण्डले । उक्तार्थम् ॥

**'इन्द्रो वा चेदियन्मघं सरस्वती वा सुभगा ददिर्वसु'** (२१.१७) इत्यष्टमे । अत्रापि धनं मघमिति सायणः । इयन्मघं इयद् यशः इति स्वरसम् । वसु ददिरिति धनस्य पृथक् कथनात् ॥

**'तेभिरिन्द्रम्–'**(७९-५) इत्यादि नवममण्डलगतो मन्त्रः भगवत्पादेनैवोदाहृतः ॥

**'वृधासो ये मघवन्नानशुर्मघम्'** (१४७.३) इति च दशमे । अत्रापि मघमिति यश एव । **'वाजिनमाहवे धने'** इत्युत्तरत्र श्रवणात् ॥

तथा च सर्वे वेदाः सर्वे शब्दाः सर्वे घोषाः सर्वाऽपि प्रकृतिः यद्यशो गायति स यशस्वी । सर्वे चतुर्दशलोकाः सचराचरा यस्य स्वं स धनवान् । सर्वयज्ञानां यो भोक्ता च प्रभुश्च स मखपतिरित्यनुसन्दधत् चतुरानन आह– **मघवन्** । खस्य घः । तृतीयोऽतिशये ॥ ✻ ॥

**'विदा'** इत्यविभक्तिको निर्देशः । **'परमे व्योमन्'**, **'कडिकडिकडि कायम्'** इतिवत् । **विद ज्ञाने** । दैर्घ्यं सांहितमित्युक्तम् । **'संहितायां यत्र दैर्घ्यं पदे यत्र न दृश्यते । उक्तार्थस्य महाधिक्यं श्रुतेस्तत्र विवक्षितम्'** इत्यृग्भाष्ये स्वयमेवाऽह भगवत्पादः । अतिशयेनातिप्रीतिपुरस्सरमिति तदर्थः । **'तेने ब्रह्म हृदा य आदिकवये'** इति हि भागवते ॥

## गातुं त्वां स्तोतुम् । विद वेदयेति सामान्यतोऽपेक्षिताशेषवेदनमुक्त्वा तात्कालिकापेक्षितं प्रार्थयति– गातुं विदेति ॥

**'विद'** इत्यन्तर्णीतणिच् । वेदयेत्यर्थः । **'स्वातन्त्र्यस्नेहयोरन्तर्णीतणिच्'** इति प्राचीनम् । तेन भगवतः स्वातन्त्र्यं प्रथमजीवे चतुरानने स्नेहातिशयं चाऽह ॥

हे मघवन् भगवन्, सर्वजीवेभ्योऽधिकं मां ज्ञानिनं कुरु वेदय । यतस्त्वं सर्वं सर्वदा वेत्सि । अथच वस्तुतस्त्वं मां विद अवेदयः । अथापि वेदादिरहस्यमितोऽप्यधिकं वेदय । त्वत्स्वरूपं च इतरेभ्यः सर्वजीवेभ्योऽधिकं बोधय । तदिदमेकं वाक्यम् । अथ प्रकृतोपयुक्तं प्रार्थयते– **विदा गातुमिति** । त्वां गातुं त्वमेव विद वेत्सि, सम्प्रति त्वां तुष्टूषौ मयि स्थित्वा त्वां गातुं स्तोतुं ममापि विद वेदय । तदपि इतरेभ्योऽतिशयेनेत्याह– **विदा** ॥

## त्वमेव अनुशंसिषो दिशः मार्ग्गान् । आत्मनः स्तुतिप्रकारान् स्वयमेवोपदिशेत्यर्थः ॥

त्वमेव दिशः स्तुतिप्रकारान् अनुशंसिषः अनुशंस । अनेकगुणानुसन्धानानुगुणं शंस । यः पूर्वकल्पे पूर्वब्रह्मणे नाभिकमलस्थाय अशंसिषः अशंसीः । तथा मामपि अनुशंस । अक्षराधिक्येन प्राणस्यापि षकारवाच्यस्य सामस्त्येन शंसेत्यर्थः । नात्र शंसनं स्तुतिः । किन्तु कथनमिति । अत्र द्वेधा प्रतृण्णं

सम्भवति । सप्ताक्षरः प्रथमः पादः । नवाक्षरो द्वितीय इत्येकः । नवाक्षरः प्रथमः । सप्ताक्षरे द्वितीय इत्यपरः । प्रायो बहवः प्रथमपादमेव सप्ताक्षरं मन्यन्ते । अत आचार्यो निर्णयमाह– **विदा गातुमिति** पूर्वेणान्वयप्रदर्शनात् नवाक्षरः प्रथमः पाद इति । **'तेषामृग् यत्रार्थवशेन पादव्यवस्था'** (२.१.३५) इति हि द्वादशलक्षण्यां जैमिनिः ॥

ननु को विशेषः? प्रथमस्य नवाक्षरत्वे द्वितीयः सप्ताक्षरो भवति । द्वितीयस्य नवाक्षरत्वे प्रथमः सप्ताक्षरः । यः कोऽपि भवतु, को विशेषः? सर्वथा त्रिंशदक्षरत्वेन स्वराडुष्णिग् वा स्यात् । विराडनुष्टुब् वा स्यात् । न भोः, प्रथमपादस्य नवाक्षरत्वपक्षे बृहत्या समारम्भ इति महान् लाभः ॥

## पूर्वीणां भगवत्सम्प्रदायागतानां परमविद्यानामर्थे शिक्ष । शचीनां विद्यानां पते, वाचां पत इति वा । पुरुवसो बहुवित्त, बहुज्ञानेति वा । बहुषु वसति, बहूनामावास इति च ॥ ✻ ॥

पूर्वीणां पूर्वकल्पीयानां अनादितो वर्तमानानां कल्पादौ त्वयैवाभिव्यज्यमानानां परमविद्यानामर्थे मामपि शिक्ष शिक्षय । **'ता एव परमा विद्याः'** इति ह्युक्तम् । यतस्त्वं सर्वविद्यानां सर्ववाचां च पतिः । **'मुनिस्तु सर्वविद्यानां भगवान् पुरुषोत्तमः'** इति स्मरणात् ॥

निघण्टूक्तमिदमर्थद्वयम्– **'धीः शची माया वयुनं ज्ञानम्'** इति । **'अदितिः शची वाक्'** इति च । **'शच व्यक्तायां वाचि'** इति धातुपारायणिकाः । पुरूवसो इति संहितापाठः । पुरु+वसो इति प्रतृण्णम् । निरवधिकं बहुत्वमित्यर्थः । समग्रमण्डं यस्य वसु स पुरुवसुः । पुरु परिपूर्णं वसु ज्ञानं यस्य स पुरुवसुः । पुरुषु ब्रह्मादिषु समस्तदेवेषु वसतीति पुरुवसुः । बहूनि जगन्ति वसन्त्यत्रेति वा ॥

यत्तु षड्गुरुशिष्य आह– **'विदाः वेत्सि गातुं जननमरणात्मकं गतागतम् । अनुशंसिषः सम्यक् त्वत्स्तुतिकारिणीः, प्राच्याद्याः दिशः शिक्ष रक्ष'** इत्यादि । अपदार्थानेव पदार्थानाचष्टे इत्युपेक्ष्योऽयम् । नहि ब्रह्मदृष्टे मन्त्रे एतादृशाः अर्थाः शोभन्ते ॥

यच्चापि सायणः– **'यजमानस्य समीचीनेन मार्गेण स्वर्गं गन्तुं दिशः मार्गोपयुक्तान् दिग्विशेषान् अनुशंसिषः अनुक्रमेण शंस उपदिश । किञ्च पूर्वीणां पूर्वसिद्धानां शचीनां पते पालक । पुरु प्रभूतं वसु यस्यासौ तत्सम्बोधनं हे पुरूवसो, शिक्ष यजमानाय उपदेशं कुरु'** इति ॥

तदेतत् कर्मकाण्डपण्डितस्य मीमांसकम्मन्यस्य जल्पनं मूलं न पस्पर्शैव । मूलतोऽस्य मन्त्रसमुदायस्य नाभिकमलस्थश्चतुर्मुख ऋषिरिति मूलप्रमेयमेवायं विसस्मार । तदा स्थूलप्रपञ्चस्य सृष्टिरपि नाऽसीत् । कस्य यजमानस्योपदेशं कुर्विति प्रार्थयामास ब्रह्मा? नन्वात्मन एव । तर्हि ममेति व्याख्येयं न यजमानस्येति । कस्य वा स्वर्गं गन्तुं मार्गोपदेशः? यजमानस्य स्वर्गमित्यध्याहारः, गातुमित्यस्य गन्तुमिति वर्णविपर्यय इति महदिदमसङ्गतम् । इन्द्रः केवलं शच्याः पतिरिति तद्व्यावृत्त्यर्थं शचीनां पते इत्याह । अथापीन्द्रं तुष्टावेति वदतः किं वक्तव्यम् ॥

आस्तां प्रजापतिः प्रथम ऋषिः । इन्द्रस्यार्षमिति पक्षमाश्रित्य सायणेनोक्तमिति वदामः । अयि भोः, महेन्द्रोऽपि स्वर्गस्य मार्गमजानन् पप्रच्छेति अद्भुतं वचः ॥

तर्हि विश्वामित्रस्याऽर्षमिति पक्षमाश्रित्येदं व्याख्यानं प्रवृत्तम् । तदपि न चारु । त्रिशङ्कोः कृते स्वर्गान्तरं निर्मितवतः, इन्द्रस्य महाव्रताख्ये यज्ञे स्वयं स्वर्गे होतृत्वं निरूढवतः जातापरोक्षस्य तपसाऽधिगतब्रह्मर्षित्वस्य स्वर्गमार्गदिग्दर्शनप्रार्थनमित्येतदद्भुतम् । तस्मात् कस्यचिन्मानुषमात्रस्य ऋत्विज उक्तिरियमिति वक्तव्यम् । अहो तर्हि कश्चिद् भोजनद्विज एनं मन्त्रं ददर्श । एतादृशं सामान्यवचनं किमिति महार्थमहामन्त्रत्वेन स्तूयते महानाम्नी ऋगिति? सर्वमेतदकाण्डताण्डवं कर्मकाण्डपण्डितस्य होममधूममण्डितस्य ॥ * ॥

—०—

अथ द्वितीया–

**[आभिष्ट्वमभिष्टिभिः प्रचेतन प्रचेतय ।**
**इन्द्र द्युम्नाय न इष एवा हि शक्रः ॥ २ ॥]**

**आभिरभिष्टिभिः, एवम्भूतैस्त्वत्पर्य्येषणैः, त्वत्प्रार्थनैः त्वं किञ्चिन्मदादिकं प्रचेतय प्रबोधय । प्रकृष्टचेतन सर्वज्ञ, परमात्मन् । द्युम्नाय ज्ञानाय, यशसे वा, इषे अन्नाय नः प्रबोधय । एतादृशो हि शक्रः । शक्र एवेति वा । शक्तिरतिरूपत्वाच्छक्रः ॥ * ॥**

ऋषिदेवते समाने । गायत्रीगर्भा भुरिगुष्णिक् छन्दः (८+८+८+५=२९) । तथाहि– आद्यास्त्रयः पादाः **'आभिष्टुवम्'** इति क्षैप्रविश्लेषेण गायत्रीं सम्पादयन्ति । संहत्य चाविश्लेषेण केवलोष्णिक् ॥

अभि+इष्टिभिः, **'लोपः समाने'** इति **अभिष्टिभिः** । **'शकन्ध्वादिषु पररूपं वाच्यम्'** इति रूपसिद्धिरिति पाणिनीयाः ॥

अभितः परितः इष्टिभिः एषणैः प्रार्थनैरिति फलितम् । **इष इच्छायाम्** । आभिर्मया चिकीर्षिताभिः इष्टिभिः स्तुतिभिः, **एवम्भूतैः प्रार्थनैरिति** भगवत्पादः । एवम्भूतैः केवलभगवत्परैः । इतः परं इन्द्रादिभिः क्रियमाणैः, अत एव मदादिकमित्याह ॥

प्रकृष्टा सर्वाधिका चेतना मनीषा यस्य स प्रचेतनः । हे प्रचेतन, सर्वज्ञ इत्यपरं महन्नाम । प्रकृष्टः सर्वोत्तमः चेतनः आत्मेति वा । प्रचेतन, परमचेतन परमात्मन् । प्रकृष्टान् उत्तमजीवान् चेतयति स्वरूपं ज्ञापयतीति वा । अतश्चतुर्मुख आह– मदादिकं सात्विकजीवजातं त्वत्स्वरूपविषये किञ्चित् प्रचेतय प्रबोधय । **चिती सञ्ज्ञाने,** णिच् । हे इन्द्र, इति तृतीयं महन्नाम । इन्दतीति इन्द्रः । **इदि परमैश्वर्ये** । **'ऋजेन्द्र.......'** (उणादि.२.१९) इति रन् । नित्वादाद्युदात्तं पदं **'इन्द्रः'** इति पाणिनीयाः । इन्दति रमत इति वा । उक्तं चान्यत्र–

> **'इन्द्रः स परमैश्वर्यादिमुद्दिश्य च द्रुतेः ।**
> **'ददर्शेदं दीप्तिमत्वादिदं रातीति वा भवेत्'** इति ॥

इदं सृष्टं जगदुद्दिश्य द्रवतीति इन्द्रः । **'तथ् सृष्ट्वा तदेवानुप्राविशत्'** इति श्रुतेः । इदं भक्तैः प्रत्तं पत्रादिकं स्वीकर्तुं द्रवतीति वा । **'पत्रं पुष्पं फलं तोयम्–'** इत्यादेः । इदं भक्तवृन्दं प्रति द्रवतीति वा । इन्दुः, द्रवति द्रावयति चैनमिति इन्द्रः । **'इन्द्रायेन्दो परिस्रव'** इति श्रुतेः । इष्टदानात्

इन्दुः । वायुरपि 'इदं'पदोदित इतीदमपि भाष्यसूचितमेव । इं स्वेष्टं वायुं द्रवतीति इन्द्रः । सृष्ट्यर्थं ब्रह्माणं वा । इदं गुणजातं द्रवत्येनमिति इन्द्रः । इदं दोषजातं द्रवत्यस्मादिति वा । इन्धे रमते चेति इन्द्रः । **इन्धी दीप्तौ** । इदं वायुं गुरुत्वेन राति । **रा दानादनयोः** । इदं अभीष्टं राति ददाति । इदं सृष्टं जगत् अन्ते राति अत्तीति च इन्द्रः । द्युम्नाय सर्वाधिकं भगवज्ज्ञानाय, वित्ताय सृष्टं सर्वमिदं मम वित्तं यथा स्यात् ॥

इष्यते जीवनार्थमिति 'इट्' अन्नं ज्ञानरसाख्यम् । **'अन्नं ज्ञानरसान्नं च बाह्यान्नमिति च द्विधा'** इति वचनात् ॥

**'स एतमेव पुरुषं ब्रह्म ततममपश्यत् । इदमदर्शमितीँ३ । तस्मादिदन्द्रो नाम । इदन्द्रो ह वै नाम । तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः'** (२.३.३) इत्यैतरेयी श्रुतिः ॥

द्योतन्ते अनेनेति द्युम्नं वित्तं यशो वा । दिवि देवाः आमनन्त्येतदिति विशेषतः भगवज्ज्ञानं मोक्षाख्यवित्तं वा । **'अहं वृक्षस्य रेरिवा कीर्तिः पृष्ठं गिरेरिव'** इति श्रुतेः यशसे वा ॥

एवा हि शक्रः । एवं हि शक्रः, शक्र एव हि इति वा । सांहितं दैर्घ्यम् । शक्र इत्यपरं महन्नाम । शक्नोतीति शक्रः, रक्, कित्वादन्तोदात्त इति पाणिनीयाः । शक्नोति रमते चेति तत्ववादिनः । तदेतदाह– **'शक्तिरतिरूपत्वाच्छक्रः'** । उभयत्रापि अन्त्यतिलोपः । शक्नोति रमयति चेति वा । इदमप्युक्तम्– **रतिं रूपयतीति** । शाकयति रमयतीति वा । इदमप्यसूचि– शक्तिं रतिं च रूपयन्निति । शतं क्रतवो अस्येति वा शतक्रतुः शक्रः । तत्राप्यन्त्याक्षरलोपः । अनन्तज्ञानः । **'स क्रतुर्ज्ञानरूपत्वात्'** इत्यादेः । अनेन क्रियत इति वा क्रतुः, अनन्तकर्मा । सर्वाण्यपि कर्माणि तस्यैवेति । सर्वे यज्ञाः तस्यैवेति च शतक्रतुः । **'अहं हि सर्वयज्ञानाम्'** इत्यादेः ॥ ❋ ॥

—०—

अथ तृतीया–

**[ राये वाजाय वज्रिवः शविष्ठ वज्रिन्नृञ्जसे ।**
**मंहिष्ठ वज्रिन्नृञ्जस आ याहि पिब मत्स्व ॥ ३ ॥ १ ॥]**

**राये वित्ताय ज्ञानाय वा । वाजाय अन्नाय । वज्रिणमिन्द्रं वर्त्तयतीति वज्रिवा । नियामकत्वेन गच्छतीति वा । शविष्ठ बलवत्तम, सुखवत्तमेति वा । ऋञ्जसे प्रेरयसि सर्वान् । 'मंहिष्ठ वज्रिन्नृञ्जसे' इत्यभ्यासः तात्पर्य्यार्त्थः । मत्स्व मदं कुरु ॥ ✻ ॥**

गायत्र्युष्णिग् चोक्ते । इदमिदानीं क्षैप्रविश्लेषेणानुष्टुभा स्तौति (८+८+८+८=३२) । क्षैप्रमव्यूह्य चतुर्थश्चरणः सप्ताक्षर इति (८+८+८+७=३१) निचृदनुष्टुबिति षड्गुरुशिष्यः । न तद् वक्तव्यम् । क्षैप्रव्यूहेनैवाक्षरपूर्तेः ॥

सृष्टौ सात्विकान् मोक्षाख्यवित्ताय ऋञ्जसे प्रेरयसि । मां तु ब्रह्माण्डसृष्टौ प्रेरयसि । वाजाय अन्नाय ज्ञानरसाख्यान्नाय च । अर्थात् तत्सृष्ट्यर्थम् । कोऽयं य एवमृञ्जते? इन्द्रः स्यात् । न स्यात् । नहि ब्रह्मा इन्द्रं स्तौतीति युक्तम् । अतस्तद्व्यावर्तकं विशेषणमाह– हे **वज्रिवः** । अस्मिन् मन्त्रे श्रुतं महानामेदम् । वज्रिणं प्रवर्तयति स्वेस्वे कर्मणि । क्वचिद् विरुद्धकर्मणि च । यथा गोवर्धनोद्धरणे पारिजातहरणे वा । वज्रिणं नियन्तुमन्तर्गच्छति वा । वज्रिणं वातीति । वा गतौ । **'वज्रिवन्'** इत्यस्य छान्दसं रूपम् **'वज्रिवः'** इति । **'भगवः'** इतिवत् । यद्यपि पाणिनिः– **'मतुवसो रु–'** (८.३.१.) इति मतुबन्तस्य वस्वन्तस्य च सम्बुद्धौ रुः प्रत्ययो भवतीत्याह । अपर्याप्तमिदम् । अत एव वार्तिककारोऽप्रीयमाण इवाऽह– **'वन उपसङ्ख्यानं कर्तव्यम्'** इति । क्वनिब्वनिपोरुपसङ्ख्यानं कर्तव्यमित्युक्तं भवति । किमायतं प्रकृते? वज्रिवन्शब्दोऽप्युपसङ्ख्येय इत्यायातम् । पाणिनिरप्याह– **'आतो मनिन्क्वनिब्वनिपश्च'** (३.२.७४) इति, **'अन्येभ्योऽपि दृश्यते'** (७५) इति च । जयादित्योऽप्याह– **'अपिशब्दः सर्वोपाधि-व्यभिचारार्थः'** इति, **'दृशिग्रहणं प्रयोगानुसरणार्थम्'** इति च । अर्वन्शब्दवदयं वज्रिवन्शब्दः । वज्रिवा वज्रिवन्तौ वज्रिवन्त इति । अत आह– **'वज्रिणं वर्तयतीति वज्रिवा'** इति । **'वज्रिवाः'** इति प्रचलितः पाठः प्रामादिकः । ननु मघवच्छब्दवदयं शब्दः किं न स्यात्? न स्यात् । मघवच्छब्दो हि रूपद्वयवान्– मघवा मघवानौ मघवान इति । मघवान् मघवन्तौ मघवन्त इति । प्रथमं रूपं तावद् वज्रिवच्छब्दे न सम्भवति । द्वितीयं रूपमपि न युक्तम् । यतस्तदात्वे भाष्यकारः 'वज्रिवान्' इत्यवक्ष्यत् । नतु **'वज्रिवा'** इति ॥

**'वज्रिवः वज्रयुक्तहस्तवन्'** इति वदन् षड्गुरुशिष्यः शोचनीयः । नहि तादृशी वाचोयुक्तिः भाषाविदां शोभते । नहीन्द्रो हस्तादृते अन्यत्र वज्रं धत्ते । पुनरुक्तिश्च वज्रिन्नित्यनेन । अपि च वज्रिपदेन प्राप्तमिन्द्रपरत्वं व्यावर्तयितुं ब्रह्मा वज्रिव इत्याह । तेन मूलभाव एव व्युच्छिन्नः । ननु वज्रिन् बलवन् इत्यर्थान्तरकरणेन न पुनरुक्तिः । अस्मदुक्तरीत्या प्रसिद्धार्थस्वीकारे किमनेन द्रमिळप्राणायामेन? कोऽर्थस्तवाभिमतस्तर्हि? इन्द्रस्यान्तर्यामी वज्री इत्युच्यते । **'अन्तर उपपत्तेः'** (ब्र.सू.१.२.१३) इति हि बादरायणोक्तिः । वजनं ज्ञानम् । **'वज गतौ'** इति धातोः । गतिरवगतिश्च । वजनं रमणश्च अस्येति वज्री । वजन्ति सर्वत्र गच्छन्ति । सर्वमवगच्छन्ति चेति वज्राः भगवदवताराः । तादृशाः अवताराः अस्य सन्तीति वा । **'ऋज्रेन्दाग्रवज्र–'** इत्यादिना रन् । तेनाद्युदात्तं पदं वज्रं वज्रो वा इति पाणिनीयाः । **'महद् भयं वज्रमुद्यतम्'** इति हि श्रुतिः ॥

शविष्ठः सुखवत्तमः । **'शवसा क्रन्त सूरयः'** इत्यादिषु सुखे शवशब्दः प्रसिद्ध इति तमर्थमाह । **'शविष्ठः शूराणाम्'** इत्युत्तरमन्त्रानुसारेणाऽह **'बलवत्तमेति वा'** इति ॥

**मंहिष्ठः महतो महीयान् । महि वृद्धौ । 'शवतेः गत्यर्थात् इष्ठनि शविष्ठः गन्तृतमः'** इति षड्गुरुशिष्यः । **'मंहिष्ठ दातृतम । दानार्थात् मंहतेरिष्ठन्'** इति च ॥

सर्वान् ऋञ्जसे प्रेरयसि । **'ऋञ्जसे गच्छसि यज्ञेषु'** इति षड्गुरुशिष्यः । **'ऋञ्जसे अनिष्टं वर्जयसि परिहरसि इति । यद्वा ऋञ्जसे अभीष्टं साधयसि । 'ऋञ्जतिः प्रसाधनकर्मा' इति निरुक्तवचनात्'** इति सायणः । **'ऋजि प्रेरणे'** इति प्राचीनो धातुपाठः सर्वैरपि विस्मृतप्रायः ॥

आयाहि मद्धृदयपीठम् । पिब भक्तिरसम् । मत्स्व मदं कुरु, हृष्टो भव । मयि प्रीतो भव । अस्मद्भक्तस्य वा मदं कुरु । आनन्दं जनयेत्यर्थः । महानाम्नीनामृचां त्रिधा विभागो द्विविध उपरिष्टाद् वक्ष्यते । प्रथमविभागे नवानामृचामेव ग्रहणम् । द्वितीये सनिगदानाम् । तत्र प्रथमविभागपक्षे इदं त्रिकं (१–३) प्रथमा महानाम्नी ॥ ❊ ॥

—०—

अथ चतुर्थी–

**[विदा रायः सुवीर्य्यं भुवो वाजानां पतिर्वशाँअनु ।**
**मंहिष्ठ वज्रिन्नृञ्जसे यः शविष्ठः शूराणाम् ॥ ४ ॥]**

**विद वेदय लम्भय रायः सुवीर्य्यं च । वाजानां प्रजानां पतिः भुवः अभवः । 'प्रजा वै वाजः' इति श्रुतेः । वशाननु यथावशम् । 'वश इच्छायाम्' इति धातोः, यथावशं यथेच्छम् । शूराणां सकाशाद् बल-वत्तमः ॥ ॐ ॥**

अस्य मन्त्रस्य भुरिगनुष्टुब् छन्दः (९+९+८+७=३३) इति षड्गुरुशिष्यः । तत्पक्षे **'विदा रायः सुवीर्यं भुवः'** इति प्रथमः पादः । **'भुवो वाजानां'** इति अन्वयानुगुणतया द्वितीयः पाद इति आचार्याशयः । तस्मात् विराड्बृहतीति (८+११+८+७=३४) युक्तः पन्थाः ॥ ॐ ॥

विद इति सार्वविभक्तिको धातुनिर्देश इत्युक्तम् । विद वेदय ज्ञापय इति पूर्वमुक्तम् । अत्राप्यन्तर्णीतणिजित्याह– **'वेदय'** । अत्र न वेत्तेरिदं रूपम् । किन्तु विन्दतेरित्याह – **'लम्भय'** इति । **विदॢ लाभे** इति पाणिनीयाः । **विद लाभे** इत्यन्ये । किं वेदनीयम्? **रायः सुवीर्यं च** । प्रजासन्ततिरूपाः रायः मे लम्भय । निखिलसृष्टिदक्षं सर्वाधिकं वीर्यं च लम्भय । मत्सृष्टानां प्रजानां च विद्यावित्तमयीः रायः लम्भय । शत्रुक्षपणदक्षं सात्विकं वीर्यं तेजस्विनाऽधीतेन जनितं सुखमयं वीर्यं च लम्भय । अहं प्रजापतिरिति नाममात्रम् । वस्तुतस्त्वमेव वाजानां प्रजानां पतिर्भुवः अभवः । अल्लोपेन पतित्वं सार्वकालिकमित्याह । उकारेण सर्वोत्तमं पतित्वमिति च । 'प्रजा वै वाजस्ता एष बिभर्ति यद् बिभर्ति तस्माद् भरद्वाजः' (प्रघ.२.अ.१.ब्रा.१) इति महैतरेयोपनिषत् । वशाँननु यथावशं यथेच्छम् । क्वचित् **'वशमनु'** इति कोशे पठ्यते । उत्तरत्र निगदे वशाननु इत्येव व्याख्यातम् । अत्रापि **'वशाननु'** इत्येव युक्तः पाठः । स्वातन्त्र्यात् तव मयि स्थितस्त्वमेव यथेच्छसि तथा कुर्वित्येतत् तदुक्तं भवति । **'वश इच्छायाम्'** इति प्राचीनम् । **'वश कान्तौ'** इति पाणि-नीयाः । यस्त्वं शूराणां बाह्यान्तःशत्रुक्षपणदक्षाणां शविष्ठः बलवत्तमः । नहि त्वदृते

शत्रुक्षपणं नाम केनापि शक्यम् । ननु शत्रुक्षपणे बलवानपि भगवान् क्वचित्क्वचिदायस्तः श्रूयते । नेत्याह– **शविष्ठः बलवत्तमः** । लीला हि तस्य रक्षोविजयो नाम । सन्तोषाधिक्यात् पुनःपुनः आम्रेडयति । **'मंहिष्ठ वज्रिन्नृञ्जसे'** । हे मंहिष्ठ वृद्धतम । हे वज्रिन् वज्रोपलक्षितसर्वप्रहरणायुध । त्वमेव असुरेषु स्थित्वा तान् पराजयार्थं ऋञ्जसे प्रेरयसीत्यर्थः ॥

**'ऋञ्जसे यज्ञेषु गच्छसि'** इति, **'ऋञ्जेः भुक्त्यर्थात् तुमर्थे से । भोक्तुं हविरायाहि'** इति च द्विः प्रयोगस्य द्वेधार्थमाह षड्गुरुशिष्यः । नह्येकस्मिन् वाक्ये द्विःप्रयुक्तः शब्दः भिन्नार्थ इति स्वरसमन्यत्र यमकात् । तात्पर्यार्थं द्विरुक्तिरिति स्वरसोऽर्थः ॥

सायणस्तु इमं दोषं परिजिहीर्षन् अन्यत् किमपि जजल्प । तदपि मनसि न लगति ॥ ✻ ॥

—०—

अथ पञ्चमी–

**[यो मंहिष्ठो मघोनां चिकित्वो अभि नो नय ।**
**इन्द्रो विदे तमु स्तुषे वशी हि शक्रः ॥ ५ ॥ १ ॥]**

## मघोनां यशस्विनां महत्तमः । चिकित्वः ज्ञातः, कर्त्तरिति वा । नः अभितः सर्वतो नय । इन्द्रो विदे समस्तं व्यजानात् । तमेव स्तुषे ॥ ✻ ॥

अनुष्टुब्गर्भा उष्णिक् (७+८+८+५=२८) । उष्णिहा समारम्भादुष्णिक् । शूराणां सकाशात् शविष्ठः बलवत्तम इत्युक्तम् । एवं मघोनां मघवतां सर्वेषां यशस्विनां धनवतां मखवतां सकाशात् मंहिष्ठः महत्तमः । अवधारणार्थे बिन्दुः । अत एव यशस्विनां मध्ये इति नार्थः । किन्तु सर्वेषां यशस्विनां सकाशात् ॥

चिकित्वः, **कित ज्ञाने** । सर्वस्य ज्ञातः । **कित निर्माणे** । **'यच्चिकेत सत्यमित् तन्न मोघम्'** । मयि स्थित्वा सर्वकर्तः, ममापि पितः, हे नारायण । नः इत्यात्मनि बहुवचनम् । मां कर्तव्यकर्मणि सर्वतो नय । यतस्त्वमिन्द्रः परमेश्वरः नः सर्वेषाम् । सर्वं विदे विविदे व्यजानादित्यर्थः । **'लोपः समाने'** इति लोपः । तस्मात् तमेव स्तुषे स्तौमि । मयि स्थित्वा त्वां त्वमेव स्तौषि इत्यर्थः ।

**'न ऋते त्वत् क्रियते–'** इत्यादेः । सर्वं वशयतीति वशी सन्नपि शक्रः भक्तस्य वशे आत्मानं करोतीति भक्तपराधीनो हि । शं आनन्दरूपं क्रं कर्मास्येति शक्रः । **'को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्'** इति श्रुतिः । वं ज्ञानं बलं वा, शमानन्दः । तद्वान् वा वशी । सनिगदानां महानाम्नीनां त्रेधा विभागपक्षे एताः पञ्च ऋचः (१–५) प्रथमा महानाम्नी ॥ ✻ ॥

—०—

अथ षष्ठी–

**[तमूतयें हवामहे जेतारमपराजितम् ।**
**स नः पर्षदति द्विषः क्रतुश्छन्द ऋतं बृहत् ॥ ६ ॥ २ ॥]**

ऊतये रक्षायै, अभिप्रायसिद्धये वा । स नो द्विषः शत्रून् अतिपारयतु, पापानि तमांसि (वा) । क्रतुः ज्ञानरूपः । छन्दः इच्छारूपः । छन्द्यत्वात् छादनत्वाद् वा । ऋतं अशेषशास्त्रावगतम् ॥ ✻ ॥

सम्प्रति समग्रयाऽनुष्टुभा स्तौति (८+८+८+८=३२)। सर्वत्र ततम्, अथापि तं परोक्षम्, ऊतये, अवतेरूतिः, अपेक्षितार्थसिद्ध्यै । **अव कान्तौ** । कान्तिरिच्छा । रक्षायै वा । **अव रक्षे** । अपेक्षितस्य सृष्टिकर्मणः सिद्ध्यर्थं, सृष्टस्य जगतः रक्षार्थं चाऽह्वयाम इत्याह चतुर्मुखः । मम जगत्सर्जनसामर्थ्यं देहि । सृष्टं च जगद् रक्ष विष्णुरूपेण इत्यर्थः । मा सृष्टिरन्तराळे दुष्टशक्तिभिर्नशदिति । कुतः स एव प्राथ्र्यते? **जेतारमपराजितम्** । देवेषु स्थित्वा जापयिता च स एव । अपराजापयिता च । **जि अभिभवे** । अपरे भगवत्परिपन्थिन अजिता येन । न विद्यते परो यस्मात् । अजितश्च । न कोऽप्येनं परिभवति । स भगवान् नः अस्माकं सम्बन्धिनो देवानां द्विषः पापानि अज्ञानानि वा अतिपर्षत् । अतिक्रामय्य दूरं गमयित्वा पालयतु । पूर्णार्थान् करोतु । **पॄ पालनपूरणयोः** । **क्रतुश्छन्द ऋतं बृहत्** इति चतुर्मूर्तीः स्मरति । **क्रतुर्ज्ञानरूपः** मोक्षनियामको वासुदेवः । वं ज्ञानम् । तेन

असुं प्राणं ब्रह्माणं वा देवयतीति वासुदेवः । संसारचक्रात् तारयतीति चक्रं तुदतीति वा क्रतुः । तमेतं चक्रतुं सन्तं क्रतुरित्याचक्षते परोक्षप्रियाः । यद्वा करोति सृजति ब्रह्माणमिति क्रतुः । तदनेन चतुर्मुखः स्वपितरं वासुदेवं सस्मार । छन्द्यत्वात् वरणीयत्वात् । छादनत्वात् छन्दोभिराच्छादकत्वाद्वा । 'छादयन्तीति छन्दांसि' इति श्रुतेः । संहारक्रियया जीवनं छादयतीति च । तेन छन्द इति सङ्कर्षणः । ऋतमिति प्रद्युम्नः । सर्वतः प्रकृष्टः इति द्युभिः द्योतमानैः अशेषशास्त्रैः म्नायते । प्रकृष्टं द्युम्नं यस्येति वा । बृहतो ब्रह्माण्डस्य स्थितिहेतुत्वात् अनिरुद्धो बृहत् । प्रथमविभागे इदं द्वितीयं त्रिकम् (४–६) द्वितीया महानाम्नी ॥ ❋ ॥

—०—

अथ सप्तमी–

[इन्द्रं धनस्य सातये हवामहे जेतारमपराजितम् ।
स नः पर्षदति द्विषः स नः पर्षदति स्रिधः ॥ ७ ॥]

सातये लब्धये । स्रिधः विनाशात् ॥ ❋ ॥

गायत्रीगर्भया बृहत्या (८+१२+८+८=३६) समारभते– इन्द्रम् ॥

धनस्य सृज्यमानस्य विश्वात्मकस्य लाभाय । प्रजानां विद्यावित्तात्मकस्य धनस्य सातये । तेन सज्जनानां मोक्षस्य लाभाय । 'जेतारमपराजितम्' इति सन्तोषभरेण उक्तमेव पुनराम्रेडयति । अन्ते पुनर्मोक्षाख्यवित्तमवधारयति– स नः अस्मदीयान् सात्विकान् स्रिधः संसाराख्यात् विनाशात् अतिपारयतु । 'स्रिधु विनाशे' इति प्राचीनम् ॥ ❋ ॥

—०—

अथ अष्टमी–

[पूर्वस्य यत् ते अद्रिवः सुम्न आ धेहि नो वसो ।
पूर्तिः शविष्ठ शस्यत ईशे हि शक्रः ॥ ८ ॥ २ ॥]

पूर्वस्य अनादेः ते सकाशात् यत् सुम्नं सुखं तस्मिन् न आधेहि । तव पूर्त्तिः शस्यते ॥ ✻ ॥

गायत्रीगर्भेयं भुरिगुष्णिक् (८+८+८+५=२९) । पूर्वकालस्य निरवधिकत्वात् पूर्वस्येत्यनादेः । हे **अद्रिवः** अद्रिरादरणीयत्वात् वायुः शिवो वा । यथा मां सृष्टिकर्मणि तथा शिवं संहारकर्मणि प्रवर्तयसि । तेन हे अद्रिवः, यत् ते प्रसादात् सुखं तत्र न आधेहि । येन शतानन्दनामानः स्याम । नः अस्मदीयान् वा मोक्षाख्यसुखे । सर्वत्र वसतीति वसुः । वरसुखत्वाच्च । सुबलरूपत्वाच्च । पूर्णज्ञानत्वाच्च । **'पूर्णो भूतिवरोऽनन्तसुखो यद् व्याहृतीरितः'** इति, **'सुवः सुबलरूपत्वात्'** इति, **'वरिति ज्ञानमुच्यते'** इति च प्राचीनम् । तव पूर्णानन्दत्वं सर्वेषु शास्त्रेषु शस्यते । सर्वशक्तस्त्वं कर्तुमकर्तुमीशिषे हि । त्वदनुग्रहेण शक्तोऽहमपि सृष्टिकर्मणीशे । त्वदनुग्रहेण वाय्वादिरपीष्टे हि । द्वितीयविभागपक्षे त्रिकमिदम् (६–८) द्वितीया महानाम्नी ॥ ✻ ॥

—०—

अथ नवमी–

**[नूनं तन्नव्यं सं न्यसे प्रभो जनस्य वृत्रहन् ।**
**समन्येषु ब्रवावहै शूरो यो गोषु गच्छति सखा सुशेवो अद्वयाः ॥ ९ ॥ ३ ॥]**

तन्नव्यं स्तुत्यं ब्रह्म । तत् सम्यक् हृदि न्यसे जनस्योपदेशेन । त्वत्स्वरूपेषु त्वं चाहं च सम्ब्रवावहै । गोषु ज्ञानेषु गच्छति ज्ञानविषयो भवति । सुशेवः सुसुखः । समाधिकरहितः अद्वयः ॥ ✻ ॥

अन्ते पञ्चरूपं नारायणं पञ्चभिरनुष्टुप्पादैः (८+८+८+८+८=४०) स्तौति पङ्क्तिच्छन्दसा–

**नूनम्** ॥

यद् वक्ष्यमाणं तत् नूनम् निश्चितम् । **'तर्कनिश्चितयोर्नूनम्'** इति यादवप्रकाशाचार्यः । ब्रह्मणस्तर्कासम्भवात् निश्चितमित्येवार्थः । किं निश्चितम्? तत् नारायणाख्यं ब्रह्म नव्यम् । णु स्तुतौ ।

सर्वैः सर्वदा स्तुत्यमिति सर्वशास्त्रार्थनिर्णयः । तच्चाहं **जनस्य हृदि सम्यक् न्यसे** न्यस्यामि । तदात्मनः स्वकृत्यमित्यात्मनेभाषा । स्थापयामि उपदेशेन । **असु क्षेपणे** । सर्वथा उपदेशस्यापूर्णतां यकारलोपेनाऽह । अथवा असधातोरिदं रूपम् । **अस गतिदीप्त्यादानेषु** । अन्तर्णीतणिच् । जनानां हृदयेषु दीपयामीत्यर्थः । हे मम प्रभो, हे मम वृत्रहन्, स्वरूपतः अज्ञानरहितमकार्षीः । अन्येषु जनस्य हृदि न्यसनयोग्यादन्येषु ऋजुयोगिना मयैव ज्ञातुं योग्येषु मयाऽप्यज्ञातेषु केवलेश्वरदृष्टगुणविशेषेषु च त्वं चाहं च **ब्रवावहै** एकान्ते । शूरः यः शमनन्तसुखमूरीकरोति । यः शुः सुखशीलः यश्चान्यनिरपेक्षः सर्वेषामुपरि रमते । शत्रुक्षपणदक्षश्चेति **गोषु** वेदेषु गच्छति सन्निहितो भवति प्रतिपाद्यत्वेन । **गोषु** वेदजन्यज्ञानेषु वा । **सखा** मम मुख्यसखः, सर्वेषां जीवानां च सखा । सुः दुःखासम्भिन्नं शेवं सुखं यस्य । अद्वयः अद्वितीयः, तादृशस्यान्यस्याभावात् । अतिशयार्थे सांहितो दीर्घः । अद्वय इति प्रतृण्णम् । अथापि त्वं मत्तोऽद्वयः प्रतिभासि ऐकरूप्यादेकनामत्वाच्च । अहं तु जानामि अकारवाच्यो भगवान् मत्तो द्वयः द्वितीय एव अनन्तगुणाधिकश्चेति । दैर्घ्यमवधारणे । अनन्तगुणाधिक्ये च । प्रथमविभागपक्षे इदं त्रिकम् (७–९) तृतीया महानाम्नी ॥ ✻ ॥



अथ षण् निगदाः–

**[एवा ह्येवैवा ह्यग्ना३इ ॥ १ ॥ एवा ह्येवैवा हीन्द्राँ३ ॥ २ ॥ एवा ह्येवैवा हि विष्णा३उ ॥ ३ ॥ एवा ह्येवैवा हि पूष३न् ॥ ४ ॥ एवा ह्येवैवा हि देवाः३ ॥ ५ ॥ एवा हि शक्रो वशी हि शक्रो वशाँअनु ॥ ६ ॥]**

'एवा ह्येवैवा हि' इत्यग्न्यादिदेवतासंवादरूपेणोक्तमर्थमतिशयेनावधारयति । अभ्यासो हि तात्पर्य्यार्त्थः । एवं हि, एवमेव हीत्यर्त्थः । 'विनिश्चिते तु संवादे विभागो रङ्ग एव च' इति शब्दनिर्ण्णये । अतः 'अग्नाइ' इत्यादि । एवमेव हि शक्रः वशानु यथावशं स्वतन्त्रो वर्त्तत इत्यर्त्थः ॥ ✻ ॥

इतः परं सप्त निगदाः भवन्ति । नवेति सायणादयः । पुरीषपदानीति नाम च कथयन्ति ॥

नाभिकमले ब्रह्मणः षष्ठी सृष्टिः । ततः पूर्वं पालकत्वेन वासुदेवाद् विष्णोराविर्भावः । देवानां सूक्ष्मसृष्टिश्चासीत् । तान् देवान् पश्यन् ब्रह्माऽऽह– **एवा ह्येवैवा ह्यग्ना३इ** इति । सम्बोधने प्लुतः । यत्र विवादरहितः संवादः तत्र सम्बोधने अन्त्यः स्वरः विभज्य पठ्यते । यथाऽत्र **अग्ना+इ** इति, **विष्णा+उ** इति । तदेतदुक्तम्– **'विनिश्चिते तु संवादे विभागः'** इति । वेदेऽयमपूर्वः प्रयोगविशेष इति तुनाऽऽह । रङ्गः सम्बोधनेऽनुस्वारः प्लुतादनन्तरः इन्द्राँ३ इति । तदुक्तम्– **'रङ्ग एव च'** इति । विनिश्चिते संवाद एव रङ्गश्च प्रयुज्यते इत्यर्थः ॥

अथ परितः स्थितान् ब्रह्माण्डसृष्ट्यर्थं निरीक्षमाणान् देवान्, स्वेन सहैव वासुदेवादभिव्यक्तं विष्णुरूपं च स्वाभिप्रायदार्ढ्याय पृच्छति ब्रह्मा ॥

देवानां प्रत्युत्तरगर्भोऽयं निगद इति याज्ञिकाः । **एवा** इति एवमित्यर्थे । तथा च **एवा हि** एवं हि । **एवैवाहि** एवमेवहि । हे अग्ने, इति ब्रह्मा देवानामवममग्निं प्रथमं पप्रच्छ । ततः निगदानां पञ्चाक्षरीकरणेन क्षैप्रविश्लेषेण च पूर्वार्धमुत्तरं च भवतीति याज्ञिकसम्प्रदायः । तथा चैवं प्रतृण्णम्– ब्रह्मा पप्रच्छ– **'एवा हि अग्ने?'** इति । अग्निरुत्ततार– **'एवा हि एव'** एवमेव हि इति । प्रश्नोत्तरयोर्वैपरीत्यादस्वरसमिदम् ॥

अग्निर्वै देवानामवमः पृष्टः **अग्नाइ** इति । इदानीं स्वानुजं देवानामुत्तमं पृच्छति– **एवा ह्येवैवा हीन्द्राँ३** । प्रजापतिदर्शने इन्द्र इति वायुः । एवं हि वायाउ इति । स्याद् देवेन्द्रोऽपि, न नो हानिः । इदानीं वासुदेवादभिव्यक्तं स्वाग्रजं विष्णुं पृच्छति– **एवैवा हि विष्णा३उ** इति । अन्तरिक्षदेवतां सूर्यं पृच्छति– **'एवा हि पूष३न्'** इति । किं व्यष्ट्याऽपर्यवसितया? अतः समष्ट्या पृच्छति– **एवा हि देवा३ः** । सर्वैरपि एवा हि एव इति सशिरःकम्पमङ्गीकृते स्वयमेवाह– **एवा हि शक्रः** । आनन्दमयक्रिय इत्यर्थः । **'को ह्येवान्यात्'** इत्यादेः । कुतः? वशी हि शक्रः । शक्रः सर्वं स्ववशे करोतीति वशी हि । ननु ब्रह्माऽपि सर्वं जीवजातं स्ववशे करोति । अत आह– **वशाँअनु** स्वेच्छानुगुणमिति । **'आतोऽटि नित्यम्'** (अ.सू.८.३.३.) इत्याकारस्यानुस्वारादेशः । एतत्तु

नारायणस्यैव । **'सर्वस्य वशी सर्वस्येशानः'** इति श्रुतेः । ब्रह्मा तु भगवदिच्छानुगुणं सर्वस्य वशी । नारायणः सर्वस्येशानः । ब्रह्मा तु लक्ष्मीनारायणवायून् विहाय सर्वस्येशानः ॥ ❋ ॥

—०—

अवशिष्टा दशमी ऋक्—

**[आयोमन्याय मन्यव उपोमन्याय मन्यवे ।**
**उपेहि विश्वध ॥ १० ॥]**

**आयो इत्यायतिः । उपो इतिवदतिशयार्थ ओकारः । 'ओ अतिशये' इति सूत्रम् । आयो जानातीत्यायोमन्यः । समीपस्थमपि जानातीत्युपोमन्यः । अन्येषामिन्द्रियाणां पराङ्मुखत्वान्न ह्यान्तरं जानन्ति । अयं त्वान्तरमप्यापरोक्ष्येण पश्यति । अयनेन गमनेन प्राप्यं दूरस्थमायो इति वा । 'मनु अवबोधने' इति धातोर्म्मन्युरिति ज्ञानी । बाह्यज्ञाय ज्ञानिन आन्तरज्ञाय ज्ञानिन इत्यभ्यासोऽतितात्पर्य्यार्थम् । एवंविधं मद्गतं त्वामुद्दिश्यैवोपेहि । विश्वध विश्वधारक ॥ ❋ ॥**

तृतीयः षडक्षर इति समष्ट्या द्व्यक्षरोना विराड्गायत्री (८+८+६=२२) । अथवा पूर्वार्धे प्राजापत्याऽनुष्टुप् । साम्नी वा । षोळशाक्षरा हि प्राजापत्याऽनुष्टुप् । साम्नी चानुष्टुप् । तृतीयश्चरणः याजुषी गायत्री । षळक्षरा हि याजुषी गायत्री । साम्नी त्रिष्टुप् वा समष्ट्या । द्वाविंशत्यक्षरा हि साम्नी त्रिष्टुप् ॥

आयो इत्यायतिः । नन्वाय इत्यायतिरिति कोशेषु पठ्यते । आयो इति कथम्? आह— **उपो इतिवत्** ॥

ननु उप+उ इत्यपि व्याचक्षते । तथाऽत्रापि आय+उ इति प्रतृण्णं स्यादिति भ्रमवारणायाऽह— **अतिशयार्थ ओकारः । 'ओ अतिशये'** इति प्राचीनं सूत्रम् । अकारस्य ओकारादेशो भवत्यति-

शयार्थे । तद् यथा **'परस्मादुत्तमं प्रोक्तं परो इति'** इति । यथा अह इत्याश्चर्ये । तदतिशये अहो इति । **आ यः** इति द्वे पदे इति षड्गुरुशिष्यः सायणश्च । वक्ष्यमाणस्कान्दपाद्मवचनविरुद्धमेतत् ॥

आयो इत्यत्र आयशब्देन उत्तरः काल उच्यते । यः काल आयास्यति स आयः । एष्यन् काल इत्येतत् । न केवलम् । आयास्यतीति व्युत्पत्त्या दूरस्थत्वमायशब्दार्थः । स च कालवत् देशस्यापि समानः । तेन आयतिः देशतः कालतश्च दूरत्वम् । कालतः इति भूतं भविष्यच्च । ओकारेण पूर्वोत्तरकालयोरनादित्वमनन्तत्वं चाऽह । अनादितः अनन्तकालं यद्यदस्ति तत् सर्वं मन्यत इत्यर्थः । तथा समीपस्थं दूरस्थं च मन्यत इति । दूरस्य निरवधिकत्वमोकारो वक्ति । **जानातीति** । एतेन मन ज्ञाने इत्यस्येदं रूपमिति सूचयामास ॥

समीपस्थं जानातीत्यस्य तात्पर्यमाह– **अन्येषामित्यादि** । देशतः दूरस्थत्वमात्रविवक्षायां निर्वचनान्तरमाह– **अयनेन** । अय इत्ययनं गमनमुच्यते । **'अय गतौ'** इति धातोः । अयेन प्राप्यं आयम् दूरस्थम् । अतिशयेन दूरस्थमायो इति ॥

मन्यत इति मन्युरिति पाणिनीयाः । तथा हि उणादिसूत्रम्– **'यजिमनिशुन्धिदसिजनिभ्यो युच्'** (३.२०) इति । मनुतेरपीदं समानमिति इदानीं धात्वन्तरमाह– **मनु अवबोधन इति धातोः** । मनुते इति मन्युरित्यर्थः । धातुद्वयेनापि मन्युशब्दनिर्वचनमित्यपूर्वमाविष्करणम् । अभ्यासः, मन्यवे इत्यस्याभ्यासः । तेन स्तोत्रे शोभातिशयश्च । गाने पदान्याम्रेडयन्तः स्वदन्ते हि । चतुर्थी द्वितीयार्थे । **'सुपां सुपो भवन्ति'** इति स्मरणात् । अर्थान्तरे चतुर्थी अपेक्षिता च । ब्रह्मवचने आयोमन्यं मन्युं, उपोमन्यं मन्युं मद्गतं त्वां प्रार्थये । किमिति? त्वां विना मम सृष्ट्यादिकर्मणि शक्तिर्नास्ति । अतः मयि शक्तिविशेषाधानार्थं विशेषरूपेण मयि सन्निहितो भव । हे **विश्वध** वायुधारक, समस्तजीवधारक, सकलविश्वधारक ॥

## समीपतो दूरतश्च त्वां मन्यमानाय मह्यं मन्यवे ज्ञानाय मामुपेहीति वा–

> 'समीपतो दूरतो ज्ञं त्वामुद्दिश्यैव मद्गतम् ।
> 'एहि विष्णो न मे शक्तिस्त्वदाह्वाने हि मामुप ।

'इति ब्रह्माऽस्तुवद् विष्णुं तन्नाभ्युत्थितपद्मगः' इति पाद्मे ॥

'समीपे दूरतश्चैव ध्यायन्तं त्वां सदा विभो ।
'मामेहि ज्ञानदानायेत्याह गाधिसुतो हरिम्' इति स्कान्दे ॥ * ॥

विश्वामित्रपक्षे तु मन्त्रस्यान्योऽर्थः– दूरतश्च समीपतश्च त्वां मन्यमानाय मह्यम्, ममेत्यर्थः, तव मन्यवे ज्ञानाय मामुपेहि हे चतुर्मुखधातरिति । अर्थद्वयं पाद्मवचनेन स्कान्दवचनेन च द्रढयति । मामुपेहीति त्वदाह्वाने न मे शक्तिः । अस्तुवत् । अस्तौदिति वक्तव्येऽक्षराधिक्यं भक्त्याद्यतिशय-द्योतनार्थम् ॥ * ॥

समीपे दूरतश्च त्वामेव ध्यायन्तम् ॥ * ॥

अवशिष्टः सप्तमो निगदः–

[वि॒दा मंघवन् वि॒दो३म् ॥ ७ ॥ ३ ॥]

हे भगवन्, तव महिमानं सदा वेदयवेदयेति कातर्यादाम्रेडयति । ओमिति सर्ववेदार्थत्वेनानु-सन्धत्ते ॥

'ओतमस्मिन् जगद् यस्मादोमित्युक्तो हरिः सदा । तमेतं जगदाधारं यतयः समुपासते' इति मान्यसंहितायाम् ॥ * ॥

**विश्वध** इति ओङ्कारार्थश्चेत्याह– **ओतमस्मिन्** जगदिति जगदाधार ओम् । विश्वध इत्यस्य चेदं विवरणम्– **विश्वधारक** इति । यततामपि सिद्धानां कश्चिदिति ब्रह्मा यतिः । ब्रह्मर्षित्वाय यतत इति विश्वामित्रः । विशेषत ओङ्कारोपासकाश्च तुरीयाश्रमिण इति च यतय इत्याह । द्वितीयभागपक्षे नवमी ऋक्, निगदमध्ये पठिता '**आयोमन्याय–**' इति दशमी ऋक् चेति द्वे ऋचौ सप्त निगदाश्च संहतास्तृतीया महानाम्नी ॥ * ॥

**[इन्द्रो वा एताभिर्म्महानात्मानं निरमिमीत तस्मान्महानाम्न्यः ।]**

(ऐ.ब्रा.अ.२२.ख.७)

'इन्द्रो वा एताभिर्म्महानात्मानं निरमिमीत' इत्यस्याप्युक्त एवार्त्थः । निर्म्माणं नामाऽत्मनस्तद्व्याख्यानेन ख्यापनम् । नह्यन्यथा तासां करणत्वं भवति–

'यस्तद् वेद स पितुष्पिताऽसत्' इति च श्रुतिः । 'त्रीणि पदा निहिता गुहासु यस्तद् वेद स पितुष्पिताऽसत्' । 'स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान् न विचेतदन्धः । कविर्य्यः पुत्रः स इमा चिकेत यस्ता विजानात् स पितुष्पिताऽसत्' इत्यादिश्रुतिभ्यो विज्ञानमेव हि तन्निर्माणम् । 'इन्द्र एकं सूर्य एकं जजान वेनादेकं स्वधया निष्टतक्षुः' इत्यादेर्विज्ञापनं वा ॥ ❋ ॥

ननु ब्राह्मणेऽन्यथा निर्वचनं श्रूयते । तथा हि– **'इन्द्रो वा एताभिर्महानात्मानं निरमिमीत तस्मान्महानाम्न्यः'** (ऐ.ब्रा.अ.२२.ख.७) इति । अत आह– **इन्द्रो वै** ॥

उक्त एवार्थ इति कोऽर्थः? परमात्मपर एकोऽर्थः– महानिन्द्रः परमेश्वरः एताभिरृग्भिः आत्मानं ब्रह्मादीनां निरमिमीत व्याख्यानेन ज्ञापितवान् इति । अपरः पुरन्दरपरः– बाह्येन्द्रियाभिमानिषु महान् इन्द्रः प्राप्तमहेन्द्रत्वः एताभिः परमात्मानं निरमिमीत निर्ज्ञातवान् इति । **माङ् माने** इति धातुः । ज्ञानं परिमाणं च हि अत्र मानपदार्थः । कथमयमेवार्थः? ऋचां भगवन्निर्माणकर्मत्वासम्भवादित्याह– **नह्यन्यथा** । अन्यथा कारणपरतया व्याख्याने । ज्ञानमेव निर्माणमित्यत्र श्रुतिसंवादमाह– **'यस्तद् वेद स पितुष्पिताऽसत्'** इति । सामान्यतोऽपेक्षितं मन्त्रखण्डमुद्धृत्य ततस्तद्विशेषान् कांश्चनाऽह– **त्रीणि पदा निहिता गुहासु** । यस्तद् ब्रह्म वेद स पितुर्जगज्जनकस्य ब्रह्मणः पिताऽसत् अभवदित्यर्थः । **'त्रीणि पदा निहिता गुहासु'** इति महानारायणोपनिषत् । अयं समग्रः पाठः–

**'प्र तद् वोचे अमृतं नु विद्वान् गन्धर्वो नाम निहितं गुहासु ।**
**'त्रीणि पदा निहिता गुहासु यस्तद् वेद स पितुष्पिताऽसत्' ॥**

**'सवितुः पिताऽसत्'** इति याज्ञिकाः पठन्ति । सायणोऽपि । अतः शुद्धपाठं स्वयं दर्शयन् श्रुतिखण्डं पपाठ । **'स्त्रियः सतीः–'** इत्यस्यवामीये (ऋ.१.१६४.१६), तैत्तिरीयारण्यके (१.११.४), आथर्वणे (९.९.१५) च पठ्यते । अत्र तु 'स इमा–' इति तैत्तिरीयः पाठः समुद्धृतः । एतं पाठभेदं सूचयितुमेव समग्रं मन्त्रमुज्जहार । **'इन्द्र एकम्–'** इति बाह्वृच्ये (४.५८.४), तैत्तिरीयारण्यके (१०.१०.१) वाजसनेयके (१७.५२) च पठ्यते ॥

इत्यादीत्यादिपदेन–

**'प्र तद् वोचेदमृतं नु विद्वान् गन्धर्वो नाम निहितं गुहा यत् ।**
**'त्रीणि पदा निहिता गुहाऽस्य यस्तानि वेद स पितुष्पिताऽसत्'**

(शु.य.३२.९) इति ॥

**'प्र तद् वोचेदमृतस्य विद्वान् गन्धर्वो नाम परमं गुहा यत् ।**
**'त्रीणि पदा निहिता गुहाऽस्य यस्तानि वेद स पितुष्पिताऽसत् ॥**

(अथ.सं.३२.१.२) इत्याद्या गृह्यन्ते ॥

प्राणिनां हृदयगुहासु गूढत्वेन निहितं, अमृतं तत् ततं ब्रह्म गन्धर्वो नाम विद्वान् प्र वोचे नु प्रोवाच किल । कोऽयं गन्धर्वः? गां वाचं धारयन् वर्तत इति गन्धर्वः । वेदार्थज्ञः सामान्यतः । विशेषतो मुख्यवायुः । स हि मुख्यगुरुः । ब्रह्मणः त्रीणि पदानि स्वरूपाणि स्थानानि वा गुहासु निहितानि । **'त्रिपादस्यामृतं दिवि'** इति हि श्रुतिः । **'अमृतं क्षेममभयं त्रिधाम्नोऽधायि मूर्धसु'** इति भागवते । श्वेतद्वीपानन्तासनवैकुण्ठाख्यानि च त्रीणि स्थानानि । यस्तद् वेदेति स्फुटम् ॥

तृतीयमन्त्रे **'कविर्यः पुत्रः स इमा चिकेत'** इति मूलकोशे पठ्यते । **'स ईमा चिकेत'** इति बह्वृचाः पठन्ति । **'स इमा चिकेत'** इति तैत्तिरीयाः ॥

अयमर्थः– ताः स्त्रिय आसन् । ताँउ तानेव । वक्ष्यमाणापेक्षया पुंस्त्वम् । मे मम उपदेष्टारः पुंस आहुः । एक एव भगवान् स्त्रीषु स्त्रीरूपः, पुंसु पुंरूप इत्यर्थः । य एवं भगवत उभयरूपत्वं पश्यति

स चक्षुष्मान् । य एवं न विचेतति न विजानाति सोऽन्धः । तस्य भगवतः यः कविः पुत्रः स एव इमानि एतानि द्विविधानि भगवद्रूपाणि जानाति । एवं यस्तानि भगवतः स्त्रीपुंरूपाणि वेद स जगत्पितुः द्विरूपस्य भगवतः पिता असत् भवति । अत्र ज्ञातृत्वमेव हि जनकत्वमुच्यते । भक्तैर्हि भगवतो नामकरणं क्रियते ॥

**'इन्द्र एकम्–'** इति च तैत्तिरीयारण्यके । यद्यपि बाह्वृच्येऽपि पठ्यते । अथापि अत्रत्यानि सर्वाणि मन्त्रवचनानि तैत्तिरीयारयण्यकादेवोद्धृतानि इति ज्ञायते ॥

अयं समग्रो मन्त्रः–

**त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् ।**

**इन्द्र एकं सूर्य एकं जजान वेनादेकं स्वधया निष्टतक्षुः ॥** (१०.११)

पणिभिः वेदार्थनिर्णयार्थं परस्परं व्यवहरद्भिः, वेदमन्त्रैः भगवन्तं स्तुवद्भिर्वा । **पण व्यवहारे स्तुतौ च** । पणन्ति पणायन्ति वा । तादृशैर्मुनिभिः अध्यात्मादिभेदेन ब्रह्माण्डे जाग्रदादिनियामकत्वेन पिण्डाण्डे च त्रिधा अनुसंहितं निहितं वा, त्रिषु वेदेषु त्रिधा स्थितम् । गवि वेदवाचि गुह्यमानम्, गूढतया प्रतिपाद्यमानम्, घृतं दीप्तं भगवन्तं गव्येव अन्विष्य अविन्दन् देवासः ज्ञानिनः । इन्द्र एकं ऋग्वेद-स्थितं जजान ज्ञापयामास । सूर्य एकं यजुर्वेदगतम् । वं बलम् । तस्येनो वायुः । वायुर्हि बल-देवता । वायोः सकाशादेकं सामवेदगतं स्वधया सुखेन विदितवन्तः । एते त्रयः त्रीन् वेदान् वा निष्टतक्षुः । **तक्ष तनूकरणे** । **'वेन गतौ'** इति धातोर्वा वेनो वायुः । **'अयं वै वेनः । अस्माद्धा ऊर्ध्वा अन्ये प्राणा वेनन्ति । अवाञ्चोऽन्ये । तस्माद् वेनः'** इति श्रुतेः (ऐ.ब्रा.४.३) ॥ ✻ ॥

'प्रचेतन', 'प्रचेतय', 'आयाहि पिब मत्स्व', 'क्रतुश्छन्द ऋतं बृहत्', 'सुम्न आ धेहि नो वसो' इत्युपसर्ग्गाः । अंशा अप्यंश्यपेक्षयोपसर्ग्गा भवन्ति । उपसृष्टत्वादुपसर्ग्गाः ।

'अन्तर्ग्गतं बहिर्ग्गतं च द्विधा स्यादुपसर्ज्जनम् ।

'हस्तवद्धेतिवच्चैव पदानां चोपसर्ग्गवत्' इति शब्दनिर्ण्णये ॥

**'अधत्तान्यं जठरे प्रेमरिच्यत प्रचेतन' (१), 'दाता राधः स्तुवते काम्यं वसु प्रचेतय'(२), 'अस्माकं बोधि चोदिता आ याहि पिब मत्स्व' (३), 'तं त्वा परि ष्वजामहे क्रतुश्छन्द ऋतं बृहत्' (४), 'या ते रातिददिर्वसु सुम्न आ धेहि नो वसो'(५) इत्युपसृजति ॥ ✻ ॥**

अधिगतं नामनिर्वचनम् । अधिगत ऋचामर्थः । इदानीं केषामुपसर्गाणां कुत्रोपसृजनमिति स्फुटमाह । यच्छ्रुत्वा उजेर्यपण्डिता विस्मयजलधौ न्यमाङ्क्षुः । आदौ महानाम्नीत उपसर्गानुद्धरति– प्रचेतनेत्यादीन् पञ्च । आद्यौ द्वौ चतुरक्षरौ । ततस्त्रयोऽष्टाक्षराः । उपसर्गार्थमाह– **अंशा अपि** । अंशिना मन्त्रेण उपसृष्टत्वात् सङ्गतत्वात् मन्त्रावयवाः अंशाः उपसर्गाः इत्युच्यन्ते । हस्तः देहावयवः, न शक्यः पृथक्कर्तुम् । अतोऽन्तर्गतः । हेतिरायुधम्, शक्यं पृथक्कर्तुमतो बहिर्गतम् । अथ नखायुधानां नखोऽपि हेतिरेव । स तु शक्यं पृथक्कर्तुं नखनिकृन्तनेन । अतस्तद् बहिर्गतमुपसर्जनम् । यन्न पृथक् क्रियते । कृते चांशिनः मूलार्थ एव हीयते । तदन्तर्गतं पदस्योपसर्जनम् । यथा **प्र+करणम्** । यस्य पृथक्करणेन न काऽपि क्षतिः, तद्बहिर्गतम् । यथा **वि+जयः** । अत्रोपसर्गस्य विसर्जनेऽपि नार्थहाानिः । यथा वा गायत्र्यामैकपद्यात् **'प्रचोदयात्'** इत्यन्तर्गतम् ॥

महानाम्न्यामेव **'सम्+अन्येषु ब्रवावहै'** इति बहिर्गतम् । उपसृष्टानां शक्त्याधिक्यद्योतनायाक्षराधिक्यम्– **'बहिर्गतं च'** इति । तेनैकाक्षराधिका भुरिगनुष्टुप् । 'बहिर्गं च' इत्येव प्रचलितः पाठः । हेतिः हस्तस्य शक्तिमादधाति । मन्त्रान्तरे उपसृष्टानि पदानि मन्त्रान्तरस्य शक्तिमादधति ॥

विदित उपसर्गार्थः । सम्प्रति उपसर्जनप्रकारं दर्शयति– **अधत्तान्यम्** । प्रथमं छन्दसां विहरणेनानुष्टस्वसम्पादनम् । तदुपरिष्टाद् भवति । ततोऽतिच्छन्दसां विहरणम् । पञ्चपादाः षोळशिक्रतौ त इमेऽतिच्छन्दोबद्धाः शस्त्रमन्त्राः । यत्र महानाम्नीनामुपसर्गा उपसृज्यन्ते–

**त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्म-**
**स्तृपत् सोममपिबत् विष्णुना सुतं यथाऽवशत् ।**
**स ईं ममाद महि कर्म कर्तवे महामुरुं**
**सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दुः ॥ १ ॥**

**अथ त्विषीमाँअभ्योजसा क्रिविं युधाऽभव-**
**दा रोदसी अपृणदस्य मज्मना प्र वावृधे ।**
**अधत्तान्यं जठरे प्रेमरिच्यत**
**सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दुः ॥ २ ॥**

**साकं जातः क्रतुना साकमोजसा ववक्षिथ**
**साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणिः ।**
**दाता राधः स्तुवते काम्यं वसु**
**सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दुः ॥ ३ ॥** (ऋ.सं.२.२२.१–३)

अत्र प्रथममन्त्रे प्रथमपादे षोळशाक्षराणि, द्वितीये तृतीये च तथा । चतुर्थपञ्चमयोरष्टावष्टावक्षराणि । संहत्य चतुःषष्टिरक्षराणीत्यष्टिश्छन्दः । स्फुटं षोळशित्वमिति न तत्र किमप्युपसर्जनीयम् ॥

द्वितीयमन्त्रे प्रथमद्वितीयपादौ षोळशाक्षरौ । चतुर्थपञ्चमावष्टाक्षराविति स्फुटं षोळशित्वम् । तृतीयः पादो द्वादशाक्षर इति तत्र षोळशित्वाय **प्रचेतन** इति महानाम्नीतश्चत्वार्यक्षराणि उपसृज्यन्त इति सिद्धं षोळशित्वं द्वितीयमन्त्रस्यापि ॥

तृतीयमन्त्रेऽपि तथा । इदमतिशकरी नाम छन्दः । संहत्य षष्टिरक्षराणि । अतोऽत्रापि षोळशित्वाय द्वादशाक्षरे तृतीयपादे **प्रचोदय** इति महानाम्नीतश्चत्वार्यक्षराणि उपसृज्यन्ते ॥

तथाचायमुपसृष्टः शस्त्रपाठः–

**त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मः ।**
**तृपत् सोममपिबत् विष्णुना सुतं यथावशो३म् ॥ १ ॥**

**स ईं ममाद महि कर्म कर्तवे महामुरुम् ।**
**सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दो३म् ॥ २ ॥**

**अध त्विषीमाँअभ्योजसा क्रिविं युधाऽभवत् ।**
**आ रोदसी अपृणदस्य मज्मना प्रवावृधो३म् ॥ ३ ॥**

**अधत्तान्यं जठरे प्रेमरिच्यत <u>प्रचेतन</u> ।**
**सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दो३म् ॥ ४ ॥**

साकं जातः क्रतुना साकमोजसा ववक्षिथ ।
साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणो३म् ॥ ५ ॥

दाता राधः सुवते काम्यं वसु प्रचेतय ।
सैनं सश्चत् देवो देवं सत्यमिन्द्रं सत्य इन्दो३म् ॥ ६ ॥

एवमतिछन्दसामनुष्टुप्प्रकारेण षडनुष्टुभः सम्पद्यन्ते ॥

मन्त्रान्ते टेः स्थाने प्रणवादेशः– **'प्रणवष्टेः'** (अ.सू.८.२.८९) इति । तथाहि वामनः– **यज्ञकर्मणि टेः प्रणव आदेशो भवति । क एष प्रणवो नाम? पादस्य वाऽर्द्धर्चस्य वाऽन्त्यमक्षरमुपसङ्गृह्य तदाद्यक्षरशेषस्य स्थाने त्रिमात्रमोकारमोङ्कारं वा विदधति । तं प्रणव इत्याचक्षते'** इति । वैयाकरणानां सङ्केतोऽयम् । स च प्लवते । स यथा– **'सर्वप्रहरणायुधो३ नमः'** इति ।

अयं मन्त्रार्थः– त्रिकद्रुकेषु, त्रिष्वपि सवनेषु। सोमपानेन आनन्दस्य द्रवणात् ते त्रिकद्रुका उच्यन्ते । सुतं सोमं तृपत् तृप्तः सन् इन्द्रः विष्णुना सह अपिबत् । यथावशत्, 'यथा अवशत्' इति प्रतृण्णम् । यथा अवशत् अवट् ऐच्छत् । यथावशं यथेष्टम् । **'यथावशम्'** इत्येव सामवेदे पाठः । कीदृशं सोमम्? यवाशिरं यवसक्तुमिश्रम् । कीदृश इन्द्रः? महिषः देवेषु महान् । तुविशुष्मः महाबल इति याज्ञिकाः ॥

अथाध्यात्मम्–

कं भगवन्तं प्रति द्रुतानि तत एवाऽनन्देन द्रुतानि त्रीणि करणानि त्रिकद्रुकाणि वाक्कायमनांसि । काये भगवन्तं प्रणमति, वाचि प्रणुवति, मनसि चिन्तयति सति, तृपत् तृप्तः प्रसन्नः, महिषः महितषड्गुणः, तुविशुष्मः पूर्णशक्तिः 'तुवि पुर–' इति नामानुक्रमणी । भगवानिन्द्रान्तर्यामी नारायणः । इन्द्रदेवत्यो ह्ययं मन्त्र इत्यनुक्रमणिका । यवाशिरम्, यु मिश्रणे, यवेन भक्त्यादिभिर्मिश्रितेन मनसा आशिरं भगवत्येव संलग्नम्, स्वस्य सुतं पुत्रं सोमं पवमानम्, रक्षायै वासुदेवादभिव्यक्तेन स्वस्यैव विष्णुरूपेण सह यथेष्टमपिबत् । प्रीत्या स्वीकार एव हि पानं नाम ॥ १ ॥

स ईं पवमान एव महान्तमुरुं सर्वोत्तमं नारायणं लोकरक्षाख्यं महत् कर्म कर्तुं वरिवस्यया मुमोद मोदयामास । सोमरसे तु स्फुटोऽर्थः । भक्तिरसेऽपि । स भगवान् मोदहेतुः, सत्यः सतां हितः,

देवः द्योतमानः, इन्दुः इष्टदानशीलः पवमानः । **'इन्द्रायेन्दो परिस्रव'** इति श्रुतेः । सत्यं साधुगुणं देवं क्रीडादिगुणकम्, एनमिन्द्रं परमेश्वरं नारायणं प्रति तत्समीपं नः सश्चत् प्रापयतु । **षस्च गतौ** । **'षस्ज गतौ'** इति पाणिनीयाः ॥ २ ॥

अथ सोमपानानन्तरम्, पालनकर्मणि वायोः स्वसहायत्वेन स्वीकारानन्तरम् । त्विषीमान्, **त्विष दीप्तौ** । 'त्विषा' इति क्षीरस्वामी । त्वेषत इति त्विषिर्दीप्तिः । दैर्घ्यमाधिक्यार्थे । त्विषीमान् अतितमां दीप्तः । ओजसा सहजेन पराभिभवनसामर्थ्येन क्रिविम्, **'कृवि हिंसायाम्'**, कृणोतीति कृविम्, हिंसकं तामसं जनम् । कृविरेव क्रिविः । क्रिविरिति कूप उच्यते । कूप इवागाधसामर्थ्यं इति द्योतयितुं क्रीकरणम् । कृविमित्येव सामवेदे पाठः । तं सज्जनहिंसकं दुर्जनं अन्तःशत्रुं रागद्वेषादिकं वा भगवानेव योधयित्वा अभि अभवत् पराजिग्ये । अस्य अकारवाच्यस्य स्वस्य मज्मना स्वसामर्थ्येन सूर्यादिषु स्थित्वा द्यावापृथिवी आ अपृणत् अपृणात् सम्यक् पूरयामास प्रकाशयामास । यतोऽयं सर्वैः गुणैः प्र वावृधे नित्यप्रवृद्धः । **'पौंस्यं मज्म स्वधा नृम्णम्'** इति नामानुक्रमणी । मजन्त्यनेनेति मज्म । **मज शब्दे** । स्तुवन्तीत्यर्थः ॥ ३ ॥

हे प्रकृष्टचेतन परमात्मन्, स भवान् अन्यं अन्यत्वज्ञानिनं भक्तजनम् । **'प्रोक्ताऽन्येनैव सुज्ञानाय'** इतिवत् । प्रेम्णा जठरे निधाय अधत्त । **प्र+ईम्+अरिच्यत** इति प्रतृण्णम् । अतः सः प्रकर्षेण अरिच्यत ईम् सर्वातिरिक्त एवाभवत् । अन्यत्समानम् ॥ ४ ॥

क्रतुना ज्ञानेन कर्मणा, ओजसा बलेन साकमेव जातोऽभिव्यक्तः । अवताररूपेष्वपि पूर्णज्ञानादिः । **'स्वाभाविकी ज्ञानबलक्रिया च'** इत्यादेः । तादृशस्त्वं हे प्रचेतन इति पूर्वमन्त्रादनुवर्तते । ववक्षिथ विवक्षथ सर्वजगन्निर्वोढुमिच्छसि । स्वातन्त्र्ये वर्णव्यत्ययः । बहुभी रूपैर्निर्वाहयसीति बहुवचनम् । वीर्यादिभिर्गुणैः साकं वृद्धः नित्यपूर्णः । मृधः हिंसकान् । बाह्यानान्तरांश्च । **मृधु हिंसायाम्** । अत एव मृधं समर इत्याचक्षते । ससहिः अभिभविता । सांहितं दैर्घ्यमतिशयमाह । विचर्षणिः सर्वद्रष्टा ॥ ५ ॥

स्तुवते जनाय राधः सर्वार्थसाधकं काम्यमिष्टं वसु दाता । स त्वं काम्यं किमिति प्रचेतय बोधय । सैनमिति पुनः परोक्षेण स्तुतिः ॥ ६ ॥ ✻ ॥

चतुःषष्ट्यक्षरा अष्टिः षष्ट्यक्षरा अतिशक्करी च उपसृष्टे आस्ताम् । अथ षट्पञ्चाशदक्षरायाः शक्कर्याः महानाम्नीनां पादसंयोजनेन षोळशित्वं दर्शयति– **‘अस्माकं बोधि चोदिता’** ।

तथाहि बाह्वृच्ये दशममण्डले १३३तमे सूक्ते आद्यास्तिस्र ऋचः शक्करीबद्धाः पठ्यन्ते–

**प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत ।**
**अभीके चिदुलोककृत् सङ्गे समत्सु वृत्रहा– अस्माकं बोधि चोदिता ।**
**नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ १ ॥**

**त्वं सिन्धूँरवासृजोऽधराचो अहन्नहिम् ।**
**अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यं– तं त्वा परि ष्वजामहे ।**
**नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ २ ॥**

**वि षु विश्वा अरातयोऽर्यो नशन्त नो धियः ।**
**अस्तासि शत्रवे वधं यो न इन्द्र जिघांसति– या ते रातिर्ददिर्वसु ।**
**नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ ३ ॥**

अष्टभिरक्षरैः सप्तपादा किल शक्करी । (८x७=५६) ॥

द्वावनुष्टुभौ पूर्वार्द्धमिति स्वत एव षोळशि । तृतीयचतुर्थौ च पादौ संहत्य षोळशित्वं सम्पादयतः । षष्ठसप्तमौ च । मध्ये पञ्चमः पादोऽवशिष्यते । तस्य षोळशित्वसम्पादनाय महानाम्न्यास्त्रयोऽष्टाक्षराः पादा उपसृज्यन्त इत्यर्थः ॥

तेन अष्टयस्तिस्रो भवन्ति । तथाहि शस्त्रे शंसनक्रमः–

**प्रो ष्वस्मै पुरो रथमिन्द्राय शूषमर्चत ।**
**अभीके चिदुलोककृत् सङ्गे समत्सु वृत्रहो३म् ॥ १ ॥**

**अस्माकं बोधि चोदिता आ याहि पिब मत्स्व ।**
**नभन्तामन्यकेषां ज्याका अधि धन्वसो३म् ॥ २ ॥**

त्वं सिन्धूँरवासृजोऽधराचो अहन्नहिम् ।
अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यो३म् ॥ ३ ॥

तं त्वा परिष्वजामहे क्रतुश्छन्द ऋतं बृहत् ।
नभन्तामन्यकेषां ज्याका अधि धन्वसो३म् ॥ ४ ॥

वि षु विश्वा अरातयोऽर्यो नशन्त नो धियः ।
अस्तासि शत्रवे वधं यो न इन्द्र जिघांसतो३म् ॥ ५ ॥

या ते रातिर्ददिर्वसु सुम्न आधेहि नो वसो ।
नभन्तामन्यकेषां ज्याका अधि धन्वसो३म् ॥ ६ ॥

एवमनुष्टुप्कारेण तिस्रः शक्वर्यः षडनुष्टुभः समपद्यन्त ।

अथ मन्त्रार्थः– इन्द्रदेवत्यं सूक्तम् । इन्द्रान्तर्गतो नारायण इत्येतत् । **प्रो ष्वस्मै** । शूषमिति शत्रुशोषकं बलमुच्यते । **शुष शोषणे** । दैर्घ्यमवधारणे । प्रो प्रकृष्टतमम् । **ओ अतिशये** । रथं वायुं पुरस्कृत्य स्थितस्य अस्य ध्याने परिदृश्यमानस्य इन्द्रस्य अस्मदज्ञानशोषकं बलं प्रो प्रकर्षेण सु अर्चत । **'वरदो वायुवाहनः'** इति भारते । हे हस्तचरणमनोवागादयः मम प्राणाः इति स्वगतं सम्बोधनम् । सहसाधकान् प्रति वेदं वचनम् । देवासुराणां समत्सु सङ्ग्रामेषु । समानमत्तीति समत् सङ्ग्रामः । अभीके निर्भये सङ्गे चित् देवानामसुराणां समागमेऽपि निश्चिन्तं लोकरक्षाकृत् । शत्रुलोककृन्तनो वा । **'ब्रह्म ह देवेभ्यो विजिग्ये'** इति श्रुतिः । अस्माकमपि शत्रोर्वृत्रस्याज्ञानस्य हन्ता ॥ १ ॥

चोदिता सर्वेषामन्तःस्थित्वा सर्वप्रेरकः इत्यस्माभिः बोधि अबोधि । अवगत इत्यर्थः । **बुध अवगमने** । अस्मत्कृतां परिचर्यां बोधि निबोधेति वा । तादृशस्त्वमायाहि मम मनसि सन्निधेहि । मम भक्तिरसं पिब । तेन मत्स्व हृष्टः प्रसन्नो भव । अन्यकेषां कुत्सितानामन्येषां ज्ञानमार्गशत्रूणां असुराणां धन्वसु अधिरोपिता ज्याकाः । सर्वायुधोपलक्षणम् । नभन्तां नश्यन्तु । **णभ हिंसायाम्** ॥ २ ॥

त्वं अधराचः अधःस्रवणशीलान् स्यन्दनात् सिन्धून् नद्यादीनां जलप्रवाहान् अवासृजः । अथच अधराचः सिन्धून् अधोमुखं स्यन्दमानान् तमोयोग्यानपि त्वमेवावासृजः । यः अतिहेयत्वात् सतामहितत्वात् आहन्तीति वा अहिं असुरवर्गं अहन् अवधीः । अहिं वृत्रनामकमसुरं वा । अध्यात्मं चाहिमज्ञानम् । तेनाशत्रुरिन्द्र जज्ञिषे अजायथाः । वार्यं वरणीयं सज्जनविश्वं पुष्यसि पोषयसि ॥ ३ ॥

**क्रतुश्छन्द ऋतं बृहत्** इति चतूरूपं तं त्वां परिष्वजामहे आश्रयामहे । नभन्तामित्युक्तार्थम् ॥ ॥ ४ ॥

**वि षु विश्वा** । अस्माकं धियः अन्तःकरणस्य अर्यः स्वामी इन्द्र इति वर्तते । अतः अस्माकं विश्वा विश्वे अरातयः अविद्यारागद्वेषादयः आन्तराः अरातयः, सु सामस्त्येन, वि नशान्त विनश्यन्तु । अथ बाह्यशत्रवः । हे इन्द्र, यो नः जिघांसति हिंसितुमिच्छति तस्मै शत्रवे वधमायुधं अस्तासि क्षेप्तासि । वध्यते हन्यतेऽनेनेति वधः । **'वधो वज्रः स्वधितिः'** इत्यभिधानम् ॥ ५ ॥

**या ते** । सर्वत्र वसतीति वसुः । वरसुखत्वाद् वा । वसु ददिः हे वसो भगवन्, ज्ञानवित्ताख्यवसुदात्री या ते रतिः दातृत्वम्, तया नः अस्मानपि सुम्ने परमसुखे आधेहि । सु इत्याम्नायत इति सुम्नं सुखम् । नभन्तामित्युक्तार्थम् ॥ ६ ॥ ✻ ॥



**[अयं वै लोकः प्रथमा महानाम्न्यन्तरिक्षलोको द्वितीयाऽसौ लोकस्तृतीया सर्वेभ्यो वा एष लोकेभ्यः सन्निर्म्मितो यत् षोळशी तद् यन्महानाम्नीनामुपसर्ग्गानुपसृजति सर्वेभ्य एवैनं तल्लोकेभ्यः सन्निर्म्मिमीते सर्वेभ्यो लोकेभ्यः सन्निर्म्मितेन षोळशिना राध्नोति य एवं वेद ।]** (ऐ.ब्रा.अ.१६.खं.४.)

अशेषमहानाम्न्यर्त्थस्मरणपरिज्ञानपूर्वकमुपसर्ग्गसंयोजनं कर्त्तव्यमित्येतदर्त्थत्वेन महानाम्नीप्रशंसा क्रियते । अन्यथा तावन्मात्रप्रशंसामृतेऽशेषमहानाम्नीप्रशंसाया व्यर्त्थत्वात् ॥

त्र्यृचविभागेन; 'विदा मघवन्–', 'तमूतये–', 'नूनम्–' इति वा तिस्रो महानाम्न्यः–

'प्रथमा या महानाम्नी तद्वाच्यः पार्त्थिवो हरिः ।
'द्वितीयाया आन्तरिक्ष्यस्तृतीयाया द्युगः प्रभुः' इत्यृक्संहितायाम् ॥

'त्र्यृचास्तिस्रो महानाम्न्यः पञ्चर्च्चा प्रथमाऽपरा ।
'त्र्यृचा द्व्यृचा च निगदैस्तार्त्तीया सप्तभिर्य्युता ।
'इति त्रेधा विभागः स्याज्जपद्ध्यानादिकर्म्मसु' इति च ॥

'त्रिलोकगेन हरिणा निर्म्मितः षोळशी क्रतुः ।
'एवं ज्ञात्वा हरिं तं च कर्म्म कुर्वन् न जायते' इति प्रवृत्ते ॥

'एवा ह्येवैवा हि' इत्यस्यार्त्थोऽप्युक्तावधारणरूपत्वात् पूर्वोक्तार्त्थपरिज्ञानं विना न स्मर्त्तुं शक्यते । एवं निर्म्मितेन षोळशिनर्द्धो भवत्येवंवित् ॥ ✻ ॥

अयं खण्डभागः एवं महता विस्तरेण व्याख्यातः । ननु कुत एतावान् संरम्भः? ऋच उद्धृत्य कस्य मन्त्रभागस्य कुत्र उपसर्जनमित्येतावदेव पर्याप्तम् । नेत्याह– अशेषेत्यादि ॥

अशेषाः याः महानाम्न्यः तासामशेषा येऽर्थाः, तेषां स्मरणम्, स्मृ आध्याने, निरन्तरचिन्तनम् । तेन यत् परिज्ञानम्, परिपक्वं ज्ञानम् । नह्यपक्वज्ञानिना संसृष्टा मन्त्राः फलदा भवन्ति । भगवति

परिणतं ज्ञानमित्येतत् । तत् पूर्वं यस्य । एतेन तावत्पर्यन्तमुजेर्यपण्डितैर्यज्ञेषु विनाऽर्थज्ञानं कृतमुपसर्जनं व्यर्थप्रायमिति तान् बोधयामास । तेन विचलितः सर्वोऽपि तत्रत्यः पण्डितपूगः– **'अर्थज्ञानविधुराणां कर्मकाण्डिनां का गतिः? अहो मुषिता वयम् । वञ्चिता वयम्'** इति परिततताप ॥

तदर्थमुत्तरवाक्येन **'अयं वै लोकः–'** इत्यादिना अशेषमहानाम्नीनां प्रशंसा क्रियते । प्रशंसा हि श्रद्धां जनयति । श्रद्धा फलं प्रसूते ॥

महानाम्नीनां द्विविधं विभागक्रममाह– **त्र्यृचविभागेन** इत्येकः । आद्यास्तिस्र ऋचः (१–३) प्रथमा महानाम्नी । द्वितीयास्तिस्रः (४–६) द्वितीया महानाम्नी । तृतीयास्तिस्रः (७–९) तृतीया महानाम्नी इति **त्र्यृचविभागेन तिस्रो महानाम्न्यः** । अथ पक्षान्तरमाह– **विदा मघवन्** इत्यादि । **'विदा मघवन्–'** इत्याद्याः पञ्च ऋचः (१–५) प्रथमा महानाम्नी । **'तमूतये–'** इत्यादित्रिकं (६–८) द्वितीया महानाम्नी । अवशिष्टं सनिगदं सर्वं तृतीया महानाम्नीत्यर्थः ॥

अथ **'अयं वै लोकः'** इत्यादि ब्राह्मणवाक्यस्य प्रमाणत एवार्थं निर्वर्णयति– **प्रथमा या महानाम्नी** । मन्त्राणां लोकैरभेदचिन्तनं करणीयमित्याद्यपव्याख्याननिरासार्थं प्रमाणेनैवार्थवर्णनम् । यदाह सायणः– **'प्रथमत्वादिसाम्येन लोकत्रयरूपत्वमृचां द्रष्टव्यम्'** इति । पृथिवीगतं भगवद्रूपम्, अयं लोको वै तन्नामकं हि । प्रजानां प्रत्यक्षत्वादयम् । अयमित्यङ्गुलिनिर्देशः । ज्ञानरूपत्वाल्लोकः । अत्रायन्ते प्रजा इति वा । **अय गतौ** । अय्यते ज्ञानिभिरिति वा । तद्वाचकत्वान्महानाम्नी च अयं लोक इत्युच्यते । अथ च सप्तसु प्रथमा, प्रथमायां महानाम्न्यां अयंनामा लोकनामा भगवानुच्यते वै । वायिति शास्त्रप्रसिद्धा ज्ञानिलोकप्रसिद्धा च । आन्तरिक्ष्यः अन्तरिक्षगतो हरिः द्वितीयाया वाच्यः । द्युलोकगो हरिः तृतीयायाः । एवं चिन्तनेनैव पापानि हरति नान्यथेति हरिः । यद्यपि सर्वलोकस्य प्रभुः । तथाऽपि रूपविशेषस्य स्मर्तव्यत्वादेवमुच्यत इत्यर्थः । तथाच आन्तरिक्ष्यो भगवान् अन्तरिक्षो लोक इत्युच्यते । अन्तर्हृदि ईक्ष्यत इति अन्तरिक्षनामा अन्तरिक्षगतो हरिः द्वितीयायां महानाम्न्यामुच्यते । विप्रकृष्टत्वादसौ प्राणे स्थितत्वाच्च द्युलोकगतो भगवान् असौलोकनामा च उच्यते ॥

भगवत्परतायामयंलोकः असौलोक इत्येकं वा पदम् ॥

ननु महानाम्नीषु कोऽयं विभागः प्रथमा द्वितीयेति । तावत्पर्यन्तं याज्ञिकैः स्फुटमविदितं विभागमपि द्विविधं प्रमाणत एवाऽह, मा इदमपि पण्डितम्मन्याः आक्षिप्सतेति– **त्र्यृचास्तिस्रो महानाम्न्यः** । अर्वाचीनाः '**तृचास्तिस्रः**' इति पाठं पठन्ति । त्र्यृचा इत्येव प्राचीनकोशपाठः । तृच इति च्छन्दसि रूपम् । लोके त्र्यृच इत्येव । '**अथापि द्विवर्णलोपस्तृच इति**' इति यास्कवचनं च छन्दो-विषयम् । तथाहि वार्त्तिकम्– '**ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि**' इति । ऋचि परे त्रेः सम्प्रसारणम् । ऋक्पदस्याऽदेः ऋवर्णस्य लोपश्च छन्दसि भवतीत्यर्थः । पतञ्जलिरप्याह महाभाष्ये– '**ऋचि त्रेः सम्प्रसारणं वक्तव्यम् । उत्तरपदादिलोपश्च छन्दसि वक्तव्यः । छन्दसीति किम्? त्र्यृचानि**' इति । तस्मात् '**त्र्यृचास्तिस्रो महानाम्न्यः**' इत्येव ऋक्संहितापाठः ॥

अयं प्रमाणवचनार्थः–

तिसृषु त्र्यृचासु प्रथमा ऋचस्तिस्रः प्रथमा महानाम्नी । द्वितीयास्तिस्रः (४-६) द्वितीया महानाम्नी । तृतीयाः (७-९) तृतीया महानाम्नीत्येको विभागः ॥

अस्मिन् पक्षे '**एवा ह्येवैवा हि**' इत्यादीनां निगदत्वेन ऋक्त्वाभावात् न साक्षान्महानाम्नीष्वन्तर्भाव इत्यर्थः । अत एव केचिदृषयः पक्षान्तरमूचुरित्याह– **पञ्चर्चा प्रथमाऽपरेति** । इयमपरा विधा–

यत्र प्रथमा महानाम्नी पञ्चर्चा (१-५) '**विदा मघवन्–**' इत्यारभ्य, '**यो मंहिष्ठो मघोनाम्–**' इत्यृ-गन्ता । परा इति च च्छेदः । पञ्चर्चायाः परा त्र्यृचा द्वितीया महानाम्नी ।(६-८) अथ तार्तीया, तृतीयैव तार्तीया । स्वार्थेऽण् । निगदैः सप्तभिः युता, '**नूनं तन्नव्यम्–**' (९) इति, 'आयो-मन्याय–' (१०) इति च द्वे ऋचौ संहत्य तृतीया विधा इति द्विविधः त्रेधा विभागः स्यात् । अच्छन्दोबद्धं वाक्यं पदं वा निगदः । '**निगदानां यजुष्ट्वेऽपि नितरां गद्यन्त इति योगेन ब्राह्मण-परिव्राजकसञ्ज्ञावत् सामान्यविशेष्यभावेनोपपत्तेः**' (दिनकरभट्टीयम्,२.१.३८) इति मीमांसकाः । विभागकरणस्योपयोगमाह– **जपध्यानादिकर्मसु** । आदिना अध्यापनादिकर्मसु । एवमादिकर्मसु इति द्वितीयपक्षोक्तः **त्रेधा विभागः स्यात्** । एतेन प्रथमस्त्र्यृचविभागः शस्त्रशंसने ऋचामेवोपसर्जनपक्षे

प्रवृत्त इत्युक्तं भवति । याज्यामन्त्रे तु निगदैः पादपूरणमिति तत्र पुनर्द्वितीयस्त्रेधा विभागः । एवमादिकर्मसु त्रिलोकगतो भगवान् चिन्तनीयः । तदर्थमेव त्रेधा विभागकथनमित्यर्थः । **इति च** ऋक्संहितायाम् ॥

तथा '**भूरिति वा अयं लोकः । भुव इत्यन्तरिक्षम् । सुवरित्यसौ लोकः**' इति श्रुतेः व्याहृति-प्रतिपाद्यो भगवान् महानाम्नीभागत्रयेण प्रतिपाद्य इति ज्ञात्वा, अत एव प्रणवस्याक्षरत्रयेण प्रतिपाद्यः, वेदत्रयेण प्रतिपाद्यश्च भगवान् महानाम्नीभागत्रयेण प्रतिपाद्यत इति च ज्ञात्वा पठनीय इत्यासां भाग-कथनम् । एवमादयो बहवोऽर्था अत्रानुसन्धेयाः । ग्रन्थविस्तरभयादुपरम्यते ॥

**सर्वेभ्यो वा एष लोकेभ्यः सन्निर्मितो यत् षोडशी** इति ब्राह्मणखण्डस्यार्थमाह प्रवृत्तवचनेन– **त्रिलोकगेन हरिणा** ॥

हरतीति हरिः । **सर्वेभ्यः यत् यः षोळशी क्रतुः एषः सर्वेभ्यः गुणपूर्णेभ्यः लोकेभ्यः** लोक-नामभ्यः त्रिलोकगतहरिरूपेभ्यः । **सम्** समीचीनतया **निर्मितो वै** । वायिति ऋषिसम्प्रदायसिद्धमेत-दित्याह ॥

तृतीयार्थे पञ्चमी । यदद्यापि कुर्वन्ति सः लोकेभ्यः त्रिलोकगतभगवत्प्रसादादेवेति च । तत् तस्मात् यत् महानाम्नीनामुपसर्गानुपसृजति यः कश्चित् होता, तदपि त्रिलोकगतभगवद्रूपप्रसादादेव सम्यक् निर्मिमीते । एवं भगवत्प्रसादादेव संन्निर्मितेन सम्यग् ज्ञानपूर्वमनुष्ठितेन षोळशिक्रतुना राध्नोति संसिद्धो भवति । समित्युपसर्गेण सूचितं स्फुटमवधारयति श्रुतिः– **य एवं वेद** इति । एतदेवोक्तं प्रमाणवचने– **एवं ज्ञात्वा** । षोळशी क्रतुः त्रिलोकगेन हरिणा तदनुग्रहेण निष्पन्न इति ज्ञात्वा तं च संसारहरणात् हरिं ज्ञात्वा, '**सर्वेभ्यः**' इत्युक्तेः गुणपूर्णं च ज्ञात्वा । चकारः उत्तरत्रापि सम्बध्यते– **कर्म कुर्वंश्च** कुर्वन्नपीति । यद्यपि कर्मणा बध्यते जन्तुः । अथापि हरिं ज्ञात्वा कर्म कुर्वन् न बध्यते । किन्तु मुच्यत इति । आदौ परिज्ञानम्, ज्ञातस्य स्मरणम् । नह्यज्ञातं स्मर्यते । नह्यज्ञातमवधार्यते । एवा हि पूर्वोक्तवदेव हि इति किलार्थः । तेनापि संयोजनस्य समग्रज्ञानपूर्वकत्वं ज्ञायते ॥

**सर्वेभ्यो लोकेभ्यः सन्निर्मितेन षोळशिना राध्नोति, य एवं वेद** इत्येतत् स्वपदेन व्याख्याति– **एवमिति** । एवं भगवज्ज्ञानपूर्वकम्, षोळशिक्रतोः भगवन्निर्मितत्वज्ञानपूर्वकम्, निर्मितेन षोळशिना राध्नोति न जायते इति प्रमाणवचने व्याख्यातम् । तदर्थमाह– **ऋद्धो भवति** । जननमरणराहित्येन मुक्तो भवतीत्यर्थः । न केवलं कर्मकृत्, किन्तु एवंवित् । एवं वित्त्वा कर्मकृदित्यर्थः ॥ ✻ ॥

**॥ इति महानाम्नीखण्डार्थनिर्ण्णयः ॥**

—०—

**[प्रप्र वस्त्रिष्टुभमिषमर्च्चत प्रार्च्चत यो व्यतीँस्फाणयदिति प्रज्ञाता अनुष्टुभः शंसति ।]** (ऐ.ब्रा.अ.१६.खं.४.)

तत्र प्रथमाऽनुष्टुप्–

**[प्रप्रं वस्त्रिष्टुभमिषं मन्दद्वीरायेन्दवे ।**
**धिया वो मेधसातये पुरन्ध्याऽऽ विवासति ॥]** (ऋ.८.६९.१; साम.३६०)

प्रप्र वः । हे ऋत्विजः, प्रजा वा, वस्त्रिष्टुभमिषं त्रिष्टुभाख्यमन्नमिन्द्रः परमेश्वरः सोमायाऽविवासति । पुरन्ध्या धिया अशेषप्राणिदेहाश्रयया स्वबुद्ध्या, प्रप्र, प्रकर्षेणप्रकर्षेण, अतितरां शास्यमानत्रिष्टुप् प्रीतिं करोति सोमपानार्त्थमित्यर्त्थः । मन्दद्वीराय, तस्य वीरस्य परमेश्वरस्य मदं करोतीति मन्दद्वीरः सोमः । नत्वात्मप्रयोजनाय प्रीतिं करोति, किन्तर्हि? वो मेधसातये वो यज्ञसिद्ध्यर्त्थम् । व इति गुरुत्वादीश्वरं प्रत्येव वा बहुवचनम् । तदा वः अन्नं त्रिष्टुभं वो मेधसातये भवद्दैवत्ययज्ञसिद्ध्यर्त्थं भवान् प्रप्राऽऽविवासतीत्यर्त्थः ॥ ✻ ॥

अतिछन्दसां शंसनं सम्पन्नम् । अत उत्तरान् शंसनमन्त्रानाह ब्राह्मणम्– **प्रप्र वः** । **'प्रप्र वः–'** इत्याद्यस्तिस्र ऋचः (ऋ.सं.८.६९.१–३) **'अर्चत प्रार्चत–'** इति तिस्रः (८.६९.८–१०) **'यो व्यतीन्–'** इति तिस्रः (८.६९.१३-१५) । अक्षराणां न्यूनाधिकभावेऽपि शास्त्रविद्भिः अनुष्टुभ इत्येव प्रख्याताः । तेन षोळशित्वाय नात्रानुष्टुप्करणप्रयास इत्यर्थः । ज्ञात्वा पूर्वं शंसनीयमिति ब्राह्मणोक्तानां नवानामृचामर्थमाह भगवत्पादः– **प्रप्र वः** । तदिदं व्याकरिष्यमाणस्य खण्डस्य ऋङ्मन्त्रस्य च प्रतीकग्रहणम् । अथ **प्रप्र व** इति ब्राह्मणवाक्यम्, तत्रोदितानां **प्रप्र व** इत्यादीनां नवानामनुष्टुभां च व्याख्यानं करिष्याम इति । तत्रेयमृक् प्रथमा– **प्रप्र वस्त्रिष्टुभमिषम्** । इन्द्रदेवत्यो मन्त्रः । तस्मादिन्द्रः परमेश्वर इत्याह । इन्द्रगत इन्द्रनामा परमेश्वरः इत्यर्थः । **'इन्द्रः स परमैश्वर्यात्'** इति ह्युक्तम् । वः युष्माकमिति कान् सम्बोध्योच्यते इति शङ्कायामाह– हे **ऋत्विजः** । होता सहर्त्विजः प्रत्याहेत्यर्थः । यत्र यागस्य न प्रसङ्गः तत्र सात्विक्यः प्रजाः सम्बोध्यन्त इत्याह– **प्रजा वा** । वाशब्दः व्यवस्थितविकल्पे । आङ्पूर्वस्य **वा गतौ** इत्यस्य सनि रूपमाविवासति । आवातुं आगन्तुमिच्छतीति । कथमागन्तुमिच्छति? **प्रप्र** । वीप्सात्वादेकं पदमित्याह– **प्रकर्षेणप्रकर्षेण** । तस्यापि व्याख्यानम्– **अतितरामिति** । अतीति प्रथमप्रकर्षार्थः । तरप् द्वितीयप्रकर्षार्थः । धात्वर्थे गतौ प्रकर्षस्यान्वयः । गतौ क्षिप्रत्वं नाम प्रकर्षः । **प्रप्र** अतिक्षिप्रमित्यर्थः । अथवा गतौ प्रीतिपूर्वकत्वं प्रकर्षः । प्रीत्युत्कर्षः वीप्सार्थः । वीप्सायाः भिन्नपदत्वं वदन्तः शोच्याः । शचीदेवताकत्वात् इन्द्रस्य तदन्तर्गतस्य भगवतश्च प्रियं त्रिष्टुप्छन्दः । शस्यमाना च त्रिष्टुप् भगवतः आस्वाद्यत्वादन्नम् । क्षिप्रतरमायातुमिच्छति, किमर्थम्? **इन्दवे सोमपानार्थम्** । भक्तिद्रुतमनसः पालनार्थं वा । त्रिष्टुभं प्रति आविवासति । किमर्थम्? न बुभुक्षया, नापि पिपासया । किन्तु **वो मेधसातये** । तदपि नान्यप्रेरणया । किन्तु **धिया** स्वतन्त्रया स्वबुद्ध्या । कीदृश्या धिया? **पुरन्ध्या** । अशेषप्राणिदेहाश्रयया अशेषप्राणिनां देहमाश्रयत इति तादृश्या, प्राणिनां प्रेरणार्थं तत्तद्देहगतया । ननु भगवान् प्रेरयति । सत्यम् । भगवतो बुद्धेश्चाभेदाद् युक्तम् । अत एव **स्वबुद्ध्या** इत्याह भगवत्पादः । स्वरूपभूतया बुद्ध्येत्यर्थः । अशेषप्राणिनां बुद्धीः प्रेरयितुं बुद्धिगतो बुद्धिरूपो भगवानित्येतत् । एतेन त्रिष्टुप्प्रशंसनमपि भगवत्प्रेरणया न स्वेच्छयेत्युक्तं भवति । कीदृशाय सोमाय? **मन्दद्वीराय** । वीरमिन्द्रगतं

परमेश्वरं मन्दयति मोदयतीति मन्दद्वीरः । तमेतं मन्दयद्वीरं सन्तं मन्दद्वीरमाचक्षते । **मदि स्तुतिमोदमद-स्वप्नगतिषु** । **'मोदो हर्षः । मदो दर्पः'** इति क्षीरस्वामी । अथवा हे भगवन्, वः युष्मद्देवत्यस्य मेधस्य सातये सोमपानार्थं वः युष्मत्प्रियं त्रिष्टुभमन्त्रं प्रति भवान् प्रप्राविवासतीत्यर्थः । ननु कथं भवद्दैवत्यमिति? **'देवतान्तात् तादर्थ्ये यत्'** (५.४.२४) इति पाणिनिस्मरणाद् भवद्देवत्यमिति भाव्यम् । न भाव्यम् । नात्र तादर्थ्ये यत् । किन्तु **'साऽस्य देवता'** (४.२.२४) इत्यण् । भवान् देवताऽस्येति भवद्दैवत्यम् । ननु नैवं वैयाकरणा मन्यन्ते । मा नाम मंसत । मानय तान् । नन्वह-मपि न मन्ये । मा नाम मंस्थाः । शास्त्रमथनेन मन्यसे । वैयाकरणपाशो मा भूः । वैयाकरणरूपो भव । सूत्रान्तरं वा कल्पय । वः इति गौरवाद् बहुवचनम् । अत एव बहुत्वभ्रमवारणाय गौरववाचिना भवच्छब्देन आविवासतीत्येकवचनेन पर्यवसानम् । बहुरूपत्वाद् वा बहुवचनम् । एकरूपत्वादेक-वचनेनोपसंहारः– भवान् **प्रप्राऽविवासतीति** ॥

एतेन यदुक्तं सायणेन– **'प्रप्र अपरः प्रशब्दः पूरणः । प्र भवतेति शेषः । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः'** इति । तदेतद् दत्तोत्तरम् । आविवासति इति क्रियान्वयसम्भवात् किमिति वृथा अध्याह्रियते? प्रशब्दद्वयस्याप्यर्थकथनात् पूरणार्थत्वमित्यप्यसङ्गतम् ॥

एतेन **'निपाताः क्वचिद् पादपूरणाः'** इति यद् यास्क आह, यच्च **'प्रसमुपोदः पादपूरणे'** (८.१.६) इति पाणिनिराह, तदपि दत्तोत्तरम् । निगदेष्वपि द्विरुक्तिदर्शनात् व्यर्थं च पादपूरण इति । नहि वेदे पादपूरणार्थं वा वाक्यालङ्कारार्थं वा स्तोभाक्षराणि प्रयुज्यन्त इत्याचार्यः । अत एव असन्तुष्टः वेङ्कटमाधवोऽप्याह–

**'वाक्यार्थेष्वप्रवृत्तेषु निपाताश्चेदनन्विताः ।**
**'ऋक्पादपूरणास्ते स्युरिति यास्कस्य दर्शनम् ॥**

**'अप्रवृत्ते तु वाक्यार्थे ब्राह्मणेष्वपि नन्वमी ।**
**'दृश्यन्ते यत्र नापेक्षा विद्यते पादपूरणैः ॥**

**'माधवस्तत्र वदति स्फुटत्वोद्ग्रहणादिकम् ।**
**'वाक्यार्थे जनयन्त्येते मन्त्रब्राह्मणयोरिति ॥**

'स्फुटत्वोद्ग्रहणादिश्च क्वचित् सूक्ष्मः क्वचित् स्फुटः ।
'यत्र स्फुटास्तदा सार्थाः सूक्ष्मे स्युः पूरणा इति' इति ॥

इदमपि याथाकथाचम् । इदं सूक्ष्ममिदं नेति किं विनिगमकम्? यत् स्फुटं चतुरमतीनां तदेवाऽस्फुटं भवति मन्दानाम् । तस्मादनिर्णायकमेवैतत् ॥ * ॥

अत्र 'मन्दद्धीराय+इन्दवे' इति, 'पुरन्ध्या+आविवासति' इति च विश्लेषेण सम्पूर्णाऽनुष्टुप् ॥ * ॥

—०—

अथ द्वितीया–

[नदं व ओदंतीनां नदं योयुंवतीनाम् ।
पतिं वो अघ्न्यांनां धेनूनामिंषुध्यसि ॥ २ ॥] (ऋ.सं.८.६९.२)

ओदतीनां उन्दनकर्त्रीणां वः अपां भवदीयानां पतिं वः पुरुषं प्राणं नदनकर्त्तारं प्रति इषुद्ध्यसि पतिर्भवसि । सृष्टौसृष्टौ योयः प्राणस्तन्तं प्रति पतिर्भवसीति नदमिति पुनर्वचनम् । योयुवतीनां गमनशीलानाम्, आकाशे पोप्लूयमानानाम्, अघ्न्यानां धूमरूपेणादाह्यानाम्, रेतोरूपेणाजराणां वा, धेनूनां जगत्पोषकाणाम् । 'धिनु पुष्टौ' इति धातोः । 'ता नदेन विहरति–' इत्यादिश्रुतेः । पयसा सेचकानां देशाद्देशान्तरगमनशीलानां अघ्न्यानां हन्तुमयोग्यानां धेनूनां गवां पतिं वायुं प्रति इषुध्यसीति वा । 'वायुर्वाव गवां पतिः' इति श्रुतेः । धेनुशब्दाच्च । ओदतीनां भक्त्या सेचकानां योयुवतीनां अतिशयेनात्मतत्वावगमकानां अघ्न्यानां नित्यानां धेनूनां धर्म्मार्त्थकाममोक्षपोषकाणां वाचां पतिं वायुं प्रति पतिर्भवसीति वा ॥

**'वाचं धेनुमुपासीत। तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकार इति। तस्या द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च हन्तकारं मनुष्याः स्वधाकारं पितरः। तस्याः प्राण ऋषभो मनो वत्सः' इत्यादिश्रुतिभ्यः ॥**

ननु सप्ताक्षरपादेयमुष्णिक्। अनुक्रमणिकाकारोऽप्याह— **द्वितीयोष्णिक्** इति। तत्कथमस्या अनुष्टुप्सु गणनम्? अनुष्टुप्त्वेन मन्त्रदृग्भिः प्रज्ञातत्वात्। अत एवोक्तम्— **'प्रज्ञाता अनुष्टुभः शंसति'** इति ॥

अयमर्थः— त्रिपदा गायत्र्यो भवन्ति। त्रिपदा उष्णिहः। अनुष्टुभमारभ्य चतुष्पात्त्वमृक्षु दृश्यते। तत ऋषयश्चिन्तयाश्चक्रुः— 'किमियं सप्ताक्षरेत्युष्णिक्षु गणयामः। आहो चतुष्पात्त्वेनानुष्टुप्सु' इति। अन्ते च निरणैषुः— 'स्यादक्षरगणनयोष्णिक्। अथापि अनुष्टुब्मध्यगतत्वात् एकाक्षरन्यूनपादा पादनिचृदनुष्टुबेवेति युक्तमुत्पश्यामः' इति। तदुक्तमारण्यके— **'नदं व ओदतीनामितीँ३। उष्णिगक्षरैर्भवति। अनुष्टुप्पादैः। आयुर्वा उष्णिक्। वागनुष्टुप्। तदस्मिन्नायुश्च वाचं च सन्दधाति'** (ऐ.आ.प्र.१.अ.३.खं.८) इति ॥

ओदतीनामिति का ओदत्य उच्यन्ते? आह— **उन्दनकर्त्रीणामपामिति**। कथम्? उन्दन्तीत्योदत्यः। **उन्दी क्लेदने** इति धातुः। उन्दनं क्लेदनं आर्द्रीकरणमित्येतत्। उन्दतीनामिति वक्तव्यम्, कथमोदतीनामिति? श्रुत्यैव निर्वचनाद् युक्तं श्रौतं रूपम्। तथाहि श्रुतिरिमामारण्यकं स्वयमेव व्याचष्टे— **'नदं व ओदतीनामितीँ३। आपो वा ओदत्यो या दिव्याः। ता हीदं सर्वमुन्दन्ति। आपो वा ओदत्यो या मुख्याः। ता हीदं सर्वमन्नाद्यमुन्दन्ति'** इति (ऐ.आ.१.३.५)। यद्यार्द्रीकरणमुन्देरर्थः, तदा अन्तर्णीतणिच्। उन्दन्ति उन्दयन्तीत्यर्थः। स्वसम्बद्धं वस्तुजातमुत्तं कुर्वन्तीति। एतदेव भगवत्पादः स्फुटमाह— ओदतीनामित्यस्य उन्नानामिति नार्थः। किन्तु उन्दन-कर्त्रीणामिति। वः इति भगवतः परामर्शः। तेन वः भवदीयानामपाम्। भगवत्सृष्टानामपामित्यर्थः। पतिम्। वः इति पुनर्भवदीयमित्यर्थः। तस्य तात्पर्यमाह— **वः पुरुषमिति**। यथा राज्ञः पुरुष इति

राजभृत्य उच्यते । तथा व इति भवदीयं भृत्यं वायुमित्यर्थः । नदं पुरुषे स्थित्वा नादकर्तारं प्राणं प्रति इषुध्यसि पतिर्भवसि । तदप्युक्तमारण्यके– **'पुरुषो वै नदः । तस्मात् पुरुषो वै वदन्त्सर्वः सन्नदतीव'** (१.६.५) इति, **'प्राणो वै नदस्तस्मात् प्राणो वदन्त्सर्वः सन्नदतीव'** (१.३.८) इति च । तस्मात् पूर्वोक्तः पुरुषः प्राण इति ज्ञायते । तदुभयं वाक्यं संयोज्य भगवत्पाद आह– **वः पुरुषं प्राणमिति** । नदं पुरुषेषु गम्भीरं नदनकर्तारम्, विशेषतः सामगानेन नदन्तम्, पुरुषेषु स्थित्वा नदनकर्तारं च वः भवदीयं भृत्यम् । तथा वः भवदीयानां भवता सृष्टानाम्, ओदतीनां अपां पतिं प्राणं प्रति त्वमिषुध्यसि पतिर्भवसीत्यन्वयः । कीदृशीनामपाम्? आकाशे मेघरूपेण प्लवमानानाम् । **योयुवतीनां गमनशीलानाम्** ॥

**प्लुङ् गतौ** । यङि पोप्लूयते । **यु मिश्रणे** इति पठन्ति । गमने चेति पठनीयम् । श्रुतौ पोप्लूयन्ते सरीसृप्यन्ते इति व्याख्यानात् । यङि योयूयते । योयूयन्तइति योयुवत्यः । योयूयमाना इत्यर्थः । तथाहि आरण्यके– **'आपो हि योयुवत्यो या आन्तरिक्ष्यास्ता हि पोप्लूयन्त इव । आपो वाव योयुवत्यो याः स्वेदन्ते ता हि सरीसृप्यन्त इव'** (१.३.५) इति ॥

पुनः कीदृशीनामपाम्? **अघ्न्यानाम्** । तदर्थमाह– **धूमरूपेणादाह्यानां रेतोरूपेणाजराणां वा** । इदमप्युक्तमारण्यके– **'आपो वा अघ्न्या या अग्नेर्धूमा जायन्ते । आपो वा अघ्न्या याः शिश्नादुत्सृज्यन्ते'** (१.३.५) इति ॥

पुनः कीदृशीनामपाम्? **धेनूनाम्** । धिन्वन्ति पोषयन्ति इति धेनवः । जगत्पोषणकर्त्रीणामित्यर्थः । तथाहि आरण्यके– **'धेनूनामिषुध्यसीतिँ । आपो वै धेनवस्ता हीदं सर्वं धिन्वन्ति'**(१.३.४) इति ॥

**'धिवि प्रीणने'** इति धातुं पठन्ति पाणिनीयाः । **'धिवि प्रीणने'** इत्यस्य रूपं कथं धिन्वन्तीति श्रुतौ पठ्यते इति नवीनवैयाकरणानां भ्रमं निरस्यन् भगवत्पादः पुरातनं धातुपाठं पठति– **'धिनु पुष्टौ' इति धातोः** । अन्यत्रापठितस्य धातोरत्र पठनस्येदमेव बीजम् । यद् विस्मृतधातुपाठानां नव्यानां तत्स्मारणम् । **धिवि प्रीणने** इति किल धातुपाठः । तत् कथं धेनूनां जगत्पोषकाणामित्याक्षेपस्य चेदमुत्तरम् ॥

एतेन– **'यथा धेनवः क्षीरप्रदानेन प्रीणयन्ति एवमापः ओषधिवनस्पत्यादिकं प्रीणयन्ति । अपां धेनुसाम्याद् धेनुत्वम्'** इति वदन् सायणोऽपि दत्तोत्तरः । अक्षरसाम्यान्निर्ब्रूयादिति निर्वचनेनैव धेनुत्वसिद्धौ धेनुसाम्याद् धेनुत्वमित्युपचारत्वकल्पनमसङ्गतं च ॥

**पोषकाणां** पोषिकाणामित्यर्थः । तारकादिवत् सर्वत्रेत्वं विभाषा मन्यते भगवत्पादः । अथवा तृतीयोऽतिशये । अतिशयेन पोषिकाणामित्यर्थः । ऐकपद्याभावेऽपि केवला द्विरुक्तिरपि वीप्सार्थं वक्तुं प्रभवति । अतो नात्र पुनरुक्तिर्दोषः, किन्तु गुण एवेत्याह– **सृष्टौसृष्टौ योयः प्राणस्तन्तं प्रति । 'ता नदेन विहरति इत्यादिश्रुतेः'** इत्यनेन आरण्यके तृतीयाध्याये समग्रमन्त्रविवरणपरं पञ्चम-खण्डभागमुज्जहार ॥ ✻ ॥

अथ धेनुपरतयाऽर्थमाह– **पयसा** । ओदतीनां **पयसा सेचकानां** योयुवतीनां देशाद् **देशान्तरगमन-शीलानाम्, अघ्न्यानां हन्तुमयोग्यानां धेनूनां गवां पतिं** प्राणं प्रति त्वमिषुध्यसीति वा । न हन्यन्ते, हननस्य शास्त्रनिषिद्धत्वेन अयोग्यत्वात् इति अघ्न्याः । **'अघ्न्यादयश्च'** (४.१११) इत्युणादिसूत्रे यगन्तत्वेन निपातनात् हन्तेर्यक् । **'वायुर्वाव गवां पतिः'** इति श्रुतेरिति । **'वायव स्थोपायव स्थ'** इति च श्रुतिः । **धेनुशब्दाच्च** । असति बाधके लोकप्रसिद्धोऽर्थः न त्यक्तव्य इत्यर्थः ॥ ✻ ॥

वाग्देवीपरतयाऽर्थमाह– ओदतीनां **भक्त्या सेचकानाम्** । ओदतीनां साधकानां भक्त्या उन्दयन्ती-नाम् । भक्तिरसबिन्दून् सेचयन्ति उक्षयन्तीति ओदत्यः । भक्त्या सेचिकाः । इत्वं विभाषेत्युक्तम् । तेन **सेचकानाम्** । यु गतौ इत्यतः अवगत्यर्थतया व्याख्याति– **अतिशयेन** । अन्तर्भावितण्यर्थोऽयं यङ् । योयूयन्ते अतिशयेन गमयन्तीति । किं गमयन्ति? अध्यात्मतत्वानि गमयन्ति । अघ्न्याः नित्यत्वेन अशक्यत्वात् न हन्यन्त इत्यर्थः । धिन्वन्तीत्येतदपि अन्तर्भावितण्यर्थत्वेन व्याख्याति– **धर्मार्थकाममोक्षाणां पोषकाणामिति** । पूर्ववत् पोषिकाणामित्यर्थः । **'विद्वद्रूढिर्वैदिका स्यात्', 'उद्यच्छतार्कसदृशाम्', 'शिवे सर्वार्थसाधके'** इत्यादिवत् । अस्मिन्नर्थे श्रुतिसंवादमाह– **वाचं धेनुमुपासीत** । बृहदारण्यके सप्तमाध्याये दशमं ब्राह्मणम् । वौषडिति वषट्कारः ॥

एतेन यत् सायणेनोक्तम्– **'ओदत्यः उषसः । 'ओदती भास्वती'** इति **तन्नामसु पाठात् । तासां नदं उत्पादकमित्यर्थः । इन्द्रेण ह्युषस उत्पद्यन्ते । इन्द्रस्यैव सूर्यत्वात् । द्वादशादित्यमध्ये**

**इन्द्रः पठितः । तादृशमिन्द्रं हे यजमानाः वः युष्मदर्थं आह्वयतेत्यर्थः । तथा योयुवतीनां सर्वत्र मिश्रयन्तीनां नदं शब्दयितारं वः युष्मदर्थमाह्वयामि । अघ्न्यानां अहन्तव्यानां गवां पतिमाह्वये । अथ प्रत्यक्षकृत हे यजमान त्वं धेनूनां क्षीरादिना प्रीणयित्रीणां गवां इषुध्यसि अन्नमिच्छसि'** इति । दत्तोत्तरमेतत् । स्वयं भगवत्या श्रुत्या कथितस्यार्थस्य प्रहाणे कारणाभावात् । अथ च 'नदम् उत्पादकम्' इत्यशब्दार्थं शब्दार्थमाह । 'इन्द्रस्यैव सूर्यत्वात्' इत्यसङ्गतम् । द्वादशस्वादित्येषु इन्द्र एकः सूर्य एकः । द्वादशत्वसिद्धये तयोर्भेद एव वक्तव्यः । एकोऽग्रजः । अपरोऽनुजः । तत्कथमिन्द्रस्यैव सूर्यत्वम्? न क्वापि शास्त्रेषु तयोरेकत्वमुच्यते । 'इन्द्र एकं सूर्य एकं जजान' इति चान्या श्रुतिः । एकस्मिन्नेव वाक्यखण्डे नदं उत्पादकमिति नदं शब्दयितारमित्यर्थभेदकथनमपरो दोषः । आह्वयतेति आह्वयामीति क्रियापदाध्याहारोऽपरो दोषः । धेनूनामिषुध्यसि इति वाक्यभेदकरणमित्यादयो बहवो दोषा इत्युपेक्ष्योऽयम् ॥ ❋ ॥

—o—

अथ तृतीया–

**[ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः ।**
**जन्मन् देवानां विशस्त्रिष्वा रोचने दिवः ॥ ३ ॥ १ ॥]**

(ऋ.८.६९.३; शु.य.१२.५५; १५.६०; तै.सं.४.२.४.१४.;तै.ब्रा.३.११.६.२.)

ताः पृश्नयः आपो गावो वाचो वा, अस्य सूददोहसः प्राणस्य, वायुस्थस्य परमेश्वरस्य, सोमं श्रीणन्ति । अद्भिर्हि संसृष्टो भवति सोमः, पयआदिना वा श्रितो भवति, मन्त्रैर्वा गृह्यते । 'अथ सूददोहाः प्राणो वै सूददोहाः' इति श्रुतेश्च । शोभनमुदं कर्म्म ज्ञानं वा दोग्धीति सूददोहाः । उदेत्युच्चो भवत्यनेन पुरुष इत्युदं ज्ञानादि । 'मनो वाव सोमः' । तद् वाचः श्रीणन्ति स्वार्थैः । प्रश्नयोग्यत्वात् पृश्नयो वाचः । प्रशंसनरूपत्वात् प्रशंसनीयत्वाद् वा । प्रशंसनीयत्वमेवापां गवां च । देवानां जन्मनि यज्ञे । तत्र हि

तेषामभिव्यक्तिः पूर्वम् । ज्ञाने वा । विशः प्रजाश्च श्रीणन्ति । मुख्यतस्ता एव श्रीणन्तीति चशब्दवर्ज्जनम् । दिवस्त्रिष्वारोचनेषु आदित्यचन्द्रविद्युत्पर्य्यन्तं स्थितानां देवानां जन्मनि–

'यज्ञो वै देवजन्म तत्र हि देवाः प्रादुर्भवन्त्या सूर्य्याचन्द्रमसावा विद्युतं ते वै लोकानधिश्रिताः' इति श्रुतेः । 'द्यौर्वाव विद्युत् तत्पतिं वायुमुपगम्य तेनैव परमुपगच्छति सैषा ब्रह्मलोके विराजते' इति श्रुतेर्द्यौरेव विद्युत् ॥ * ॥

ताः अव्यवहितपूर्वमन्त्रे प्रस्तुता इत्याशयेनाऽऽह– **आपो गावो वाचो वा** । तेन ता एव पृश्निशब्दार्था इति स्फुटम् । अस्येति कस्य? नदशब्देन पूर्वं प्रस्तुतस्य प्राणस्य । तेन सूददोहा इति प्राण उच्यत इति स्फुटम् । **'प्राणो वै सूददोहाः'** इति श्रुतेश्च एतत् सिद्धम् । इन्द्रदेवत्यो मन्त्रः । इन्द्रशब्देन मुख्यपरममुख्यार्थतया प्राणनारायणौ गृह्येते इत्याह– **प्राणस्य वायुस्थस्य परमेश्वरस्येति** । तत इन्द्र इति पुरन्दरोऽपि । तेन इन्द्रस्थस्य वायोः, वायुस्थस्य परमेश्वरस्य नारायणस्य कृते सोमं श्रीणन्तीति स्थितम् ॥

कथं सूददोहाः प्राणः? श्रुतिरुक्ता । निर्वचनाच्चेत्याह– **शोभनमुदं कर्म ज्ञानं वा दोग्धीति सूददोहाः** । **दुह प्रपूरणे** इत्यस्यौणादिकेऽसुनि निष्पन्नोऽयं सान्तः शब्दः षष्ठ्यन्तः **दोहस** इति । एतेन **'सूद इति कूपनाम । तत्सदृशदोहनाः पृश्नयो गावः'** इति व्याख्यान् सायणः परास्तः । **'प्राणो वै सूददोहाः'** इति श्रुतिविरोधादेव । ननु सूद इति कूपनाम इति सुन्दरं व्याख्यानम् । सु समृद्धं उदमुदकमत्रेति । उदपदस्य कर्मपरत्वे ज्ञानपरत्वे वा का निरुक्तिः? **उदेत्यनेनेति** उदम् । **तृतीयोऽतिशय** इतीकारस्याकारः । तेन उदं कर्म वा ज्ञानं वा । उभाभ्यामेव हि पुमानुच्चो भवति कर्मणा च ज्ञानेन च । **दोग्धि, दुह प्रपूरणे,** ज्ञानकर्मणी जीवे प्रपूरयतीत्यर्थः । प्रपूरणमिति किमुच्यते? रिक्तीकरणमित्येके । **'प्रपूरणं पूरणाभावः'** इति क्षीरस्वामी । **'तच्च दोहनाख्यं रेचनम् । प्रतिष्ठत**

**इतिवद् धात्वर्थवैपरीत्ये प्रः'** इति पुरुषकारे कृष्णलीलाशुकः । इदमुक्तं भवति– पूरणमिति समग्रं निःसारणमुच्यते । तदभावः प्रपूरणम्, असमग्रं पूरणमित्येतत् । अशक्यं च ज्ञानकर्मणोः सग्रं पूरणम् । यस्य यावद् योग्यं तावता ज्ञानेन कर्मणा च जीवं पूरयति प्राण इत्यर्थः । प्रसिद्धं च जलवाचिनां पदानां कर्मपरत्वम्– **'तस्मिन्नपो मातरिश्वा दधाति'** इत्यादौ । **पृश्नय** आपः **सोमं श्रीणन्ति** । ननु **श्रीञ् पाके** इति धातुपारायणिकाः पठन्ति । तत् कथमापः श्रीणन्ति? शृणु, पाको नाम न केवलमग्निसंस्कारः । ज्ञानेन पक्वः, वयसा पक्व इत्यादिषु तददर्शनात् । तस्मात् परिणामविशेषः, तद्धेतुः संस्कारविशेषो वा पाकः । जलमिश्रणेन सोमे रुचिविशेषो जायत इति स एवात्र पाकः । तदुक्तम्– **'अद्भिर्हि संसृष्टो भवति सोमः'** इति । जलसंसर्गः कषायस्य काटवं निगृह्य पाने सह्यतां जनयति । **संसृष्टो भवति** संस्कृतो भवतीत्यर्थः । हीति याज्ञिकानां विदितमेतदित्याह । श्रितो भवति मिश्रितो भवतीत्यर्थः । यः सोमे स्वादुतां जनयति । वाग्भिः श्रीणनं नाम मन्त्रैर्मिश्रणम् । मन्त्रोच्चारण-पूर्वकं सोमस्य हवनार्थं ग्रहणमध्वर्युणा । **श्रीञ् पाके** इति पठन्ति । श्रीञ् श्रयणे इति च पठनीय-मिति ज्ञायते । पृश्निरिति कथं वाक्? पृच्छ्यत इति पृश्निः । **प्रच्छ ज्ञीप्सायाम्** । द्विविधा पृच्छा भवति– कथमिदं शब्दरूपमिति निर्वचनपृच्छा । कथमयं शब्दस्यार्थ इत्यर्थपृच्छा । प्रथमपृच्छाया उत्तरं निरुक्तम् । द्वितीयाया अभिधानम् ॥

अथ च प्रशंसन्त्येनामिति पृश्निः । प्रशंसन्त्यनयेति पृश्निः । **शंसु स्तुतौ** । अर्थोऽवगतः । कथं पृश्निरिति रूपसिद्धिः? आह निरुक्तकारः– **'अक्षरसाम्यात् निर्ब्रूयात्'** इति ।

ननु अव्यवस्था तर्हि भवति । यथाकथाच निर्ब्रूयात् । प्रज्ञाशून्यः पृश्निरित्यपि कश्चिन्निर्ब्रूयात् । दैत्येषु वरः देवरः इत्यपि कोऽपि निर्ब्रूयात् । को नियन्ता?

यस्य शब्दस्य योऽर्थः श्रुत्यादिगदितः तदनुगुणमेव निर्वक्तव्यमिति नियमात् । नहि निर्वचनं नाम मूर्खप्रलपितम् ॥

ननु किंव्याकरणमिदं रूपमिति पृच्छामः । असङ्गतोऽयं प्रश्नः । नहि वैयाकरणाः पाणिन्यादयः शब्दरूपस्य जनयितारः । किन्तु स्थितस्य शब्दस्य कल्पितया प्रक्रियया प्रत्ययादियोजनया

व्युत्पत्तिप्रदर्शका एव । तद् यथा– कमठ इति स्थितम् । **'कमेरठः'** इति वैयाकरणाः अठप्रत्ययं संयोज्य रूपं निरूपयन्ति । शङ्ख इति स्थितम् । **'शंसः खः'** इति वैयाकरणाः । कण्ठ इति स्थितम् । **'कणेष्ठः'** इति वैयाकरणाः ॥

कुत्र स्थितम्? भगवदिच्छायाम् । स किल नामरूपयोः स्रष्टा । वस्तुतः नित्यानि नामानि । नहि वैयाकरणैः सृष्टानि । वेदपदैस्तानि भगवानाविश्चकार । अस्मिन्नर्थे इदंरूपं पदमस्तु इति भगवदिच्छैव निर्णयनी । नतु व्याकरणप्रक्रियाः ॥

नह्यनेन प्रत्ययेनेदं रूपं भवत्विति भगवदिच्छा । काल्पनिकत्वात् प्रत्ययानाम् । अन्येऽन्ये वैयाकरणा अन्यथाऽन्यथा वर्णयन्ति । नैकरूप्यं तेषु । तद् यथा– बृहिधातोर्मनिप्रत्यये ब्रह्मेति रूपमित्येके । बृहधातोर्मनिन्प्रत्यय इत्यपरे । मनधातोर्मन्युरिति पाणिनीयाः । मनुधातोरपीति तत्ववादिनः । अन्यथाऽपि शक्यं निर्वक्तुम् । के जले मठति वसतीति कमठ इत्यपि स्यात् । मठ निवासे । एवमनियता व्याकरणप्रक्रिया । कं पक्षमवलम्ब्य भगवानिष्यात्? नित्याः शब्दाः । अनित्याः प्रक्रियाः । अत एव **'तासु न विश्वसेत्'** इत्याह निरुक्तकारः । अतः प्रकृतिप्रत्ययभङ्गीं न वयं बहु मन्यामहे । निरुक्तेन पर्याप्तम् ॥

कथमापः पृश्नयः? गावो वा? प्रशंसनीयत्वादेव प्रशंसन्त्येता इति । प्रशंसन्त्यपः– **'मयोभुवः'** इति । प्रशंसन्ति गाः – **'अघ्न्याः'** इति । अध्यात्मं सोम इति मनः । **तत्** मनः **वाचः** वेदमन्त्राः श्रीणन्ति योजयन्ति स्वस्वयोग्यार्थैः मुख्यार्थैः भगवद्गुणैश्च ॥

पूर्वे काले कृतादौ **देवानामभिव्यक्तिर्यज्ञे** । तेन देवानां जन्मन् जन्मनि अभिव्यक्तिस्थाने । **सप्तसु प्रथमा** । प्रातिपदिकमपि प्रथमात्वेन गृह्यते । **'सुपां सुलुक्–'** इति पाणिनिः ॥

ज्ञानरूपे मानसयज्ञे वा । तत्र मनसि अभिव्यक्तिः । विशः सर्वाः प्रजाः मानसयज्ञे सोमं श्रीणन्ति । विशः ऋत्विजः बाह्ययज्ञे । मुख्यतस्ता एव श्रीणन्ति तद्द्वारा पृश्नयः श्रीणन्ति इति वैषम्यसूचनाय मन्त्रे चशब्दाभावः । दिवि त्रिषु आरोचमानेषु स्थानेषु स्थितानां देवानां जन्मनि । आरोचने इत्येकवचनेन स्थानभेदेऽपि मत्यैक्यमाह । स्वोक्तार्थे श्रुतिसम्मतिमाह– **यज्ञो वै देवजन्मेति** ॥

एतेनोत्तरार्धं धेनुपरतया व्याख्यान्तो दत्तोत्तराः । **आ सूर्याचन्द्रमसौ** सूर्याचन्द्रमसोः लोकावारभ्य **आ विद्युतं** विद्युल्लोकपर्यन्तम् । सत्यलोकपर्यन्तमित्येतत् । कथं विद्युल्लोक इति सत्यलोक उच्यते? विद्युच्छब्देन भारतीग्रहणादित्याह श्रुत्यैव– **द्यौर्वाव विद्युत्** । द्यौरेव भारत्येव विद्युत्पदवाच्या । लोकानां रोचमानत्वं विद्युत्पदेन समर्थयत इति । सा हि साधकानामन्तर्हृदि विद्योतते । केचित् सूर्यलोकगताः । तत उत्तमाः केचित् चन्द्रलोकपर्यन्तचारिणः । ततोऽप्युत्तमाः सत्यलोकपर्यन्तचारिण इत्यर्थः । 'जनुमन् देवानां विशः, त्रिषु आरोचने दिवः' इति विश्लेषेण सम्पूर्णाऽनुष्टुप् ॥ ✻ ॥

—०—

अथ चतुर्थी–

**[अर्चत प्रार्चत प्रियमेधासो अर्चत ।**
**अर्चन्तु पुत्रका उत पुरं न धृष्ण्वर्चत ॥ ४ ॥]**

(ऋ.८.६९.८; अथ.२०.९२.५.)

अर्चनं यज्ञादि । प्रार्चनं ज्ञानध्यानादि । 'श्रेयान् द्रव्यमयाद् यज्ञाज्ज्ञानयज्ञः परन्तप' इति भगवद्वचनात् । प्रिययज्ञा अर्चत, प्रियज्ञानाः प्रार्चत । पुत्रकाः अल्पज्ञा अप्यर्चत–

'न बुद्धिभेदं जनयेदज्ञानां कर्म्मसङ्गिनाम् ।
'जोषयेत् सर्वकर्म्माणि विद्वान् युक्तः समाचरन्' इति च ॥

उतशब्दात् ज्ञानिनामप्यर्चनं युक्तं स्वाश्रमानुसारेणेति । 'अधा ते विष्णो विदुषा चिदर्ध्यः स्तोमो यज्ञश्च राध्यो हविष्मता' इति श्रुतेः । किं तदर्चनीयम्? धृष्णु धृष्टं परं ब्रह्म वासुदेवाख्यम् । पुरं देहं नार्चत ।

‘प्रत्युद्गमप्रश्रयणाभिवादनं विधीयते साधु मिथः सुमद्ध्यमे ।
‘प्राज्ञैः परस्मै पुरुषाय चेतसा गुहाशयायैव न देहमानिने’
इति भागवते ॥

‘सदेहमानिहरये प्रणमेत् केवलाय वा ।
‘न देहाय न तन्मानपराय च कथञ्चन’ इति व्यासस्मृतौ ॥

पुनरर्च्चतेति तात्पर्य्यार्त्थे ॥ ✻ ॥

**मेधृ सङ्गमे** । मेधत्यत्र सर्वं विषयत्वेनेति मेधा प्रज्ञा । मेधन्त्यत्र सर्वे याज्ञिकाः इति मेधो यज्ञः । **‘मेधा बुद्धौ क्रतौ पुमान्’** इत्यभिधानम् । उभयमप्यर्थं सङ्गमयति– **प्रिययज्ञाः अर्चत** । प्रियमेधाः **प्रियज्ञानाः प्रार्चत** । **अर्च पूजायाम्** । सर्वथा अर्चतेति पुनरुक्तिरर्चनकर्मणि महातात्पर्यं द्योतयति । अनुकम्पया अल्पज्ञान् पुत्रका इत्याह । अथापि तान् प्रोत्साहयितुं अर्चन्तु भवन्त इत्याह । अत एव भगवत्पाद अर्चतेत्यनूवाद । अल्पज्ञा उत **अल्पज्ञा अपि** । तेन बहुज्ञा अपि ॥

अज्ञानां ज्ञानमार्गेण साधयितुमक्षमाणाम्, अतः कर्मण्येव सक्तानम्, बुद्धिभेदं कर्मणि जिहासां न जनयेत्, उभयाभावप्रसङ्गात् । अथ स्वात्मानमेव दृष्टान्तीकृत्याऽह– **युक्तः** सदा भगवति मनोयोगयुक्तः विद्वानपरोक्षज्ञानी अत एव कर्मविधिबन्धरहितोऽपि सर्वकर्माणि समाचरन् अज्ञजनं जोषयेत्, तेन भगवन्तं जोषयेत् प्रीणयेदिति । मोक्षे सुखाधिक्यमपि नेच्छन्तो भगवत्प्रीणनार्थमृजवोऽपि लोकसङ्ग्रहार्थं कर्माणि जोषयन्ति सेवयन्तीति । एतदप्युक्तम्– **‘लोकसङ्ग्रहमेवापि सम्पश्यन् कर्तुमर्हसि’** इति । **इति च** भगवद्वचनात् । **उतशब्दात्** । **‘उतापी द्वौ च बाढार्थौ’** इत्यभिधानम् ॥

प्रियमेधसम्बन्धिनः प्रियमेधास इति स्वीया एव सम्बोध्यन्ते मन्त्रद्रष्ट्रा प्रियमेधेनेति सायणादयः । तर्हि सम्प्रति षोळशिशस्त्रे मन्त्रं पठतः किमनुसन्धानम्? ऋषिसम्बन्धमन्तरेणापि मन्त्राणामर्थो वक्तव्यः । ब्रह्मादिभिः पूर्वमेव दर्शनात् । सामवेदे चैतदुक्तम्–

'**अर्चत प्रार्चत नराः प्रियमेधासो अर्चत**' इति ॥

अत्र प्रियमेधासो नरा इति सर्वनरा गृहीताः । अतोऽस्मत्पर्यन्तः सर्वसाधारणोऽर्थः भगवत्पादेनोक्तः ॥

अत्र सामवेदपाठे समग्राऽनुष्टुप् । बह्वृचानां पाठे द्व्यक्षरोना विराळनुष्टुप् । अथापि केवलाऽनुष्टुबिति ऋषिभिः प्रज्ञाताः ॥

'**अधा ते–**' (ऋ.सं.१.१५६.१.) । पञ्चर्चं दैर्घतमसं विष्णुदेवत्यं सूक्तम् । '**भवा मित्रो न शेव्यो घृतासुतिर्विभूतद्युम्न एवया उ सप्रथाः**' इति पूर्वार्धम् । अयमर्थः– हे विष्णो, मित्रो न मित्रमिव शेव्यः सुखदाता भव । अथ चाहर्देवता मित्रइव घृतं दीप्तिं आसवति प्रसूत इति घृतासुतिः प्रकाशको भव । **घृ दीप्तौ** । **षु प्रसवे** । विभूतद्युम्नः । विविधभूतिमन्ति द्योतमानानि अवताररूपाणि यस्य तादृशः । इच्छयाऽवनं एवम् । इष्टानां रक्षणं वा । तदर्थं युनक्ति धावतीति एवयाः । उ सर्वत उत्कृष्टः । अत एव सप्रथा अनन्तकीर्तिः । **हविष्मता** यज्ञादिकर्म कुर्वता । मानसयज्ञे नारायण वासुदेवेति भगवदाह्वानं हविः । विदुषा चित् ज्ञानिनाऽपि हे विष्णो, ते यज्ञः राध्यः साधनीयः । स्तोमः स्तुतिश्च **अर्घ्यः** वर्धनीय इति ॥

किं तदर्चनीयम् यदर्चतार्चतेत्याम्रेड्यते? **धृष्णु** । **ञि धृषा प्रागल्भ्ये** । स किल धृष्टः यो न कस्यापि पुरः शिरो नमयति । सर्वोत्कृष्टत्वादजय्यमित्यर्थः । तदेतदाह– **धृष्णु धृष्टं परं ब्रह्मेति** । धृष्टमिति क्तान्तम् । अविनयेऽर्थे इडभाव इत्याह पाणिनिः– '**धृषिशसी वैयात्ये**' (७.२.१९) इति । अत्र वैयात्यं नाम अन्यैरनभिभाव्यत्वम् । अन्यत्रानभिभाव्यत्वाभिमानो वैयात्यम् । उभयत्राप्यनमनं शिरसः समानम् । तस्यैव क्नुप्रत्यये धृष्णुरिति रूपम् इति पाणिनिः– '**त्रसि-गृधि-धृषि-कृ-क्षिपेः क्नुः**' (३.२.१४०) इति । मोक्षदातृत्वात् वासुदेवाख्यमित्याह । **पुरं नार्चत** ॥

यद्यपि परतो नञ् पूर्वस्योपमानतां वक्तीति वैदिकानां सम्प्रदायः । उत्सर्गोऽयमित्याचार्यः । सर्वेऽपि उत्सर्गाः सापवादा हि । अतः पुरं नार्चत इत्येवान्वयो युक्तः । अर्थविशेषलाभश्च । पुरस्थानीयं भगवत्प्रतीकं नार्चतेति च । '**न प्रतीके नहि सः**' (ब्र.सू.४.१.४) इति हि बादरायणः । एतेनार्चावतारवादिनो निरस्ताः ॥

**इति भागवते** चतुर्थे स्कन्धे तृतीयाऽध्याये रुद्रवचनम्, पितुर्दक्षस्य यज्ञे भागं विवक्षमाणां दाक्षायणीं प्रति – **प्रत्युद्गमप्रश्रयणाभिवादनम्** (४.३.२२) । प्रत्युद्गमः स्वागतकरणम् । प्रश्रयणं गौरवार्पणम् । सनामनिर्देशं वन्दनमभिवादनम् । यद्यपि बहिर्दृष्ट्या देहमानिने जीवाय । अन्तर्मनसा हृदयगुहाशयाय परस्मै पुरुषायैव क्रियते प्राज्ञैरिति । देहमानिना सहिताय हरये इति व्यवस्थितविकल्पार्थो वाकारः, यत्र देहमानी स्वोत्तमः । यथा पार्वती शिवं प्रणमति । केवलाय हरये वा, यत्र देहमानी स्वस्मादनुत्तमः । यथा द्रौपदी धर्मराजं प्रणमति । केवलं देहमानपराय न कदाऽपि । किमुत केवलं देहाय जडाय? **'पुरमिद्धृष्ण्वर्चत'** इति सामगानां पाठः । इदित्यवधारणे । धृष्णु धृष्टमेव पूर्णत्वात् पूरणाच्च पुरं परं ब्रह्मार्चत । नतु धर्षणीयं अपूर्णं शरीराख्यं पुरमिति तदर्थः ॥ * ॥

—०—

अथ पञ्चमी–

**[अव॑ स्वराति॒ गर्ग॑रो गो॒धा परि॑ सनिष्वणत् ।**
**पिङ्गा॒ परि॑ चनिष्कद॒दिन्द्रा॑य॒ ब्रह्मोद्य॑तम् ॥ ५ ॥]**

(ऋ.८.६९.९; अथ.२०.९२.६.)

गर्गरगोधापिङ्गादीनां घोषा अपि नादव्यञ्जकत्वेन भगवद्वाचका एवेत्याह– अव स्वरातीत्यादिना । एतत् समस्तमिन्द्रायैवेत्यत्र्थः । ब्रह्म वेदो विशेषत इन्द्रायैवोद्यतः । गर्गर इति पादभूषण-महामत्रक-दधिपात्र-हस्तिहस्तानां नाम । पिङ्गा चकोरी । अवपरीत्यल्पाधिक्यादिविशेषोऽपि तद्वाचक एवेति ज्ञापनाय । चनिष्कददित्यनुकारशब्दः । सनिष्वणदित्यतिशयात्र्थे ।

'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव' इति च श्रुतिः ॥

‘दध्नो मथनशब्दश्चाप्यन्तर्न्नादस्वरूपतः ।
‘भीषकत्वं हरेर्ब्रूयादन्तर्न्नादो हि भीषणे ॥

‘गजबृंहितमप्येवं धिक्कारसहितं वदेत् ।
‘स्वरितेन समायोगाद् धिक्कृतौ स्वरितो यतः ॥

‘महामत्रं जलाद्यैश्च युक्तमेतादृशं वदेत् ।
‘पादभूषा च धिक्कारं तत्कृतं स्वरितो वदेत् ॥

‘अद्भुतत्वं हरेर्वक्ति पिङ्गा कण्ठगशब्दवत् ।
‘तामेवाद्भुततां वक्ति गृहगोधा पराऽपिच’ इति शब्दतत्वे ॥ * ॥

इन्द्रदेवत्यं हि सूक्तम् । अतो मुख्यत इन्द्रशब्दार्थौ प्राणनारायणौ वक्ति । तावेव शस्त्रशंसनदेवते इति तावेवात्र स्तूयेते ॥

**स्वराति** भगवत्परतया अधिकं स्वरति । **स्वृ** शब्दे । अवेति परीति च सर्वत्रान्वेति । **अव मन्दं** क्वचित् स्वरति । **परि** उच्चैः क्वचित् स्वरति गर्गरः । घोषा नादं व्यञ्जयन्ति । नादो ह्यर्थं व्यञ्जयति । तस्मात् सर्वेऽपि घोषाः वर्णविशेषा एव । प्रसिद्धं हि लोके स्वरभेदेनार्थभेदः । सङ्गीतं च स्वरत एव अर्थं व्यनक्ति । वेदे चोदात्तादयो नादविशेषाः ॥

यत् गर्गरः स्वरति, यद् गोधा स्वनति, यच्च पिङ्गा चीत्करोति एतत्सर्वमिन्द्राय उद्यतम् । इन्द्रं स्तोतुं प्रवृत्तमित्यर्थः ॥

कोऽयं गर्गरो नाम? गर्गरध्वनियुक्तो वाद्यविशेष इति सायणः । चिन्त्यमेतत् । अप्रसिद्धत्वात् तादृशवाद्यविशेषस्य । अतो गर्गरशब्दार्थानामियत्तामाह– **गर्गर इति पादभूषण-महामत्रक-दधिपात्र-हस्तिहस्तानां नाम** । गर्गर इति पादभूषणमुच्यते । यो भूतालयेषु भूतपात्रधारी पादयोर्धत्ते । क्वचित् गजपादभूषणमपि गर्गर उच्यते । गर्गर् इति स्वरतीति गर्गरः । ‘ಗಗ್ಗರ’ इति भाषायाम् । गर्गर

इति महामत्रकमुच्यते । अमत्रकमिति पात्रम् । **‘अमत्रं भाजने पात्रमित्युभे’** इति यादवप्रकाशाचार्यः । महदमत्रकम् ‘ಹಂಡೆ’ इति भाषायाम् । ततः किञ्चिदणुकमथापि महत् कलशादिकम् । ‘ಕೊಡ’ इति भाषायाम् । तस्यापि सङ्ग्रहार्थं कन् । गर्गर इति दधिपात्रमुच्यते । यत्र मन्थानेन दधि मथ्यते । उभयमप्यन्तर्गुळुगुळायते । तेन गर्गरः । गर्गर इति हस्तिहस्त उच्यते । गजो हि शुण्डायाः अन्तः सूत्कारं करोति । एतेन वाद्यविशेष इति वदन्तः परास्ताः ॥

अत्र गर्गरशब्देन विवक्षिता अर्थाश्चत्वार एव । नादजनकत्वात् । अन्यत्रान्योऽप्यर्थः स्यादिति भाति । यदाह मेदिनीकारः– **‘गर्गरो मत्स्यभेदे–’** इति ॥

वृक्षगता गोधा । गृहगता पल्ली । ‘ಹಲ್ಲಿ’ इति भाषायाम् । **‘टट्टनी मुसली पल्ली माणिक्या गृहगोधिका’** इति यादवप्रकाशाचार्यः । **स्वन शब्दे** । अतिशयेन स्वनति सस्वनति । मध्ये निरुपसर्गः षत्वमन्त्यलोपश्च । सनिष्वणत् । पश्यत वेदद्रष्टॄणां भाषाप्रयोगस्वातन्त्र्यं सौन्दर्यं च । यच्छ्रवणमात्रेण रोमपुलकं जनयति । यथेच्छमुन्मुक्तं गायन्ति । न ते पाणिनिना बद्धतुण्डाः । **‘ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति’** । सा हि भगवदिच्छानुसारिणी । अनुकरणशब्दोऽपि साधुरेव । यथा का इति कायतीति काक उच्यते । की इति ईरयतीति कीर उच्यते । टिटि इति भाषत इति टिट्टिभः । एवं हाहाकारः, चीत्कारः, सूत्कारः इत्यादि । सू इति शब्दं करोतीति सूकरः । एवं चनिष् चानष् इति कदति आह्वयति रोदिति वेति चनिष्कदत् । **‘कदि आह्वाने रोदने च’** इति पाणिनीयाः । **‘कद’** इति नन्दी ॥

चकोरीति लिङ्गमशिष्यम् । चकोरोऽपि । ‘ಜೊನ್ನವಕ್ಕಿ’ इति भाषायाम् । तथाहि– **‘चकोरस्तु चलचञ्चुत्पिबश्चन्द्रिकाप्रियः’** इति यादवप्रकाशाचार्यः । **‘पिङ्गा’** इति च सामान्यवचनम् । **‘अशिवैः शिवारुतैः’** इतिवत् । **‘शृगालो जम्बुकः शिवा’** इति हलायुधः ॥

**एकैव व्याहृतिः**, एकमेव व्याहरणम् । कस्येदं व्याहरणम्? आह– **प्राण एव** । प्राणे प्राणविषय एव । मुख्यतः प्राणम्, परममुख्यतः नारायणं च वदन्तीत्यर्थः ॥

**सर्वे घोषाः** इति घोषाणामर्थवत्त्वं श्रुत्या प्रसाध्य घोषविशेषाणां विशेषत एतन्मन्त्रोक्तानामर्थविशेषमाह, कथमिदं सर्वं निर्मूलमुच्यते इत्याशङ्क्या उजेर्यपण्डितानां तुण्डे परिहासगर्भं प्रश्नचिह्नमनुलक्ष्य– **दध्नो मथनशब्द** इत्यादि । अन्तर्नादरूपत्वात् । अथवा, अन्तर्नाद एव स्वरूपं स्वभावस्तस्मात् । चकारो विनिश्चये । हेत्वर्थे च । **'चः पादपूरणे पक्षान्तरे हेतौ विनिश्चये'** इत्यभिधानम् । अपिनाऽन्येऽप्यन्तर्मथनशब्दाः । **च** यस्मात् दध्नो मथनशब्दः भीषकत्वं वक्ति, न यस्यकस्यचित् भीषकत्वं प्रकृतिरुच्यात्, किन्तु च निश्चयेन प्रकृतीश्वरस्य हरेरेव दुर्जनभीषकत्वं वक्तीति । एवमन्येऽन्तर्मथनशब्दा अपीति ज्ञातव्यमित्यर्थः । पात्रस्यान्तरेव गुळ्गुळ् इति शब्दः हरिः दुष्टान् भीषयतीति वक्ति । **अन्तर्नादो हि भीषणेऽर्थे** वर्तते । तदेतत् प्राणिलोके प्रसिद्धमिति हिनाऽऽह । कुक्कुरोऽपि हि क्रुद्धोऽन्तरेव गुर्गुरिति बुक्कति । **एवं धिक्कारसहितं** भीषकत्वं **हरेर्वदेत्** । भीषकेण दृष्टिपातमात्रेणासुराणामसून् हरतीति हरिरित्युच्यते । **धिकृतौ स्वरितो यतः** । **'नीचता स्वरितास्यार्थः'** इति चान्यत्र । नीचो हि धिकृक्रियते । वेदाभ्यासजडानामविदितमिदमीदृशं स्वराणामर्थवर्णनं शोभते गन्धर्वविद्यानिपुणस्य कर्णाटकसङ्गीतिजनकस्य भगवत्पादस्य ॥

**गजबृंहितमपि** भगवद्द्वेषिणां धिक्कारसहितं तेषां भीषकत्वं वदेत् । **जलाद्यैः**, द्रवद्रव्यत्वमादिपदार्थः । **युक्तं महामत्रं च** । यदा इतस्ततो नीयते तदाऽन्तर्नदति । **एतादृशं** धिक्कारसहितं भीषकत्वम् । पादभूषा च एतादृशमेवार्थं वदेत् । च यस्मात् तत्कृतं हरिणा कृतं धिक्कारं स्वरितो वदेत् । **कण्ठगशब्दवत्** । कण्ठगः शब्दविशेषः चुचु इत्येवंरूपः ध्वनिविशेषः यथाऽद्भुतत्वं हरेः वक्ति, तथा गृहगोधा पल्ली । पराऽपि वनगोधाऽपि । चकारेण अनुक्तानां चुचुन्दर्यादीनां ग्रहणम् ॥ ❋ ॥

—०—

अथ षष्ठी–

**[आ यत् पतन्त्येन्यः सुदुघा अनपस्फुरः ।**
**अपस्फुरं गृभायत सोममिन्द्राय पातवे ॥ ६ ॥ २ ॥]**

(ऋ.८.६९.१०; अथर्व.२०.९२.७.)

यच्च एन्यः नद्यः आपतन्ति तद्घोषश्चेन्द्रवाचकः–

'नदीसमुद्रघोषाश्च नादत्वाच्छ्रैष्ठ्यवाचकाः ।
'नादो हि श्रैष्ठ्यवाची स्यादेवं घोषाः परेऽपि च' इति च ॥

तदर्थं च नद्यः आपतन्ति–

'भूतादिभूतोऽम्बुनिधानमद्ध्ये भूत्वा हरिः सर्वहरोऽतिधाम्ना ।
'अगाधमम्भो विदधाति भस्म यो बाडबाग्निर्नृहरिर्विचिन्त्यः'
इति वैहायससंहितायाम् ॥

सुदुघाः सुष्ठ्वपां दोहनकर्त्र्यः । स्फुरणापगमनमासां नास्तीत्यनपस्फुरः, नित्यचलनस्वभावाः । अपगतस्फुरणत्वेन सोमं गृभायत । अचलत्वेन मनो वा ॥ ✻ ॥

अत्र प्रथमपादे षोळशित्वापादनाय व्यूहः करणीयः **'पतन्ति एनिय'** इति ॥

**आयन्तीति एन्यः नद्यः** । **यत् आपतन्ति** सघोषं प्रवहन्ति तदपीन्द्राय तत्स्तुतये । तत्र संवादमाह– **नदीसमुद्रघोषाश्चेति** । **नादत्वात्** उदात्तस्वरत्वात् । **श्रैष्ठ्यवाचीति** । **'उदात्तस्योच्चतार्थता'** इत्यन्यत्र । **परेऽपि** शङ्खभेर्यादिनादा अपि । **एवं च** एवमेव श्रैष्ठ्यवाचिन इत्यर्थः । **इति च** शब्दतत्वे ॥

अथवा नद्यः **यत्** यस्मै यदिच्छापूरणार्थं यत्पानार्थं **आपतन्ति** । तस्मै इन्द्राय तस्य इन्द्रस्य **पातवे** पातुम्, स्फुरः चलनम्, स्फुरणात् चलनात् अपगतं **अपस्फुरम्** । समृद्धं **सोमं गृभायत** । **ग्रह उपादाने** । हस्य भः । **'हृग्रहोर्भश्छन्दसि'** इति वार्तिकम् । ततः शायजपि । **'छन्दसि शायजपि'**(३.१.८४) इति पाणिनिः । गृभायत गृह्णीत उपायनीकुरुतेत्यर्थः ॥

तदर्थमित्यत्र स्मृतिसंवादमाह– **भूतादिभूत** इति । भूतानां समस्तजीवानां आदिभूतः कारणीभूतः । **'एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः'** इति हि भारते । महाभूतानां सम्भवादादौ प्रळयेऽपि भूतः । **'नासदासीन्नो सदासीत्'** इत्यादेः । भूतादिः स्वयं भूतः भूतिमांश्च । स्वयमेव भूतः सम्भूतो वा । **अम्बुनिधानमध्ये** प्रळयजलधिमध्ये **अतिधाम्ना** प्रखरतेजसा **सर्वहरो भूत्वा** हरिनामा बभूव । सर्वं हरतीति हरिः । तृतीयोऽतिशये । प्रळयकाले सर्वं जलं पीत्वा **भस्मसात्करोति** नाशयतीत्यर्थः । **'और्वः समुद्रवह्निः स्याद् बाडवो बडवामुखः'** इति हलायुधः । बडबा घोटकी । तस्या मुखमिव मुखमस्येति बडबामुखः । अत एव बाडबः । अस्य चत्वारि रूपाणि भवन्ति– वाडव इति, वाडब इति बाडव इति बाडब इति च । बडं बलिनमश्वं बाति इच्छतीति बडबा घोटकी । ब कामने । **'स्त्रीरूपो हयशीर्षवान् । तथैव वडवावक्त्रः'** इति महाभारततात्पर्यनिर्णये (२.२७) । अग्निः समग्राण्डनाशे नालमिति संहर्ता रुद्रः प्रळये कालाग्निर्बभूव । कालाग्निरपि ब्रह्मवाय्वोर्निग्रहणे न समर्थ इति स्वयं भगवान् वडवावक्त्रो बभूव ॥

अपां पानकृद् बाडबाग्निरिति यः पुराणेषु पठ्यते तत्र वस्तुतः वाडवाग्निस्थो नृहरिरेव विचिन्त्यः ॥

अध्यात्मम्– **अपस्फुरं** इतस्ततः स्फुरणरहितमेकाग्रं निश्चलं मनआख्यं **सोममिन्द्राय** परमेश्वरस्य नारायणस्य पातवे स्वीयतया स्वीकारार्थं गृभायत निगृह्णीत इति । पातवे, तुमुनर्थे छन्दसि तवेन् । तथाहि पाणिनिः– **'तुमर्थे से-सेन्-असे-असेन्-क्से-कसेन्-अध्यै-अध्यैन्-कध्यै-कध्यैन्-शध्यै-शध्यैन्-तवै-तवेङ्-तवेनः'** (३.४.९) इति । नित्त्वादाद्युदात्तत्वम् ॥ ✻ ॥

—०—

अथ सप्तमी–

**[यो व्य॒तीँर॑फा॒णय॒त् सुयु॑क्ताँ॒उप॒ दा॒शुषे॑ ।**
**त॒क्वो ने॒ता तदिद्वपु॑रु॒पमा॒ यो अमु॑च्यत ॥ ७ ॥]**

(ऋ.८.६९.१३; अथर्व.२०.९२.१०.)

व्यतीन्, विशेषेणाधिकान् देवान्, अफाणयत् विस्तारयामास । दाशुषे यजमानाय, तत्समीपे । 'फण विस्तारे' इति धातोः । सुयुक्तान् सुयोगरतान्–

'विशेषेणाधिकत्वेन व्यतयो देवताः स्मृताः ।
'नित्ययोगरताश्चैव नारायणपरायणाः ।।

'त एव चेन्द्रियात्मानस्तान् विस्तारयतीश्वरः ।
'मनआदीन्द्रियाणां तु शक्तिविस्तार एव हि ।
'विस्तारो देवतानां स्याद् भक्तेषु हरिणा कृतः ।।'

इति प्रकाशसंहितायाम् ।।

'चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत्' इति च श्रुतिः । 'स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्ण्णाभ्यां भूरि विश्रुवम्' इति च ।।

'न देवा यष्टिमादाय रक्षन्ति पशुपालवत् ।
'यं तु रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम्' इति च भारते ।।

तक्वो जगत्कर्त्ता । 'तक निर्म्माणे' इति धातोः । 'न वर्त्तवे प्रसवः सर्ग्गतक्तः' इत्यादिप्रयोगाच्च । नेता चाशेषस्य । तदेव वपुः सः । यत्तत् जगत्कर्त्तृनेत्तृरूपम्–

'देहदेहिविभागश्च न क्वचित् परमेश्वरे ।
'गुणतस्तद्विभागो वा नेह नानेति हि श्रुतिः' इति च पाद्मे ॥

'तद् विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद् विभाति' ॥

'सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः ।
'ज्ञानज्ञानः सुखसुखः स विष्णुः परमाक्षरः' इत्यादिश्रुतेश्च ॥

'विशुद्धविज्ञानमरीचिमालया विचित्ररत्नप्रकरप्रकाशया ।
'प्रकाशिताशेषजगत्स्वरूपया प्रभुः सदा ह्लादतनुर्विभूषितः'
इति पुरुषोत्तमसंहितायाम् ॥

उपमा उपमायाम्, उपमाविषये, अमुच्यत त्यक्तोऽभवत् । निरुपम इत्यर्थः–

'अल्पाक्षरेण शक्येऽपि वक्तुं बह्वक्षरं यदि ।
'उक्तस्याऽधिक्यमेवात्र निषेधेऽशेषतो भवेत्' इति च शब्दनिर्णये ॥

॥ * ॥

देवानां विशेषेणातिशयो नाम सृष्ट्यादिकर्मणि भगवदङ्गत्वम् । अपरोक्षज्ञानिनोऽतिशयवन्त इत्यतयः । धात्वर्थगर्भो ह्युपसर्गः । तेष्वपि विशिष्टा भगवत्परिवारभूता देवाः । ये भगवति सदा मनोयोगयुक्ताश्च, **नारायणपरायणा** इत्येतत् ॥

दाशुषे दात्रे यजमानाय । दाशत इति दाश्वान् । दाशृ दाने । अत एव पाणिनिः **'दाश्वान् साह्वान् मीढ्वांश्च'** (६.१.१३) इति त्रीनेतान् क्वसन्तान् निपातयामास । स्वभक्ताय यजमानाय तदनुग्रहायेति ॥

उपेत्यस्यार्थमाह– **तत्समीपे** । दाशुषः समीपे । यजमानेन्द्रियेषु तत्वाभिमानिदेवान् अफाणयत् विस्तारयामास इति । णिचि रूपद्वयम् फणयति फाणयतीति । **फण गताविति** पाणिनीयाः

पठन्ति । अतः प्राचीनं धातुपाठं पठति– **फण विस्तारे इति धातोरिति** । अत एव विस्तृता फटा फणेत्युच्यते फणयत्यात्मानं विस्तारयतीति । एतेन **फण गतौ** इति धातुपाठमूरीकृत्य फणति विस्तारं गच्छतीति फणेति निर्वदन्तः पाणिनीयाः परास्ताः । मूलधातुविस्मरणमूलमिदं निर्वचनम् । देवानां विस्तरणं नाम किमिति प्रमाणत एव स्फुटमाह– **विशेषेण** । सुष्ठु नित्यं युक्ताः योगरताः । **नारायणपरायणाः** । सर्वेऽपि देवा नारायणायनाः । तत्वाभिमानिनस्तु **नारायणपरायणा** इत्यर्थः । सर्वेऽपि नारायणायना अतयः । परायणा व्यतय इति वा । सर्वेऽपि नारायणायना युक्ताः । परायणाः सुयुक्ता इति च । **'सुयुक्तान्'** इत्यस्य व्याख्यानम्– **नित्ययोगरताश्चे**ति । सु नित्यम् युक्तान् भगवति मनोयोगयुक्तानिति । ध्यानयोगे रतानित्येतत् । आधिकारिकं कर्म, इन्द्रियाणां सतः पथश्चालनं च भगवन्नियोग इति, भगवत्पूजैवेति कुर्वन्तीत्यर्थः । एवकारेण व्यतीनां नित्ययोगरतत्वं नियतमिति । तेन पारिजातहरणादिषु विरोधाचरणमपि तेषां भगवन्नियोगनिर्वहणेन पूजारूपमेवेत्यर्थः । **त एव**, नित्ययोगता देवा एव इन्द्रियाभिमानिनश्च । इन्द्रियेष्वातताः, इन्द्रियाण्याप्नुवन्ति नियन्तुमिति वा **इन्द्रियात्मानः** । नायं देवानामेव शक्तिविस्तारः । किन्तु अर्थभेदविवक्षयाऽयं प्रयोगविशेष इत्याह– तु इति । **'तु भेदावधारणयोः'** इति यादवप्रकाशाचार्यः । शक्तिविस्तार इन्द्रियाणामेव । न सर्वथा देवानाम् । शास्त्रसम्प्रदायसिद्धमेतदित्याह– **हीति** । **'योगोऽपूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु'** इति मेदिनी । अत्र व्यतय इति इन्द्रियाभिमानिन एवोच्यन्त इत्याह– **त एवे**ति । तेषां विस्तारो नाम ज्ञानिनामिन्द्रियेषु तच्छक्तिविस्तार एवेत्याह– **भक्तेषु देवानां शक्तिविस्तारः हरिणा कृतः** ॥

**'चतुर्भिः साकम्–'** इत्यृग्वेदे (१.१५५.६) ॥

नामभिः नाम्ना भिन्नैः चतुर्भिः नतु स्वरूपतः । वासुदेवादिरूपैः साकं नवतिं व्यतीन् देवान् वृत्तमिव चक्रं अवीविपत् । **'विप परिवर्तने'** । परितः संसारे भ्रामयामास । ब्रह्मणा सह दश प्रजापतयः, मुख्यवायुना सह पञ्चाशन्मरुतः, एकादशरुद्राः, विष्णुना विना आदित्याश्चैकादश, अष्टौ वसव इति नवतिर्देवाः इत्येकः पक्षः । चतुर्नवतिदेवा इति पक्षान्तरम् । तद्विवरणं समग्रस्य मन्त्रस्यार्थविशेषादिकं चास्मत्कृततत्वप्रदीपटीकायां द्रष्टव्यम् । **इति श्रुतिश्च** एतमेवार्थमाह ॥

**'स मेन्द्रः–'** इति तैत्तिरीयोपनिषत् (१.७) ॥

सः इन्द्रः परमेश्वरः मां मेधया धारणशक्त्या अधीतस्य अविस्मरणरूपया स्पृणोतु बलयुक्तं करोतु । तत्तदिन्द्रियमानिद्वारा हे देव, अमृतस्य वेदस्य धारणो भूयासम् । शरीरं शास्त्रार्थचिन्तनविचक्षणं भवतु । जिह्वा मधुमत्तमा मधुरभगवद्गुणभाषिणी भवतु । **'मधुरादपि यन्मधुरं मधुरानाथस्य नाम तन्मधुरम्'** इत्युक्तेः । कर्णाभ्यां भूरि परिपूर्णं ब्रह्म शृणवानि । एतत्सर्वं तत्तदिन्द्रियदेवानां शक्तिविस्तारेण स्वयं भगवानेव करोतीत्यर्थः । **इति च** श्रुतिः ॥

अत्र देवानां शक्तिविस्तरणं नातीव स्फुटमिति भारतवचनमाह– **न देवाः** । भगवान् करोतीति श्रुतिराह । देवा इति भारतम् । तेन ज्ञायते भगवदनुगृहीता भगवता दत्तशक्तयो देवाः कुर्वन्ति, भगवांस्तैः सर्वं कारयतीति ॥

योऽफाणयत् स इन्द्रः परमेश्वरः तकः सकलजगत्कर्ता । ननु **तक हसने** इति पाणिनीयाः पठन्ति । तत्कथं तको जगत्कर्ता? अतः प्राचीनं धातुपाठं पठति– **'तक निर्माणे'** । तकतेः क्तप्रत्यये रूपद्वयम्– तक्त इति तक इति । एतेन पचतेरपि रूपद्वयं सम्भाव्यते पक्त इति पक इति च । कर्तरि क्तः । **'पचो वः'** (अ.सू.८.२.५५) इतिवत् **'तको वः'** इत्यपि पठनीयम् ॥

**'एना वयं पयसा पिन्वमाना अनु योनिं देवकृतं चरन्तीः ।**
**'न वर्तवे प्रसवः सर्गतक्तः किंयुर्विप्रो नद्यो जोहवीति'** (ऋ.३.३३.४)

इति समग्रः श्रुतिपाठः ॥

नदीविश्वामित्रसंवादरूपं सूक्तम् । तत्र चतुर्थी ऋक् नदीवचनम् । विपाट् शुतुद्रिश्च नद्यावृषिके । इन्द्रः परमेश्वरो देवता । तथाहि मन्त्रार्थः– एना एतेन पयसा जलेन पिन्वमानाः भूमिमार्द्रीकुर्वन्त्यः, **पिवि सेचने**, देवेन भगवता कृतं **योनिं** समुद्रं **अनुचरन्तीः** । यद्यपि द्वे एव नद्यौ । आत्मनि बहुवचनम् । **सर्गतक्तः** सर्गेसर्गे जगन्निर्माता, अस्माकं **प्रसवः** प्रसविता भगवान् **न वर्तवे** यथेच्छं वर्तितुं न ससर्ज । वर्तवे । **वृतु वर्तने** । तुमुनर्थे तवेन् । नित्त्वादाद्युदात्तं पदम्– **वर्तवे** । तस्मादस्माभिः समुद्राभिमुखमेव गन्तव्यम् । अथाप्ययं विप्रो विश्वामित्रः किंयुः किमिच्छन् अस्मान् जोहवीति आह्वयते?

न केवलं निर्माता किन्तु नेता नियन्ता चाशेषस्य । **तदेव तस्य वपुः** । भगवति शरीरशरीरिणो-र्भेदाभावात् । पुराणोदाहरणेन श्रुतिरप्युदाहृता भवतीति तदेवाऽऽह– **देहदेहिविभागश्च** । यथैका क्रिया द्व्यर्थकरी बभूव । **न क्वचित्** अवताररूपेष्वपि । गुणतः तस्य गुणिनः परमेश्वरस्य विभागश्च । सर्वसमर्थत्वात् तस्मिन् सर्वं सुघटमित्याह– **परमेश्वर** इति । इह नाना भिन्नं किञ्चन देहादिकं गुणादिकं वा नास्तीत्यर्थः । जगतीत्यर्थः किं न स्यात्? जगत्येव मग्नानां जगतीत्येवार्थः स्यात् । भगवन्मग्नमनसां इह भगवतीत्येव भवति । **'कुर्वन्नेवेह कर्माणि'** इतिवत् । नहि मन्त्रद्रष्टार ऋषयो जगन्मग्ना मन्त्रं पश्यन्ति । किन्तु भगवति लीनान्तःकरणाः । **इति च पाद्मे** । **'नेह नाना–'** इति श्रुतेः मायावाद्यभिमतमर्थं निरस्य भगवत्परतावर्णनं कृतमित्याधिक्यार्थे चकारः । **'तद् विज्ञानेन–'** (आथ.उप.२.९) इत्याथर्वणोपनिषदि । **विज्ञानेन** अपरोक्षरूपेण । **पश्यन्ति** अनुभवन्ति । आनन्द एव रूपमाकृतिर्यस्य ॥

**सद्देहः** निर्दुष्टदेहः चिन्मयदेहः । सन् ज्ञानरूपः देहोऽस्येति वा । देहगन्धोऽपि चिन्मयसुखा-भिन्नः । देहकान्तिरपि ज्ञानरूपा । सन् ज्ञानरूपः पराक्रमोऽस्य । द्विरुक्तिः सर्वग्राहिणी– **ज्ञानंज्ञानमिति** यदुच्यते तत्सर्वमस्य रूपमिति । सुखंसुखमिति यदुच्यते तत्सर्वमपि । पूर्णज्ञानः पूर्णसुख इत्यर्थः । स एव स इत्युच्यते– **'अकयप्रविसम्भूमसखहा विष्णुवाचकाः'** इति । स एव विष्णुरुच्यते । स एव अकारादिक्षकारान्तैः सर्वैरक्षरैर्वाच्यत्वेन रमते मुख्यार्थभूत इति **परमाक्षर** उच्यते । अक्षरात् परतः परत्वाच्च । अत एव रमायाः परः परमः ॥

विशुद्धविज्ञानानां मरीचिमालया विभूषितः । **'विज्ञानरोचिःप्रतिपूरितान्तःर्बाह्याण्डकोशम्'** इति स्मरणात् । कीदृश्या मरीचिमालया? **प्रकाशिताशेषजगत्स्वरूपया** । पुनः कीदृश्या? विचित्राणां रत्नानां प्रकरं समूहमपि प्रकाशयतीति तादृश्या । **आह्लादतनुः** ह्लादतनुर्वा । आनन्दस्वरूपः । सतामाह्लादकरी तनुर्यस्येति वा ॥

एवंविधोऽन्यो नास्तीत्याह– **उपमा** । **सप्तसु प्रथमा** इति सूत्रात् उपमा उपमायां उपमाविषये । ननु निरुपम इति वक्तव्ये कोऽयं द्रमिळानां प्राणायाम इत्यत आह– **अल्पाक्षरेण** । अल्पानि अक्षराणि यत्र तादृशेन वाक्येन पदेन वा वक्तुं शक्येऽपि, यत्र बह्वक्षरं वाक्यं पदं वा प्रयुज्यते **अत्र** तादृशे विधिवाक्ये **उक्तस्याऽधिक्यमर्थः** । **निषेधे** निषेधवाक्ये, यथाऽत्र, अशेषतो निषेधोऽर्थः । अशेषैरुप-

मानैर्विमुक्त इत्यर्थः । लोके तु अक्षराधिक्यं वक्तुरपाटवं दर्शयति । न तथा वेदइत्यर्थः । अपौरुषेयवचने कस्मिन्नपाटवमारोप्यते? ॥ ✻ ॥

—०—

अथाष्टमी–

**[अतीदु शक्र ओहत इन्द्रो विश्वा अति द्विषः ।**
**भिनत् कनीन ओदनं पच्यमानं परो गिरा ॥ ८ ॥]**

(ऋ.८.६९.१४; अथर्व.२०.९२.११.)

विश्वान् द्विषः अज्ञानपापादीन् अतीत्य शक्तो विष्णुः स्वभक्तानतिवहत्येव हि–

'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्' ।

'तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ।
'भवामि नचिरात् पार्त्थ मय्यावेशितचेतसाम्'

इत्यादिना प्रसिद्धमुशब्देनाऽह ।

द्विषोऽतीत्यतिशयेनाऽत्मानं प्रत्योहत इत्यतिशब्दद्वयार्त्थः । ओदनं उन्दतेः कर्म्म, अभिनद् भगवान् कानीनो बादरायणः, परः परात्मा, गिरैव पच्यमानं परिपाककाले–

'संश्लेषादोदनं कर्म्म पच्यमानं गिरैव हि ।
'अभिनद् भगवान् व्यासः स्वभक्तानामशेषतः'

इति व्याससंहितायाम् ॥ ✻ ॥

**'विश्वाः'** इति शाकल्यदर्शितः पदपाठः अयोगव्यवच्छेद एव, नान्ययोगव्यवच्छेदः इति सूचयन् स्वयं पाठान्तरं सूचयति– **विश्वानिति** । तेन विसर्गरहित एव पदपाठः । विश्वा भूतानीतिवत् । अन्त्यलोप इत्यर्थः । द्विष इति आन्तरा उच्यन्त इत्याह । अज्ञानमूलोऽहम्ममेत्यभिमानः । तेन पापं कर्म । ततश्च रागद्वेषावित्यादि । अतीत्य अतिगमय्य । **स्वातन्त्र्यस्नेहयोरन्तर्णीतणिच्** । स्वस्य स्वातन्त्र्यात्, भक्तेषु स्नेहाच्चेत्यर्थः । **'शक्नोतीति शक्रः । रक् । कित्वादन्तोदात्तत्वम् । इन्दतीतीन्द्रः । रन् । नित्वादाद्युदात्तत्वम्'** इति पाणिनीयाः । शक्तिदार्ढ्यात् उच्चानन्दत्वाच्च शक्रः । उन्नतैश्वर्यात् दृढानन्दत्वाच्चेन्द्र इति तत्ववादिनः । **अति ओहते** अतिशयेन वहति । इदिति एवार्थे । पुनरावृत्तिरहिततया वहनमेवातिशयो नाम । अन्तर्णीतणिचा दर्शितं भक्तवात्सल्यं स्पष्टं वदन्तीं श्रुतिमाह– **यमेवैष** इति (कठ.१.२.२३) । वृणुते भक्तत्वेन स्वीकरोति । स्वां तनुं विगतावरणं करोति मुक्तिदानेन । अस्मिन्नेवार्थे भगवद्वचनमाह (गीता.१२.७)– **तेषामहम्** । मृत्युमयं संसारमतीत्य स्थितानां तेषाम् । समुद्धर्ता । अतिशयेन वोढा । मय्यावेशितचेतसां तेषां मृत्युसंसारसागरादप्यहं समुद्धर्ता इति वा ॥

प्रसिद्धमिति उब्देनाऽह– **अतीदु** इति । स्वयं हिशब्देनाऽह– **अतिवहत्येव हि** । स्वपदान्येव वर्णयन् अतिशब्दद्वयस्य स्फुटमर्थभेदमाह– **द्विषोऽतीत्येति** । ओदनमिति पदं उन्दतेः **उन्दी क्लेदने** इति धातोः निष्पन्नम्, कर्मवाचकमित्यर्थः । **उन्दी क्लेदने श्लेषणे** चेति वक्तव्यम् । कुतः? श्रुतिप्रयोगादेव । धातुपाठः अपर्याप्तः । प्रयोगतोऽनुगन्तव्या इति वैयाकरणैरप्यभ्युपगतम् । तेन उनत्ति कर्तारं श्लिष्यतीति, ओदयति पुण्यपापाभ्यां श्लेषयतीति वा **ओदनं कर्म** । ओदनशब्दस्य यौगिको मुख्यार्थ एवायम् । **'ओदनमित्यनेन कर्मबन्धो लक्ष्यते'** इति वदन्तः परास्ताः । उद्यते भुज्यते इति वा ओदनं कर्म । **'कुरु भुङ्क्ष्व च कर्म निजं नियतम्'** इति हि भगवत्पादः । **अभिनत्** वियोजयामास । मोक्षोपयोगि पुण्यं कर्म न वियोजयतीत्यकारलोपेनाऽह ॥

कनीनः कानीनः । **'कन्यायाः कनीन च'** (४.१.११६) इति पाणिनिः । कन्याशब्दस्य कनीन इत्ययमादेशः, अपत्यार्थे अण् प्रत्ययश्च भवतीति सूत्रार्थः । तेन कन्यायाः अपत्यं पुमान् कानीनः । भगवान् बादरायणो न कस्याप्यपत्यम् । किन्तु लीलामात्रमेतदिति दर्शयितुं दीर्घलोपः । तदेतदाह–

**भगवान् कानीन** इति । तत्ववादे रतानामयमयन इति बादरायणः । बदरीवृक्षबहुले आश्रमे चायं गत इति च बादरायणः । बादर इति ज्ञायत इति बादरायणः । अत एव बादरिः शुकः । अत एव श्रुतिः **पर** इत्याह । **परमात्मा** इति व्याचख्यौ । गर्भवासादिमतो जीवात् परः विलक्षणोऽयं परमात्मेत्यर्थः । गिरा स्वाविष्कृतवेदैः पुराणादिना च पच्यमानं पाकोन्मुखं कर्माभिनत् । मन्त्रार्थं वदत् स्पष्टं स्मृतिवचनमाह– संश्लेषादिति । तेन मन्त्रोऽयं व्यासदेवत्य इत्युक्तं भवति ॥ ✻ ॥

—०—

अथ नवमी चरमा प्रज्ञातानुष्टुप्–

**[अर्भको न कुमारकोऽधि तिष्ठन्नवं रथम् ।**
**सपक्षन्महिषं मृगं पित्रे मात्रे विभुक्रतुम् ॥ ९ ॥ ३ ॥]**

(ऋ.८.६९.१५; अथ.२०.९२.१२.)

अर्भकइव स्थितः । नवं रथमध्यतिष्ठत् । कुमारकः कुत्सितमारकः । अर्भकइव सूक्ष्मदेहः पूवम्पूर्वं देहं परित्यज्य नवन्नवं देहमध्यतिष्ठज्जीवमादाय–

‘जीवदेहं परित्यज्य सह जीवेन चेश्वरः ।
‘जीवस्यान्यच्छरीरं च समुत्पाद्य विशत्यजः’ इति मान्यसंहितायाम् ॥

कुमारकइवार्भकः सूक्ष्मदेह इति वा । अर्भकः सूक्ष्मदेहोऽपि न कुमारक इति वा । सपक्षत् परिपक्वज्ञानादिकमकरोत् । महिषं महान्तं ब्रह्माणम् । मृगयन्तं स्वात्मानम् । पित्रे स्वस्मै मात्रे लक्ष्म्यै च विभुक्रतुं पूर्णज्ञानम् । पितृमातृविषये पूर्णज्ञानं पुनःपुनः पूरयामासेत्यर्थः–

'ज्ञानपूर्ण्णं विधातारं मोक्षदानेन केशवः ।
'स्वपुत्रं पूरयामास महिषं महतां महान्' इति प्रवृत्ते ॥ ✻ ॥

नेति निषेधार्थो लोके । उपमार्थश्च वेदे । तत्रेयं व्यवस्था– यदि परतो नञ् तत् पूर्वस्योपमानतामाह । तद् यथा– **मृगं न भीमम्** । मृगमिव भीममित्येवाऽह । यथा वाऽत्र– **अर्भको न** । अर्भक इवेत्याह । यदि पूर्वतो नञ् तत् परं निषेधति । तद् यथा– **'न वर्धते नो कनीयान्'** । वृद्धिह्रासयोरभावो ब्रह्मण इत्येवाऽह । यथा वाऽत्र **'न कुमारकः'** । न कस्याप्यपत्यमित्येवाऽह । सोऽयं यास्कादिभिरभिहितः पन्थाः । तर्हि कथं न कुमारकः कुमारक इव सूक्ष्मदेह इति? उत्सर्गोऽयमिति भगवत्पादः । न ह्यपवादोऽस्तीति उत्सर्गो न प्रवर्तते । बाहुलकेनैवोत्सर्गाणां प्रवृत्तिः । एवमेव वैयाकरणानां परिपाटी । तद् यथा– **'मन्त्रेष्वाङ्यादेरात्मनः'** (६,४,१४१) इति पाणिनिः पपाठ । **'मन्त्रेषु आङि परत आत्मन आदेर्लोपो भवति । त्मना देवेभ्यः'** इति वामनः । आङीति न वक्तव्यम् । अन्यत्रापि भवति । तद् यथा– **'मन्यते त्मनः'** । अत एव वार्त्तिककार आह– **'आङोऽन्यत्रापि दृश्यते'** इति । अथापि आङीत्याह । तेनावक्तव्येनोक्तेनेदं सूचयामास– यदाङि भूयांस ईदृशाः प्रयोगाः । अनाङि चाल्पीयांस इति । बाहुलकेनैव च छन्दसि सर्वविधीनां प्रवृत्तिः । तत एतद् भवति न कुमारकः कुमारक इवेति ॥

सर्वगतोऽपि जीवदेहे अर्भक इव सूक्ष्मदेहः स्थितः । **नवं रथं शरीरमधितिष्ठत्** अध्यतिष्ठत् इति । रोगादिना कुत्सितं पूर्वदेहं मारयन् । जीवस्य जन्मनिजन्मनि नवंनवं देहं निर्माय, **'त्वष्टा रूपाणि पिंशतु'** इति श्रुतेः, तत्र जीवेन सह स्वयमधितिष्ठति । सह तिष्ठन्नप्यधिकस्तिष्ठति । सार्वकालिकोऽयं नियम इत्यल्लोपः । अजः स्वयमजातोऽपि जात इव । जीवस्य पूर्वदेहं परित्यज्य जीवेन सहैव निष्क्रान्तः । तेन सहैवान्यन्नवं शरीरं विशति । सपक्षत् सम्यक् पपाच । कोऽयं जीवे पाको नाम? आह– **परिपक्वेति** । सर्वजीवानां गतिं पूर्वार्धे उक्त्वा जीवोत्तमे भगवदनुग्रहविशेषमुत्तरार्धेनाऽह । **सः पक्षत्** इति शाकल्यः द्वे पदे पठति । अनियताः पदपाठाः भवन्ति इत्युक्तम् । महिषं जीवेषु महान्तं चतुर्मुखम् । स्वात्मानं भगवन्तं मृगयन्तम् । पित्रे मात्रे सप्तम्यर्थे चतुर्थी । पितरि मातरि,

लक्ष्मीनारायणयोः विषये । इतरेभ्यो विशिष्टो भवतीति विभुः पूर्णः क्रतुः ज्ञानं यस्य तं विभुक्रतुं पूर्णप्रज्ञमित्यात्मानं कटाक्षयति । प्रथमावतारे मृगं हनुमद्रूपमिति । महितषड्गुणं भगवन्तं मृगयन्तमिति च । पित्रे मात्रे सीतारामयोरर्थे तयोः सेवार्थम् । विशिष्टो भवतीति विभुः, इतरासाधारणः क्रियत इति क्रतुः, समुद्रतरणाख्यं कर्म यस्य तम् । लक्ष्मीनारायणयोरर्थे इतरासाधारणं रणयज्ञाख्यं कर्म यस्य तं भीमसेनं च । कस्य ब्रह्मणः वायोश्च ईष्टे वर्तयति च ताविति केशवः । महान्तमिति ब्रह्मणः महत्त्वं सापेक्षमिति सूचयन् महतो ब्रह्मणोऽपि महानित्याह नारायणम् ॥ ❊ ॥

**॥ इति प्रज्ञातानुष्टुभामर्थनिर्णयः ॥**



**[तद् यथेह चेह चापथेन चरित्वा पन्थानं पर्यवेयात्, तादृक् तद् यथा प्रज्ञाता अनुष्टुभः शंसति ।]** (ऐत.ब्रा.अ.१६.खं.४.)

**यथास्थिताः प्रज्ञाताः । इतस्ततः संयोजनं विना यथास्थितशंसनं पथः प्राप्तिः ॥**

प्रज्ञाता अनुष्टुभः नव व्याख्याताः । किमासां विशिष्य प्रज्ञातत्वं नाम? आह– **प्रज्ञाता यथास्थिता** इति । मन्त्रान्तरसंयोजनं विना यथास्थिता एव षोळशिनः प्रसिद्धाः । इदमुक्तं भवति । किं छन्द इत्यनपेक्षितम् । उष्णिग् वा स्यादनुष्टुब् वा । षोळशित्वसम्पादनं सर्वथा कर्तव्यम् । तत् कथमत्र न्यूनाक्षराणामुष्णिगादीनां षोळशित्वमिति? तस्येदमुत्तरम् । अत्र पठितानां क्वचिन्न्यूनाक्षरत्वेऽपि षोळशाक्षरमन्त्रपठनफलदा भवन्त्विति प्रकृष्टेन भगवता अनुज्ञाता इति हेतोरेताः प्रज्ञातानुष्टुभ इति । **पर्यवेयात्,** अन्तेऽयमेव गन्तव्यः पन्था इति परीक्ष्य अव+इयात् अवगच्छेत् । अवगत्य इयात् गच्छेच्च । **इण् गतौ** । यथा यथास्थिताः प्रज्ञाता अनुष्टुभः ॥

अन्यत्र चरित्वा पन्थानं पर्यवेयात् इत्यस्य दृष्टान्ते समन्वयं दर्शयति– इतस्ततः संयोजनं विनेत्यादि ॥ ❊ ॥

**[स यो व्याप्तो गतश्रीरिव मन्येताविहृतं षोळशिनं शंसयेन्नेच्छन्दसां कृच्छ्रदावपद्या इत्यथ यः पाप्मानमुपजिघांसुः स्याद् विहृतं षोळशिनं शंसयेद् व्यतिषक्त इव वै पुरुषः पाप्मना व्यतिषक्तमेवास्मै तत् पाप्मानं शमलमप हन्त्यप पाप्मानं हते य एवं वेद ।]**

(ऐत.ब्रा.अ.१७.खं.४.)

व्याप्तो विशेषेणाऽपन्नः । अविहृतमसंसृष्टम् । कृच्छ्रादयथावस्थितशंसननिमित्ताद् दुःखादवाग्गतिं गतश्रीकतामेव न प्राप्नुयाम्–

‘विलोमः शत्रुजयकृत् संसर्ग्गः पापनाशनः ।
‘यथास्थितः श्रीकरः स्यात् स्वाध्यायः शंसनेऽपि च’ इति प्रवृत्ते ॥

‘गतश्रियः श्रियोऽहानिं पापहानिं परस्य च ।
‘संसर्ग्गश्छन्दसां कुर्य्याच्छ्रियो वृद्धिं यथास्थितः’ इति स्वाध्यायतत्वे ॥

‘किञ्चित्त्वे चोभयत्वे च संशये सदृशे तथा ।
‘इवशब्दः प्रयुज्येत न्यक्कारेऽपिच पण्डितैः’ इति च शब्दनिर्ण्णये ॥

अतो गतश्रीत्वसंशयेऽपि इत्यर्थः । इतस्ततो विशेषेण संहृतं संयोजितं विहृतम्–

‘पापानां व्यतिषक्तत्वाद् व्यतिषक्तं विनाशकम् ।
‘धनस्याव्यतिषङ्गेण व्यतिषङ्गोऽविनाशकः ।
‘सदृशं सदृशस्यैव यतः स्याद् प्रविनाशकम् ॥

'तथाऽप्यप्राप्तनाशस्य धनस्य बलवत्त्वतः ।
'शक्नुयान्न विनाशाय पापस्येच्छासमेधितम् ।
'संसृष्टं स्यात् विनाशाय नहीच्छा धनसङ्क्षये' इति स्वाद्ध्यायतत्वे ॥

व्यतिषक्तत्वं च मोक्षे विद्यत इत्युभयार्त्थ इवशब्दः । एवम्भूतेन शंसनेन पाप्मानमपहन्ति । शमलं रागादिकं च । पापस्य पृथगुक्तेः—

'शमलं पापमुद्दिष्टं रागद्वेषादिकं तथा ।
'अपराधश्च शमलं मलं च शमलं विदुः' इति शब्दनिर्ण्णये ॥

य एवमुपास्ते सोऽपि पाप्मानमपहते—

'ऋक्षु संसृज्यमानासु प्रोच्यमानं जनार्द्दनम् ।
'पुंसंसृष्टस्य पापस्य निहन्तारं विशेषतः ॥

'तत्प्रसादेन मुक्तस्य पापासंसृष्टतामपि ।
'द्ध्यायन् कर्म्माणि कृत्वाऽपि मुच्यते सर्वपातकैः'

इति प्रवृत्ते ॥ ❋ ॥

**सयः** इत्येकं वा पदम् । **यः मन्येत स शंसयेदिति** वा । दोषकथनप्रस्तावे किमिदं व्याप्त इत्यनन्वितमुच्यत इति शङ्कमानमाह— **व्याप्तो विशेषेणाऽपन्नः** । विपदमाप्त इत्यपि शक्यं व्याख्यातुम् । तथाऽपि उपसर्गाणां क्रियान्वयित्वमिति वैयाकरणानां पक्षमाश्रित्येदमुदितम् । षोळशिशंसनेन विशिष्याऽपदं गत इत्यर्थलाभार्थं च । कथमाप्त आपन्नः? कथमापन्न इत्यापदं गतः? **पद गतौ** । आपन्न आगत इत्येवार्थः स्यात् । ननु धात्वर्थः उपसर्गबलादन्यत्र नीतः । तर्हि आपदं पन्न आपन्न इत्येवोक्तं भवति । तर्हि आपदं आप्त एवाऽपन्न इत्यवैहि । मन्त्रान्तरसंयोजनेन विहरणं संसृष्टम् ॥

कृच्छ्रादित्यस्यार्थमाह– **अयथास्थितशंसननिमित्ताद् दुःखादिति**। इतस्ततः मन्त्रवर्णानामन्विष्यान्विष्य संयोजनमेकं दुःखम् । अर्थज्ञानपूर्वकं शंस्तव्यमित्युक्तत्वात् परस्परमनन्वितानामिव स्थितानां अन्वयपूर्वकमर्थचिन्तनं द्वितीयं दुःखम् । यत्र पदानां मध्ये च्छेदः तत्र कथमन्वयनम्? एवमनर्थतया प्रतीयमानानामक्षराणां कथमर्थकरणमित्यपरं दुःखम् । तेन **नावपद्यै** नावाग्गतिं प्राप्नुयामिति । ननु वेदपठनेन कथमवाग्गतिः? अतः विवक्षितमर्थमाह– **गतश्रीकतामेवावाग्गतिम्** । न पुनर्नरकाद्य-वाग्गतिः । गतश्रीकताऽपि न दौर्गत्यम् । किन्तु श्रमजनितं गतशोभत्वमेवेत्यर्थः । **गतश्रीकतां न प्राप्नुयामेव** इति चान्वयः । तदिदमुक्तं मूले **नेत् नैव अवपद्या** इति । सः अविहृतं यथास्थितं षोळशिनं **शंसयेत्, शंसु स्तुतौ** । यजमानो होत्रा शंसयेदिति । स्वाध्याये स्वयं शंसेत् । स्वार्थे णिच् ॥

उक्तार्थे सन्दिहानानामुजेर्यपण्डितानां मुखे प्रश्नचिह्नं दृष्ट्वा तत्परिहारार्थं स्वयं प्रहसन्नाह– **विलोम** इति । विपरीतक्रमेण पठनम् । व्युत्क्रमपाठ इत्येतत् । विहितं क्रमं लुनाति छिनत्तीति विलोमः । स्वाध्यायः शास्त्रशंसनादन्यत्र मन्त्रपाठः । शंसनस्य पृथगुक्तेः । विलोमः विपरीतक्रमोपेतः स्वाध्यायः । मुख्यतः स द्विविधो भवति– सूक्तस्यान्तादादिपर्यन्तम् । तथा मन्त्रस्य पूर्वोत्तरार्धयोर्विपरिणामेन च । एवमध्यायविलोमः, अनुवाकविलोम इत्यादि द्रष्टव्यम् ॥

सूक्तविलोमोऽपि द्विविधः– मन्त्रविलोमः, मन्त्रार्धविलोम इति । विलोमपाठः स्वस्य विलोमं विप्रतीपं शत्रुं जयति । पराजिताः शत्रवः तं विहाय पलायन्ते । **'विलोमस्तु प्रतीपे स्यात्'** इति मेदिनी ॥

के शत्रवः? पूर्वोक्ताः रागद्वेषादयः । बाह्यशत्रुजयार्थं प्रार्थने तदपि सम्भवति । संसर्गः संसृज्य-पाठः । तदाह– **पापनाशनः** ॥

कारणं तु वक्ष्यते । **यथास्थितः** स्वाध्यायः । **श्रीकरः** ब्रह्मवर्चसकरः । स्वाध्याय इति सप्तम्यर्थे वा । सप्तसु प्रथमेति सूत्रात् । शंसने यज्ञे शस्त्रशंसनेऽपि एवमेव । च एवार्थे ॥

अपूर्वं फलविशेषमाह– गतश्रिय इति । गता कारणदर्शनेन गता भविष्यतीति निश्चिता श्रीर्यस्य । **'एष्यत्तु निश्चितं यत् तदतीतत्वेन भण्यते'** इति वचनात् । पूर्वकर्मवशात् कर्मसिद्धान्तरीत्या प्राय-श्चित्तादिना निवारयितुमशक्यमपि श्रियोऽपगमनं निवारयति संसर्गपाठ इत्यपूर्वं महिमान्तर-

मनेनाऽह । **श्रियः अहानिं** अपगमनाभावम् । **परस्य** अगतश्रियः केवलं **पापहानिं** कुर्यात् । **यथास्थितः** पाठः अगतश्रियः **श्रियो वृद्धिं कुर्यात्** ॥

गतश्रीरिव इत्यत्र प्रकृतमर्थं वक्तुमादौ इवशब्दस्यार्थविशेषानाह– **किञ्चित्त्वे** । यथा पूर्णमिव सरः । किञ्चित् पूर्णम् । इतोऽपि किञ्चित् पूरणीयमित्यर्थः । **उभयत्वे** यथा– **य इह नानेव पश्यति** । भेदमभेदं च पश्यति । विरुद्धार्थद्वयवचनमुभयत्वम् । इवशब्दशिरस्कस्य योऽर्थः तद्विरुद्धार्थसाहित्यमित्येतत् । परस्परविरुद्धयोर्द्वयोरर्थयोः सामानाधिकरण्यम् । यथा वा– सुन्दरीव कन्या । क्वचित् सुन्दरी । क्वचिदसुन्दरी च । **संशये यथा**– अत्रैव गतश्रीरिव । यथा वा– क्षेममिव । सन्दिग्धं तस्य क्षेममित्यर्थः । **सदृशे यथा**– नळिनमिव नयनम् । **न्यक्कारे यथा**– पण्डित इव । न्यक्कृतोऽयं पण्डितः । यथा वा न्यक्कारे– अयं पतितोऽपि ब्राह्मण इव । तिरस्कारपात्रमित्यर्थः । पण्डितैः **प्रयुज्येत** प्रयुज्यते । **पण्डितैः न्यक्कार** इति वा । एतेषु पञ्चस्वेवार्थेषु इवशब्दः प्रयुज्येत । प्रयुक्तोयुज्येत । षष्ठमर्थं न शुश्रुमेत्यर्थः । तेषु प्रकृतापेक्षितमर्थमाह– **अत** इति । इवशब्दस्य एवमर्थकत्वात् । प्रायः गतश्रीः स्यामेवेति संशयप्रकारः । पूर्वमविहृतमसंसृष्टमित्युक्तम् । अतः व्यतिषक्तमिति संसृष्टमुच्यते । विहृतमिति च । पृथक्कर्तुमशक्यतया सक्तानि अतिसक्तानि पापानि पुण्यानि च । धनं पृथक् पेटादिषु तिष्ठति । जननान्तरेऽप्यनुवर्तमानानि पापानि पुण्यानि च व्यतिषक्तानि । धनं तु नातिसक्तम् । नापि विषक्तम् । व्यतिषक्तमेव व्यतिषक्तं नाशयतीति शास्त्रनियम इत्याह– **पापानामिति** । ननु पुण्यस्यापि व्यतिषङ्गपाठेन नाशः स्यादित्यत आह– **तथाऽपि** । अप्राप्तनाशस्य । **'प्राप्तं लब्धे समञ्जसे'** इत्यभिधानम् । **समञ्जसं** न्याय्यं युक्तमित्यर्थः । नहि धननाशं कोऽपीच्छति । अनेन शंसनेन निःस्वो भूयासमिति यदि सङ्कल्पयति तदा नश्येदेव । तथा च नाशेच्छासमेधितं व्यतिषक्तत्वं नाशकारणमित्यर्थः ॥

**व्यतिषक्त इव वै पाप्मना पुरुषः** इत्यत्र इवशब्दार्थमाह– **उभयार्थः** । मोक्षेऽविषक्तः संसारे विषक्त इति । **पाप्मानं शमलमपहन्तीति** पुनरुक्तमिति भाति । अत आह– **शमलं रागादिकं च** । तत्र निर्णायकमभिधानमाह– **शमलं पापमुद्दिष्टम्** । रागद्वेषादिकमान्तरं मलम् । बाह्यं मलं च शमलमुच्यते । का निरुक्तिः । शमं मनःशान्तिं लाययतीति । एतेन पापरूपशमलम् इति व्याख्यान् सायणः, **'पाप्मानमिति स्वपदं व्याचष्टे– शमलमिति'** इति षड्गुरुशिष्यश्चापास्तौ । होता यजमानस्य पाप्मानं

हन्ति । य एवं वेद स आत्मनः पापमपहत इत्यात्मनेभाषा । वस्तुतस्तु न पाठः पापनाशनः । किन्तु पठितो भगवान् तत्तत्फलद इत्याह– **ऋक्षु संयुज्यमानासु** । **विशेषतः** पापनाशेच्छा-समेधितत्वरूपविशेषात् । अत एव पुण्यस्य पुंससृष्टत्वेऽपि न तन्निहन्ति । शंसनफलं मोक्ष-पर्यन्तमित्याह– **मुक्तस्य सर्वथा पापासंसृष्टतामपि तत्प्रसादेन** इति **ध्यायन्** । अत एव जनन-मर्दयतीति जनार्दनमित्याह । बन्धकानि कर्माणि कृत्वाऽपि । **पाप्मानमपहत** इत्यस्य विवरणम्– **मुच्यते सर्वपापकैः** ॥ ❊ ॥

**॥ इति फलवाचिखण्डार्त्थनिर्ण्णयः ॥**

—०—

## नचैवमादिवाक्यानां स्वार्त्थे प्रामाण्याभावः । सिद्धार्त्थे प्रामाण्यस्य साधितत्वात् । अविरोधाच्च । नच बह्वर्त्थेषु तात्पर्य्यकल्पने कल्पना-गौरवम् । वचनेनैव प्रतीयमानत्वादर्त्थस्य कल्पनाभावात् । नच वाचनिकार्त्थस्तात्पर्यार्त्थ इति विशेषः । तन्मानाभावात् । यत्र वाचनिकादन्य-स्तात्पर्य्यार्त्थः प्रतीयते लौकिकवाक्येषु न तत्र साक्षात् वचनं बोधकम् । वचनलिङ्गाऽनुमा हि सा । विरोधादमुख्यवृत्तिर्वा, आप्तत्वनिश्चये । आप्तत्वा-निश्चये प्रमाणमेव न भवति । वेदवाक्यस्य तु वाचनिकार्त्थं विना नैवान्यो युज्यते । वाचनिकानां तु बहूनामप्यविरोधे स्वीकार्य्यता ॥

अथार्थवादो व्यर्थवाद इति मीमांसकानां पुच्छावलम्बिनां उजेर्यपण्डितानां भ्रमं वारयन्नाह– **नचे-**त्यादि । **एवमादिवाक्यानाम्**– **'इन्द्रो वा वृत्राय वज्रमुदयच्छत् तमस्मै प्रावहत् । तमभ्यहनत् सोऽभिहतो व्यनदत् । यद् व्यनदत् तन्नानदं सामाभवत्'** इत्यादीनां उक्तवक्ष्यमाणानां कार्यं विना केवलसिद्धार्थबोधकानां वाक्यानाम् । स्वार्थे वाचनिकेऽर्थे । किन्तु प्राशस्त्येऽर्थे । यस्मात् प्रशस्तं तस्मात् नानदं साम स्तुहि इत्यादि । मन्त्रदेवत्या हि मीमांसका निरीश्वराः । सिद्धोऽर्थो देवतादिः ।

तेषां प्रामाणिकत्वस्य अस्माभिः साधितत्वात् महानाम्नीनामर्थनिर्वचनमिषेण । तत एव च **वाक्यानां प्रामाण्यस्य च साधितत्वात्** अत्र, अन्यत्र चानुव्याख्यानादौ । भट्टमतानुयायिनश्चैतदभ्युपयन्ति ॥

**'नान्यः पन्था अयनाय विद्यते'** इति ज्ञानप्रशंसायाम् । **'कुर्वन्नेवेह कर्माणि जिजीविषेत्'** इति कर्मप्रशंसायाम् । **'यावज्जीवमग्निहोत्रं जुहोति'** इति च । अत एवेदृशवाक्यानामप्रामाण्यमाचष्ट मायावादभाष्यकारः ॥

**'विश्वाधिको रुद्रः'** इत्यप्युच्यते । **'यदरोदीत् तद् रुद्रस्य रुद्रत्वम्'** इति च । एवंविधानां वाक्यानां परस्परविरुद्धानां कथं शक्यं स्वार्थे प्रामाण्यमभ्युपगन्तुम्?

नह्यनुन्मत्तः कोऽप्येवं ब्रूयात् । अत एवाऽह जैमिनिर्मुनिः– **'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्'** (जै.सू.१.२.५) इति । एवं जैमिनिवचनविरोधाच्च स्वार्थे प्रामाण्याभावं शङ्कमानं प्रत्याह– श्रुतीनां परस्परमविरोधात् । जैमिनिसूत्रेणाविरोधाच्च नेदं युक्तम् ॥

ननु ज्ञानकर्मणोः प्रशंसायां परस्परविरोध उक्तः । तत्कथमविरोधात् इति प्रतिज्ञामात्रेण परिजिहीर्षसि? न भोः । श्रुत्यैव विरोधपरिहारात् । तथाहि समन्वयश्रुतिः– **'कर्मणा ज्ञानमातनोति, ज्ञानेनामृतीभवति'** इति । रुद्रोऽरोदीदिति यथाश्रुत एवार्थः । विश्वो वायुर्ब्रह्मा वा । तस्मादप्यधिको रुद्रो नारायण इत्यविरोधाच्च । **'रुद्रो बहुशिरा बभ्रुः'** इति विष्णुसहस्रनामसु । **'रुजं द्रावयते यस्माद् रुद्रस्तस्माज्जनार्दनः'** इति च पौराणं वचः । रुद्र इत्यग्निरुच्यते । रुद्र इति शिव उच्यते । रुद्र इति वायुरुच्यते । रुद्र इति नारायण उच्यते । योऽर्थो यत्र योग्यतादिमान् स तत्र गृह्यते इति को विरोधः?

अकारवाच्ये विष्णौ सर्वशब्दानां रोधाच्च । नच जैमिनिवचनविरोधः । आम्नायस्य भगवत्परिक्रियार्थत्वात् श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति, ये अन्यार्थं ब्रुवते तेषां तस्मिन्नर्थे अमुख्यार्थत्वम् । तादृशी श्रुतिः भगवदुपासनाविधीनां सहकारितया साधकस्य तत्र रुचिजननार्थं भगवन्महिमातिशयं स्तुयादित्यर्थः ॥

ननु तर्हि रुचिजननार्थं प्रशंसायां तात्पर्यं वक्तव्यम् । पुनः वाच्यार्थे तात्पर्यकल्पने कल्पनागौरवं स्यात् । तदपि भ्रममात्रमित्याह– **नचेति** । **'कृपू सामर्थ्ये'** इति भ्वादौ पठ्यते । कल्पते । दिवादा-

वपि पूर्वेऽपठन् । कल्प्यते । द्विविधा च कल्पना भवति । विद्यमानस्य कल्पना । अविद्यमानस्य कल्पनेति । तत्र अविद्यमानस्य कल्पनायां स्यात् कल्पनागौरवम् । एकस्य शब्दस्य बहवोऽर्था विद्यमाना एव प्रतीयन्ते । गौरिति धेनुरपि स्यात् । गौरिति भूमिरपि स्यात् । गौरिति वागपि स्यात् । श्लेषालङ्कारो हि वाचो भूषणम् । तत् किमत्र गौरवम्? नहि घटपटयोर्द्वयोः कल्पने कल्पनागौरवं स्यादिति कोऽप्यनुन्मत्तो ब्रूयात् ॥

अथवा नायं भ्वादेर्विषयः । नापि दिवादेः । **'कृप अवकल्कने'** इति चुरादौ पठन्ति । तस्येयं कल्पना । अवकल्कनमिति सङ्कल्पः भावना चोच्यते । देवताभ्यो हविः कल्पयति । सङ्कल्पयतीत्यर्थः । कल्पयति भावयति चिन्तयतीत्यर्थः । स यथा– मायावादिनो जगन्मायामयं कल्पयन्ति । तत्ववादिनो जगत्सत्यं कल्पयन्ति । एवं भावयन्तीत्यर्थः ॥

भावना नाम श्रद्धैव । सा च सती वा स्यादसती वा । यदि कोऽप्यसत् कल्पयिषीष्ट, स्यात् तदा कल्पनागौरवम् । विद्यमानमेव यदि कल्प्यते तद् गौरवमादधीत सतां संसदि । तस्मात् कल्पनागौरवमिति परेषां कल्पनाविलास एव । श्रवणमात्रेणार्थानां प्रतीयमानत्वात्, अविद्यमानस्य कल्पनाभावात् । **तन्मानाभावादिति** । तात्पर्यार्थ एव हि वाचनिकोऽर्थः । यत्र बहवो वाचनिकार्थास्तत्र तात्पर्यार्थेनैव वाचनिकार्थो हि निगम्यते । अत एवाऽऽभाणकः प्रवृत्तः– सकृदुच्चरितः शब्दः सकृदेवार्थं गमयतीति । सकृदुच्चरितः अनेकार्थः शब्दः यत्र वक्तुस्तात्पर्यं तमेकमेवार्थं गमयतीति । यथा गोपालं प्रति गां रक्षेत्युक्ते धेनुं रक्षेत्येवार्थो भवति । धेनुरेवाऽऽनीयते । राजानं प्रति गां रक्षेत्युक्ते पृथिवीं रक्षेत्येवार्थो भवति । यथा भोजनवेलायां सैन्धवमानयेत्युक्ते लवणमेवाऽऽनीयते । नाश्वः । यदि क्वापि जिगमिषुः सैन्धवमानयेत्याह अश्व एवाऽऽनीयते न लवणम् । एतेन ज्ञायते सकृदुच्चरितः शब्दः सकृदेवार्थं गमयतीत्ययं न्यायः लोकव्यवहारविषयः । न काव्यविषयः । नापि शास्त्रविषयः । अन्यथा काव्ये श्लेषस्यानवसर एव स्यात् । त्रयोऽर्थाः सर्ववेदेषु इत्यादिकमप्यसङ्गतं स्यात् ॥

गङ्गायां घोषः इति वदतः किं तात्पर्यम्? गङ्गातीरे घोष इति । अतस्तात्पर्यार्थ एव गृह्यते । न वाचनिकार्थः । असङ्गतत्वात् । कथं वक्तुरिदं तात्पर्यमिति निर्णीयते? आह– **वचनलिङ्गाऽनुमा**

**हि सा** । तद् यथा– अयं गङ्गायां घोष इत्याह । आप्तश्चायं न मृषा वक्तुमर्हति । तेन गङ्गाशब्दस्तीरवचनः । यथा वा– **'अहो पूर्णं सरो यत्र लुठन्तः स्नान्ति मानवाः'** इति । यदि सरः पूर्णम् । तदा न लुठन्तः स्नायुः । यदि लुठन्तः अस्नान् तर्हि न सरः पूर्णम् । अथापि पूर्णे सरसि स्नातुं मानवाः लुठन्तीत्याह । आप्तश्चायं कविर्न मृषा विरुद्धवचनं वक्तुमर्हति । तेन अपूर्णं सर इत्याह । इममेवाऽलङ्कारिकाः काव्यध्वनिरित्याचक्षते । इममेव विरोधालङ्कार इत्याहुरालङ्कारिकाः । यस्तर्कः कर्णयोराह्लादं जनयति तमेव ध्वनिं साहित्यरसिका अमंसतेति तत्ववादिनः ॥

एतेन **काव्यस्यात्मा ध्वनिरिति** वदन्तः आनन्दवर्धनादयो दत्तोत्तराः । अभिनवगुप्तादयश्च ॥

सर्वमिदं वक्तुराप्तत्वनिश्चये । यदि कश्चिदनाप्त उन्मत्तो वा ह्यो रात्रौ रम्भा मम गेहमागत्य मां रमयामासेति वदेत् तदप्रमाणमिति कूर्चान्तर्हसेदेव । न **'रम्भासदृशी काचिदागता'** इति अर्थान्तर-करणाय प्रयतनीयमित्यर्थः । यत्र सपदि बोधः तत्र नानुमा । किन्तु रूढलक्षणा वा गौणी वा वृत्तिरिष्यते । इयं लोकव्यवहारे व्यवस्था ॥

अथ वैदिकव्यवहारप्रकारमाह–

केवलोऽन्यः गौणलक्षणारूपः । लोके तु गङ्गायामिति केवला लक्षणा । न तत्र वाचनिकार्थस्य ग्रहणम् । वेदे तु योगरूढिभ्यां मुख्योऽर्थोऽस्त्येव । न **क्वापि लक्षणा** केवला । केवल उपचारो वा । मुख्यवृत्त्याऽर्थेऽवगते ततस्तदनुगुणतया गौणी वृत्तिरपि स्यात् । न स्वातन्त्र्येणेत्यर्थः । तद् यथा– ऐतदात्म्यमिदं सर्वम्, स आत्मा । त्वमप्यैतदात्म्यमसि इति मुख्योऽर्थः । तत् त्वम् असि इति त्रीणि भगवन्नामानीति महायोगलब्धः परममुख्योऽर्थः । सप्तसु प्रथमेति सूत्रात्– तेन त्वमसि, तस्मात् त्वमसि, तस्मिन् त्वमसि, प्रतृण्णभेदेन 'अतत् त्वमसि' इत्येते सर्वे वाचनिका मुख्यार्थाः । प्रत्यक्षरं भगवदर्थता चान्या । एवं वाचनिकार्थेषु सत्सु अन्येऽप्यमुख्यार्थाः तदनुगुणाः स्वीक्रियन्ते– तत्सदृशस्त्वमसीति सादृश्ये लक्षणया । नहि लोकवद् वेदेषु क्वापि केवललाक्षणिकोऽर्थोऽस्माभिरङ्गी-क्रियते । मीमांसका मायावादिनश्च केवललक्षणावादिनो वेदे न वयमित्यर्थः । एवं अहं ब्रह्मास्मीति ब्रह्मण्यहमस्मि इति मुख्यो वाचनिकोऽर्थः । पाणिनिरप्याह– 'सुपां सुलुक्' इत्यादि । **सर्वं खल्विदं ब्रह्म** पूर्णं खल्विदमिति मुख्योऽर्थः । अस्ति गौणोऽर्थो वेदेषु । अस्ति लाक्षणिकोऽर्थः । प्रायः

सर्वेऽपि प्रयोगप्रकारा वेदमूलाः । अथापि महायोगं महारूढिं च विना केवललक्षणा केवलगौणी च वृत्तिर्वेदे नास्तीत्युक्तं भवति । सर्वेषां पदानां वर्णानां च परममुख्यवृत्त्या भगवत्परत्वात् । **वाचनिकानामिति** । यथाऽग्निसूक्ते अग्निरिति वैश्वानर उच्यते । अग्निरिति प्राणाग्निरुच्यते । अग्निरित्यग्निनारायण उच्यते । विरोधे त्वन्यार्थता । तद् यथा– **'नारयणाद् ब्रह्मा जायते । नारायणाद् रुद्रो जायते'** इत्यादौ । तत्र ब्रह्मेति चतुर्मुख एवोच्यते । रुद्र इति पञ्चमुख एव । नञ्सहितः विनाशब्दः अविनाभावं वक्ति । **'न तदस्ति विना यत् स्यान्मया भूतं चराचरम्'** इतिवत् । मया विनाभूतं चराचरं नास्तीत्यर्थः । एवमत्रापि महारूढिमहायोगाभ्यां विनाभूता विरहिता केवललक्षणा वेदे नास्तीत्यर्थः । ननु कथं तर्हि **'यजमानः प्रस्तरः'** इति? तत्र यजमानप्रतिनिधित्वं प्रस्तरस्योच्यते । न रूढ्या । नापि योगेन । किन्तु केवललक्षणया । तदुक्तम्– **'यजमानप्रस्तरत्वं यथा नार्थः श्रुतेर्भवेत्'** इति । न भोः, अनधिगतभावोऽसि । तत्रापि 'यजमानगतः यजमाननामा भगवानेव प्रस्तरनामा सन् दर्भमुष्टिगतः । अतो युक्तं प्रस्तरस्य यजमानप्रतिनिधित्वम्' इति किल मुख्यार्थः । तस्माद् युक्तमुक्तम्– **'वेदवाक्यस्य तु वाचनिकार्थं विना नैवान्यो युज्यते'** इति ॥

'स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि' इति–

'वानात् सूतेर्द्देवनाद् वासुदेवो वासात् द्युतेश्छादनात् क्रीडया च । बलादसुत्वात् दातृतो वर्त्तनाच्च तं वासुदेवं प्रवदन्ति वेदाः' इत्यादि सौकरायणश्रुतौ ॥

मोक्षेऽपि सुप्तिरस्तीत्याशङ्कानिवृत्त्यर्थमेवान्यतरपदम् ॥

**'तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति'** इति बृहदारण्यकोपनिषत् (६.३.२२) । हृद्गतस्य भगवतः सकाशात् तदा जीवः सर्वान् शोकान् तीर्णो भवतीत्यर्थः । तदेति कदा? आह सूत्रकारः– **'स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि'** (४.४.१६) इति । स्वाप्ययः स्वापः । सम्पत्तिः मोक्षः । तदुभयापेक्षया तदेति पदं प्रयुक्तम् । उभयार्थत्वं उपक्रमोपसंहाराभ्यां स्फुटतरमाविष्कृतं हि इति । एवं सूत्रकारेण श्रुतिपदानामनेकार्थत्वमाविष्कृतम् । श्रुतिरप्यनेकार्थत्वं पुरस्करोतीत्याह– **वानात्** ।

वासुदेवशब्दार्थोऽयम् । **वा गतिगन्धनयोः** । वाति सर्वत्र गच्छतीति सर्वं जानातीति **वा** । केवलं धातुरूपम् । सर्वं जगत् प्रसूते इति **सु** । **षूञ् प्राणिगर्भविमोचने** । प्रळये स्वगर्भस्थान् प्राणिनः सर्गे बहिर्विमोचयतीत्यर्थः । दीव्यतीति **देवः** । **दिवु क्रीडाविजयव्यवहारद्युतिस्तुतिमोदकान्तिगतिषु** । एवं प्राञ्चः पेठुः । अर्वाञ्चः स्वप्नं मदं चाधिकं पठन्ति । वा च सु च देवश्च वासुदेवः इत्येकोऽर्थः । **'वस निवासे'** सर्वत्र वसतीति वासुः । **वसु आच्छादने** । सर्वं आच्छादयति व्याप्नोतीति वासुः । **'वासुर्नरायणपुनर्वसुविश्वरूपाः'**इत्यभिधानम् । **दिवु द्युतौ** । दीव्यतीति देवः । संसारे आत्मानं वासयत्याच्छादयति मोक्षे देवयति द्योतयतीति वा । वासुश्चासौ देवश्चेत्यर्थान्तरम् । छादयति व्याप्नोति आवृणोति तमसा अज्ञानतो वा, दीव्यति सृष्ट्यादिनेति वासुश्चासौ देवश्चेति अर्थान्तरम् । बलरूपत्वाद् वम् । **'सुवः सुबलरूपत्वात्'** इति हि स्मरन्ति । को धातुः? **वा गतिगन्धनयोरित्येव** । अर्दनं हि गन्धनम् । शत्रून् वाति अर्दयतीति वं बलम् । असुत्वात् सर्वप्रेरकत्वात्, अस्यतीति असुः । **असु क्षेपणे** । **क्षिप प्रेरणे** । भक्ताभीष्टं ददातीति दे । दो अवखण्डने । दुष्टानामिष्टस्य खण्डनाच्च दे । सर्वत्र वर्तत इति वः । वश्चासौ असुश्चासौ दे चासौ वश्चेति वासुदेव इत्यर्थान्तरम् । दिङ्मात्रप्रदर्शनमिदम् । एवं परश्शतमर्थाः शक्यमनुसन्धातुम् । धातुभेदात्, धातूनामर्थभेदाच्च । शब्दानां नानार्थतां प्रथयितुमेव मेदिनीकोशः प्रवृत्तः । **'त्रयोऽर्थाः सर्ववेदेषु दशार्थाः सर्वभारते । विष्णोः सहस्रनामापि निरन्तरशतार्थकम्'** इत्यादिकं चात्रानुसन्धेयम् ॥

एतदवधारणार्थमेव च महाभारततात्पर्यं प्राणायि भगवत्पादेन । न यमकचापलेनेत्यवगन्तव्यम् । इदमत्रावधेयम् । उजेर्यपण्डितानां श्रीमध्वविषये त्रिभङ्गी भ्रान्तिरासीत्– नायं यतिः काव्यरसिक इति, कर्मकाण्डे नातितरां कृतपरिश्रम इति, न पाणिनिनयेष्वधीतीति । तत्र प्रथमशङ्कायाः सद्योरचनपटुराचार्यः यमकबद्धेन महाभारततात्पर्येणोत्तरं ददौ । द्वितीयशङ्कां खण्डार्थनिर्णयेनैव खण्डयामास । तृतीयशङ्कानिरासार्थमस्मिन्नेव पाणिनीयनयमेव प्रायोऽनुसरन् बभाषे । यत्र पाणिनीयानां प्रक्रिया भगवत्पादस्यासम्मता तत्र वैयाकरणानां दौर्बल्यं च स्फुटं निर्दिदेश प्राचीनधातुपाठाद्युल्लेखेन । अर्थधातोः परस्मैभाषत्वं च प्रतनवैयाकरणानामभिमतमिति भगवत्पादाशयः । एतेन– **'प्रार्थयन्ति शयनोत्थितं प्रियाः' इत्यादि कृदन्तात् तत्करोतीति णिचि रूपम्'** इति वदन्तः माधवादयो दत्तोत्तराः । उभयपदत्वेनैव सामञ्जस्ये किमनेन द्राविडप्राणायामेनेति ॥

ननु सूत्रे अन्यतरापेक्षमिति विकल्प उच्यते । अयं वा, अयं वाऽर्थ इति । नतूभयापेक्षमिति अयं चायं चार्थ इति । अत आह– **मोक्षेऽपीति** । तदुक्तं बृहदारण्यकभाष्ये– **'उभयापेक्षमित्युक्ते मोक्षस्थसुप्तिरित्यपि मन्दस्याऽशङ्का स्यादतो मोक्षे सुप्तिरेव नास्तीति ज्ञापयितुमन्यतरापेक्षमित्युक्तम् । नत्वन्यतर एवार्थ इति'** इति ॥ ❋ ॥

'रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेत् ।
'तत्रापि यौगिको मुख्यः सर्वत्रास्ति स वैदिके ॥

'अनवस्थानिवृत्त्यर्थं यौगिके रूढिकल्पना ।
'ज्ञाते विशेषविज्ञानं व्यवहारोऽपि रूढितः' इति ब्रह्मतर्के ॥

वाचनिकमर्थं परित्यज्य नियोगार्थकल्पने श्रुतहानिरश्रुतकल्पनेति सर्वदोषाधिकौ तस्य व्यर्थमापद्येते । एवं च वदतो विधिशब्दा निरर्थकाः सिद्धार्था वा, सिद्धशब्दा वा स्वार्थे प्रमाणभूता इत्युक्ते किमुत्तरम्? नच कारणं किञ्चिद् वाचनिकानां बहूनामप्यर्थानां त्यागे । प्रतीयमाने तु विरोधे तदन्योऽर्थः स्वीकार्य्यो वाचनिक एव । सोऽपि वाचनिक एवेत्यपि तत एव सिद्ध्यति–

'मुख्यार्थानां च सर्वेषां तारतम्यं तु विद्यते ।
'तत्रापि परमो मुख्यो वाच्योऽशेषरवैर्हरिः ॥

'तत्तन्मुख्याविरोधेन तदन्यार्थस्य सङ्ग्रहः ।
'स्वतो मुख्यविरोधे तु त्याज्योऽन्योऽर्थोऽखिलेष्वपि ।
'इति सर्वत्र नियमः शब्दार्थज्ञानभूमिषु' इति च ॥

**नच क्रियायामेव प्रयोजनं न सिद्ध इति युक्तम् । ज्ञानमात्रेऽपि महाप्रयोजनदृष्टेः पितृजीवनादिवाक्ये ॥ ✻ ॥**

उक्तार्थे यो वेदं व्यास तस्य संवादमाह– **रूढियोगौ विना** । महारूढिमहायोगौ विना । विद्वद्रूढिर्महारूढिः । परिपूर्णो योगो महायोगः । तत्रापि यौगिकः मुख्यः । योगमूलत्वाद् विद्वद्रूढेः । उक्तं यास्केनापि– **'अक्षरसाम्यान्निर्ब्रूयात् न चैव न निर्ब्रूयात्'** इति । **सर्वत्रापि स** योगार्थः **अस्ति** वैदिकप्रयोगे । लोके तु केवलरूढ्या शब्दाः प्रयुज्यन्ते । यथा– घटः पटो यज्ञदत्तो देवदत्त इति ॥

पङ्कजादीनां भेकादिपरतया अव्यवस्थानिवृत्त्यर्थं रूढ्याऽर्थविशेषो निगम्यते । अथवा नैयायिकानां शाब्दबोधइव अनवस्थानिवृत्त्यर्थमित्येवार्थः, निर्वचनपरम्परानिवृत्त्यर्थमित्यर्थः ॥

अथवा गच्छतीति गौः । श्वाऽपि गच्छति । अश्वोऽपि गच्छति । गोमानपि गच्छति । एवमनिर्णये प्राप्ते सास्नादिमती गौरिति नियम्यते । गच्छन्त्यत्रेति भूमिरुच्यते । गच्छन्त्येनमिति स्वर्ग उच्यते । गमयत्यर्थानिति चक्षुरुच्यते । इत्येवं नियम्यते । रूढ्या वस्तुनि ज्ञाते विशेषविज्ञानं योगेन भवति । रूढितः व्यवहारो भवति । अतो वदन्ति– **'योगाद् रूढिर्बलीयसी'** इति । नहि गन्तृत्वं गर्दभेऽप्यस्तीति गर्दभो गौर्भवति । योगेन यस्या मलमूत्रादिकमपि उपयोगं गच्छति सा गौरिति विशेषार्थविज्ञानं भवति ॥

अग्निर्नारायण इति महारूढ्या व्यवह्रियते । नारस्यायनम्, अरायणो न भवतीति महायोगेन महार्थविशेषलाभः ॥

वचनतः प्रतीतं सिद्धपरमर्थं परित्यज्य लिङादिना कार्यताबोध एव सर्ववाक्यानां तात्पर्यमिति वदतां सर्वदोषाधिकौ दोषौ स्याताम् । कौ? **श्रुतहानिरश्रुतकल्पनेति** ॥

ननु प्रयोजनसद्भावादेवं कल्प्यते इत्यत आह– **व्यर्थम्** । एवं कल्पने किमपि प्रयोजनं नोत्पश्याम इति । प्रतीयमानं विहाय स्वमतान्ध्येन एवं विपरीतमुच्यते चेत् अन्योऽप्येवं प्रतिवादी तव प्रतिब्रूयात् । तदा किमुत्तरं ददासीति प्रतिबन्दीमाह– **एवं च वदतः** । चकारेण तस्य शास्त्रार्थेष्वपरिणतिं

परिहसति । **विरोधे तु** । यथा **अग्निनाऽग्निः समिध्यते** । तृतीयान्तो अग्निर्नारायणः । तद्विरोधात् प्रथमान्तेन हूयमानोऽग्निरुच्यते । सोऽपि **वाचनिक एव** । न लाक्षणिकः । **तत एव**, वाचनिकानामर्थानां बहूनां स्वीकारादेव । अथापि न साम्यमित्याह– **मुख्यार्थानां च सर्वेषाम्** । मुख्यार्थत्वेन साम्येऽपि मुख्यः मुख्यतरः मुख्यतमः इति तारतम्यरूपो विशेषो विद्यत एव । तत्र तत्तन्मुख्याविरोधेन तदन्यस्य मुख्यार्थस्य परिग्रहः । यथा– **'यं कामये तन्तमुग्रं कृणोमि'** इत्यत्र उग्र-शब्देन रुद्र उच्यते । स्वस्य **मुख्यविरोधे तु** । यथा **'विश्वस्मादिन्द्रः उत्तरः'** इत्यत्र पुरन्दर इत्यर्थ-करणे विश्वस्मादुत्तमः इति विरुद्धं स्यात् । अतस्तत्र नान्योऽर्थः । इन्द्र इति परमेश्वरो नारायण एव । एवमखिलेष्वपि एतादृशेषु वाक्येषु विश्वाधिको रुद्र इत्यादिषु । अस्यापवादो नास्तीति निगमयति– **इति सर्वत्र नियमः** ॥

कस्य शब्दस्य कोऽर्थ इति निर्णयस्थानेषु । **इति च ब्रह्मतर्के** । यात्रार्थं गतः पिता बहुकालं न प्रत्याजगाम । तदा पुत्रस्य संशीतिः समजनि– प्रायः पिता मे प्रमीत इति । तदा कश्चिद् यात्रिकः समागतो ब्रूते– 'प्रवसता मया बदर्यां ते पिता दृष्टः । मा शोचीः । कुशली जीवति ते पिता' इति । तदा पुत्रः परमानन्दमनुभवति । यः कयाऽपि क्रियया न लभ्येत । अतः सिद्धे प्रयोजनं सिद्धम् ॥ ❁ ॥

आह च स्वयं भगवान्–

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
'क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥

'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
'अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥

'यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
'स सर्व्वविद् भजति मां सर्व्वभावेन भारत ॥

'इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
'एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत' इति ॥

'श्रेयान् द्रव्यमयाद् यज्ञाज्ज्ञानयज्ञः परन्तप' इति च ॥

'द्ध्यानं त्वखिलकर्म्मभ्यो द्ध्यानाच्च ज्ञानमुत्तमम् ।
'न ज्ञानसदृशं किञ्चित् पुरुषार्त्थप्रसिद्धये' इति च प्रवृत्ते ॥

'दूरेण ह्यवरं कर्म्म बुद्धियोगाद् धनञ्जय' इति च ॥

'अशेषकर्म्मपूगोऽपि न विष्णुद्ध्यानलेशभाक् ।
'तच्च द्ध्यानं हरेर्ज्ञानकोट्यंशाय न पूर्य्यते' इति कर्म्मविवेके ॥

'तमेवं विद्वान् अमृत इह भवति नान्यः पन्था अयनाय विद्यते' इति श्रुतिः ॥

नच कर्म्ममात्रे पर्य्यवसितिर्वेदस्य । सुखज्ञानस्यैव प्रयोजनत्वात् । अतः सिद्धस्यैव प्रयोजनत्वम् । प्रशंसादीनां च तात्पर्य्यं वाचनिकार्त्थात्यागेनैव कथितं स्वयं भगवता– 'भाक्तं वाऽनात्मवित्त्वात् तथाहि दर्शयति' इति । तस्माद् विरुद्धवत् प्रतीयमानानि प्रशंसादीनि ज्ञानसहकार्य्यपेक्षया योजनीयानि । पुराणादीनां तु श्रुत्यादिविरोधे गौणोऽप्यर्त्थो युज्यते–

'कुहकं चेन्द्रजालं च विरुद्धाचरणानि च ।
'दर्शयित्वा जनं सर्वं मोहयाऽशु महेश्वर' इति वाराहे ॥ * ॥

**आह च स्वयं भगवान्** वासुदेवः सिद्धज्ञानस्यैव महाफलत्वं भगवद्गीतायाम् (१५.१६–२०) । द्वाविमावित्यादिभिः पञ्चभिः श्लोकैस्तत्ववादस्य सर्वसारः सन्दर्शितो भवति । अत एव भगवत्पादः श्लोकानेतान् बहुधा समुज्जहार । एतेनैतदाह– शास्त्रेषु भारतं सारः । भारते गीतिका सारः । गीतिकायां पञ्चदशोऽध्यायः । तत्रापीयं पञ्चश्लोकीति । अद्भुतमेतद् यत् पञ्चदशाध्यायान्ते स्वयमाचार्यशङ्करोऽप्याह– **'सर्वो हि गीताशास्त्रार्थः अस्मिन्नध्याये समासेनोक्तो न केवलम्, सर्वश्च वेदार्थ इह परिसमाप्तः'** इति ॥

स्वयं प्रत्यक्षतः पश्यन् भगवानाह– **द्वविमाविति** । **क्षरश्चाक्षरश्चेति** **द्वावेव पुरुषौ** मया सृष्टे लोके दृष्टाविति । पुरि सन्ति भवन्तीति देहभाजः पुरुषाः उच्यन्ते । नश्वरदेहभाञ्जि ब्रह्मादीनि तृणान्तानि **सर्वाणि भूतानि** जीवजातानि क्षरपुरुषशब्देनोच्यन्ते । यद्वा भूतानि इति भूतिमन्ति मुक्तियोग्यानि जीवजातान्युच्यन्ते । एतेन शरीरक्षरणवन्तः सर्वे संसारिण उक्ताः । नित्ये स्वरूपशरीरे, अत एव क्षरणरहिते पुरे स्थितः **कूटस्थः अक्षर उच्यते** । कूटे जीवजातस्य शिखरे तिष्ठतीति कूटस्थः । **'शृङ्गं च शिखरं कूटम्'** इत्यभिधानम् । कूटमाकाशम् । **'कूटं खं विदलं व्योम'** इत्यभिधानम् । कूटमिति निश्चलमुच्यते । पञ्चभूतेषु निश्चलत्वात् कूटमाकाशम् । **कूट सङ्कोचने** । कूटयति सङ्कुचितं भवति सर्वमत्रेति च कूटम् । कूटे आकाशे सर्वत्र तिष्ठतीति, कूटवत् तिष्ठतीति वा कूटस्थः सर्वगतः पुरुषः अक्षरदेहत्वादक्षरः । **अक्षू व्याप्तौ** । अक्ष्णोतीति सर्वगतत्वाच्च अक्षर उच्यते । कूटे चराचर-जीवसमुदाये त्रिगुणसमुदाये वा नियन्तुं तिष्ठतीति कूटस्थः । स पुरुषः श्रीतत्वादन्यो न भवितुमर्हतीति स्फुटम् । ब्रह्मान्तानामुक्तत्वात् । नारायणस्य चैतदुभयाश्रयत्वेन वक्ष्यमाणत्वात् । पुरि शयनात् स्त्रीपुंसावुभावपि पुरुषौ ॥

ननु भगवानपि पुरुषः? सत्यम् । **उत्तमः पुरुषस्तु** क्षराक्षरपुरुषाभ्यां उत्तमः । अत एव ताभ्या-मन्यः । **उदाहृतः** पौरुषेयापौरुषेयशास्त्रेषु । **अन्तराविश्य** बहिर्**बिभर्ति** । **ईश्वरः** क्षराक्षरभरणसमर्थः ।

सर्वान्तः तिष्ठन् तेषां व्ययेऽपि स्वयं न व्येति । ननु स कः? अहमेवेत्याह– **यस्मात्** । न केवलमुत्तमः, किन्तु नियन्ता चेति चकारेणाऽह । **लोके** पौरुषेयागमे ज्ञानिसमुदाये च । मोहोऽन्यथाज्ञानम् । तस्य दाढ्र्यं सम्मोहः । तदभाववान् असम्मूढः । मोह इति सक्तिः । सम्मोहोऽतिसक्तिः पुत्रदारगृहादिषु । तद्वर्जितश्च ॥

स सर्वं परिपूर्णं वेत्ति । मदनुग्रहाद् सर्वमपि वेत्ति । यस्मिन् विज्ञाते सर्वमिदं विज्ञातं स्यात् । सर्वभावेन सर्वप्रकारेण । भावो भक्तिः, परिपूर्णया भक्त्या च । वासुदेव एव सर्वं परिपूर्णं वस्तु इति भावेन । सर्वत्र भगवानस्तीति भावेन । सर्वं भगवानेव भावयतीति भावेन । भारूपे भगवति रतो भारतः । **'वायुर्वाव भरतः'** इति श्रुतेर्भरतो भीमसेनः । तस्यायमनुजो भारतः । अस्माभिरपि प्राणनारायणभक्तैर्भवितव्यमित्यनेनाऽह । वेदेषु गूढतया प्रतिपादितं शास्त्रम्, नारायणाख्यमन्तर्यामिस्वरूपम् । **'शास्त्रमन्तर्यामि'** इति पूर्वाचार्यवचनम् ॥

**शास्त्रं** तत्वबोधकं वचनं च । **तवोक्तमनघत्वात्** । योयोऽनघः ससोऽधिकारीति । अघमिति व्यसनमुच्यते । अघमिति दुरितमुच्यते । नहि व्यसनितया भगवद्भजनमिष्यते । नापि दुरितनिरतः गजस्नानभक्तिमाचरेदित्यर्थः । एतद् बुद्ध्वैव बुद्धिमान् । तेन ज्ञातव्यं ज्ञातं भवति । किमन्यैः क्षुद्रविषयैर्ज्ञातैः । तेन बुद्धं बोद्धव्यम् । कृतं च कर्तव्यमिति कृतकृत्यश्च । पुनश्च भारतेति तात्पर्यार्थम् । 'भागवतेषु रतो भव' इत्युपसंहरति च ॥

यत् क्रियते तत् ज्ञानपूर्वं कर्तव्यमिति ज्ञानसहकृतैव भक्तिर्भक्तिरुच्यते । नतु ताळकुट्टनमिति पूर्वोक्तं स्मारयन् तात्पर्यार्थं पुनराह– **श्रेयान्** (४.३३) । परं परमात्मानमेव निरन्तरं तपति चिन्तयतीति परन्तपः । श्रेयानिति श्रेष्ठ इत्यर्थः । **इति च ।** आह गीतायां स्वयं भगवान् । कर्म बाह्यम् । ध्यानमान्तरम् । तमेतं विशेषं तुनाऽऽह । **ध्यै चिन्तायाम्** । **ध्यै चिन्तायामिति** प्राचीनम् । तस्मात् अखिलकर्मभ्यो ध्यानमुत्तमम् । ज्ञानरहितध्यानात् ज्ञानमुत्तमम् । परोक्षज्ञानसहितध्यानाच्च अपरोक्षज्ञानमुत्तमम् । प्रसिद्धिः प्राप्तिः । पुरुषार्थानाम् । विशेषतः पुरुषार्थस्य मोक्षस्य । **इति प्रवृत्ते च** उक्तम् । दूरेण अतीव । बुद्धियोगः ज्ञानाख्य उपायः । **इति च** गीतायामाह भगवान् (१२.४४) । हरेरपरोक्षज्ञानस्य कोट्यंशः । 'तमेवं विद्वान्–' इति याजुषे पुरुषसूक्ते । **अयनाय** मोक्षगमनाय ॥

**आम्नायस्य क्रियार्थत्वात्** इति सूत्रेण भ्रान्तान् पुनरपि सन्दिहानान् तान् उजेर्यपण्डितान् दृष्ट्वा भगवत्पाद आह– **नचेति** । जैमिन्यादिवचनानि ब्रह्मसूत्राविरोधेन व्याख्येयानि । ब्रह्मसूत्राणां स्वयं भगवता **बादरायणेनोक्तत्वात्** । जैमिनेश्च तच्छिष्यत्वात् । नहि विधेयः शिष्यः गुरुवचन-विरुद्धं वक्तीति साम्प्रतम् । किमाह भगवान्– **प्रशंसादीनामर्थवादानाम्** । प्रशंसा स्तुतिः । **'वायुर्वै क्षेपिष्ठा देवता'**, **'य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन'**, **'अपाम सोमममृता अभूम'** इत्यादिः । **'इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः'** इत्यादि निन्दा । **'जनको ह वैदेह आसाञ्चक्रे'**, **'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः'** इत्यादिः परकृतिः । **'प्राणा अहंश्रेयसि व्यूदिरे'** इति पुराकल्पः । परस्य एकस्य अनुसर्तव्यस्य कृतिः परकृतिः । पुरा एवं बहुभिराचरितमिति पुराकल्पः । स्वयं भगवता बादरायणेन **'भाक्तं वा–'** (३.१.७) इति ब्रह्मसूत्रेषु । अनात्मविदां सोमपानेनामृतत्वं भागशः । देवानां यथाऽ-मरत्वम् । नह्येतावता देवानाममरत्वं न मुख्यवृत्त्येति वक्तुं युक्तम् । परम्परया वा– अपाम सोमम् । तेन ज्ञानवन्तो भवेम । ततश्च **अमृता भवेमेति** । सोमं पास्यामः । तेन ज्ञानं सम्पाद्य अमृता भविष्याम इति च । छन्दसि सार्वकालिको हि लुङ्– **'छन्दसि लुङ्लङ्लिटः'** (३.४.६) इति पाणिनिः । **'व्यत्ययमिच्छति शास्त्रकृदेषाम्'** इति च प्राचीनं सूत्रम् । अत्र लकारे कालव्यत्ययो व्यत्ययः । भगवत्परतायामभाक्तं वा । तथाह्येषा मुख्यार्थतापरिपाटी दर्शिता भागवततात्पर्यनिर्णये– **'सुरा हेरर्गुणाः प्रोक्तास्ते मे स्युरिति चिन्तनम् । सुरापानमिति प्रोक्तं तन्न कुर्यात् कथञ्चन । ब्राह्मणो विष्णुरुद्दिष्टः स नास्तीत्यभिचिन्तनम् । ब्रह्महत्या समुद्दिष्टा तां न कुर्यात् कथञ्चन'** इत्यादि (११.२१.४२) ॥

**तथाहि दर्शयति** इति सूत्रखण्डे दर्शितां श्रुतिं भगवत्पादो दर्शयामास भाष्ये– **'अमृतो वाव सोमपो भवति यावदिन्द्रो यावन्मनुर्यावदादित्यः'**, **'कर्मणा ज्ञानमातनोति । ज्ञानेनामृती भवति'**, **अथामृतानि कर्माणि यत एनममृतं नयन्ति'** इत्यादि ॥

**'वसंतिश्च वसंस्ततः । ज्योतिः षः प्राणरूपतः । आयज्ञेतश्चायजेतः'** इत्यादि चानुव्याख्याने । **विरुद्धवत् प्रतीयमानानि**, सोमपानमात्रेणामृतत्वाचीनि **'अपाम सोमममृता अभूम'** इत्यादीनि ।

सोमपानस्य मोक्षसाधनज्ञानसहकारित्वापेक्षया योजनीयानि । तानि ज्ञानसहकारीणीत्यपेक्षयेति वा । तस्मान्न क्वापि मुख्यार्थं विहाय केवललक्षणादि वेदे । **पुराणादीनाम्** । पौरुषेयवेदत्वमादिपदार्थः । यथा शिवादेः सर्वोत्तमत्वादिवचनम् । इन्द्रादिपर्यन्तेभ्यः सर्वेभ्यः उत्तमत्वं तत्र गौणार्थः । नहि तत्र वेदेष्विव प्रतिपदं प्रत्यक्षरं विष्णुपरत्वचिन्तनम् । कुतः? तेषां वचनानां दुर्जनमोहनादिष्वेव तात्पर्यात् । तदेतत् **'पुराणादीनां तु'** इति तुनाऽऽह ॥

अस्मिन्नर्थे पुराणवचनमाह– **कुहकमिति** । शिवं प्रति विष्णुवचनम् । **कुह विस्मापने** । कुहयते कुह्यतेऽनेन वा । दाण्डाजिनिकता । कपटवेषेण मुग्धानां विस्मयजननम् । अविद्यमानस्य विद्यमानत्व-भ्रमजननम् । चक्षुर्मानिना इन्द्रेण प्रसृतजालेन प्रावृतचक्षुरिव अविद्यमानं पश्यति येन तदिन्द्र-जालम् । **वेदविरुद्धाचरणानि** तिर्यक्पुण्ड्रधारणादीनि । स्वयं अवतारेषु मूलरूपेण च दर्शयित्वा । अथ त्वदनुयायिभिः भूतादिभिरृषिभिश्च **दर्शयित्वा** । यथा भगवदवतारस्य बुद्धस्य न विप्रलम्भकत्वं तथा वेदस्यापि न विप्रलम्भकत्वमित्यर्थः । ननु सायणादयो विप्रलब्धाः । नैष स्थाणोरपराधः । पुराणेषु न तथा । विप्रलम्भने तात्पर्यदर्शनादिति । प्राणनारायणयोः न कुहकिता । **'धाम्ना स्वेन सदा निरस्तकुहकम्'** । शिवादारभ्यैव कुहना । अतस्तमेव मोहयेत्याह । न प्राणम् । तमोमानित्वाच्च रुद्रस्य कर्तव्यमेतत् । तेन भगवदाज्ञाकरणेनैव महान् भवसीत्युल्लघयति– **महेश्वरेति** ॥ * ॥

**॥ इत्यर्थवादानां स्वार्थे तात्पर्य्यनिर्णयः ॥**

—०—

**[उद्यद् ब्रध्नस्य विष्टपमित्युत्तमया परि दधति स्वर्ग्गो वै लोको ब्रध्नस्य विष्टपं स्वर्ग्गमेव तल्लोकं यजमानं गमयति ॥]**

(ऐत.ब्रा.अ.१६.खं.४.)

**[उ॒द्यद् ब्र॒ध्नस्यं वि॒ष्टपं॑ गृ॒हमिन्द्र॑श्च॒ गन्व॑हि ।**
**मध्वः॑ पी॒त्वा सं॑चेवहि॒ त्रिः स॒प्त सख्युः॑ प॒दे ॥]** (ऋ.८.६९.७)

ब्रध्नस्य सूर्य्यस्य विष्टपं स्वर्ग्गं उद्गन्वहि इन्द्रोऽहं च । यत्तदिन्द्रगृहं ब्रध्न-विष्टपं मध्वः पीत्वा तत्र सचेवहि सुखमनुभवाव । सख्युः इन्द्रस्य त्रिस्सप्तस्थानेषु–

'एकविंशति दिव्यानि स्थानानि दिवि चक्रिणः ।

'वज्रिणो वाऽपि तद्भक्तैर्भुज्यन्ते तानि याज्ञिकैः'

इति प्रवृत्ते ॥ ✽ ॥

**'उद्यद् ब्रध्नस्य विष्टपम्–'** इति चरमयर्चा शस्त्रमाच्छादयति । तस्य फलमाह– **स्वर्गमेव तल्लोकं** होता **यजमानं गमयति** । तत् तेन, **'उद् यद् ब्रध्नस्य विष्टपम्'** इत्युत्तमया परिधानेन । उत्, यत्, इति प्रतृण्णम् । **यद् ब्रध्नस्य विष्टपम् तत् उद् गन्वहि** इत्यन्वयः । तदेतदाह– **ब्रध्नस्य सूर्यस्येति** । विशन्त्यत्रेति विष्टपमिति पाणिनीयाः । अत्र प्रविष्टं पातीति विष्टपम् । आश्रयस्थानम् । ब्रध्न इति सूर्य उच्यते । **'परस्य विष्णोर्धामत्वात् सूर्यो ब्रध्न इतीरितः'** इति स्मरणात् । **'ब्रध्नो हंसो खगो मित्रः'** इति हलायुधः । भक्तानां परमं धनमिति नारायणोऽपि ब्रध्नः । परमगुणानां धामत्वात्, वराणां ब्रह्मादीनां धामत्वात् धनत्वाद् वा । तेन सूर्यस्य सूर्यनारायणस्य च लोकमित्युक्तं भवति । **'असावादित्यो ब्रध्नः'** इति तैत्तिरीयसंहितायाम् । गृहमित्येतत् इन्द्रगृहमित्याह । पुरन्दरस्य वायोः परमेश्वरस्य नारायणस्य च गृहम् । **इन्द्रश्च** । चकारस्यार्थमाह– **अहं च** यजमानश्चेति । यद्यपीमामृचं होता पठति न यजमानः । अथापि यजमानस्य कृते पठितम् । अत एव **'यजमानं गमयति'** इत्युक्तं ब्राह्मणे । पुरन्दरेण प्राणनारायणाभ्यां सह उद्गन्वहि इन्द्रश्च अहं च उद्गच्छावः । तत्र मध्वः मधुनः । द्वितीयार्थे षष्ठी । मधुरं सोमं पीत्वा । **'मध्वित्यानन्द उद्दिष्टः'** इति स्मरणात् । दिव्यं सुखमनुभूय । अथ च मध्वनामा जीवकलामानी वायुः अहं च भगवद्गुणरसं पीत्वा सचेवहि सुखमनुभवाव । **षच समवाये** । सचेति चान्द्रम् । कस्य समवायः? यत्र यः समुचित-स्तस्य । प्रकृते सुखस्य । अथवा **षच सेवने** । सेवनं सुखानुभवः । तदिदमाह– **सुखमनुभवाव** । स्वर्गे कुत्र? **सख्युः** इन्द्रस्य वायोर्नारायणस्य च **त्रिःसप्तपदे** । समुदायैकवचनम्– **स्थानेषु** ॥

**'द्वादशमासाः पञ्चर्तवस्त्रय इमे लोकाः असावादित्य एकविंशः । तादृशे एकविंशस्थाने सचेवहि'** इति वदन्तः सर्वे भ्रान्ता इति प्रमाणवचनेनैवाऽह । **एकविंशति** । त्रिःसप्तेति एकविंशतिर्ह्युच्यते । नैकविंशः । सख्युः आदित्यस्य स्थानमित्युक्त्वा आदित्य एव स्थानमिति किं पुनरसङ्गतमाह? कानि एकविंशतिः स्थानानि? **एकविंशति दिव्यानि** क्रीडास्थानानि । नतु दिवि भवन्तीति । दिवीति पृथक्कथनात् । एकविंशतीत्यविभक्तिको निर्देशः । तद्यथा भागवते– **'सन्दधे निशितान् बाणानेकविंशति संयुगे'** (१०.६६.१०) इति । **चक्रिणः** नारायणस्य । ये विष्णुभक्ताः सन्तोऽपि वज्रिणि दत्तभराः ते वज्रिलोकं यान्ति । ये विष्णौ ते विष्णुलोकमिति व्यवस्थितविकल्पे वाकारः– **वज्रिणो वाऽपि** । अधमप्रसादलभ्योऽयं लोक इत्याह– **याज्ञिकैः** ॥

अथ ब्राह्मणखण्डार्थः–

**'उद्यद् ब्रध्नस्य विष्टपम्'** इत्याद्यया, उत्तमया अन्ते पठनीयया ऋचा शस्त्रं **परि दधाति** आच्छादयति समापयतीत्यर्थः । अन्यत् स्फुटम् ॥

एतावन्तं दीर्घमनेहसं षड्गुरुशिष्याद्युक्तमसङ्गतमेवार्थमच्छेद्याभेद्यं मन्यमाना उजेर्यपण्डिता अस्मिन्नपूर्वेऽर्थे साशङ्का मा भूवन्निति भगवत्पादः स्वोक्तार्थे प्रमाणवचनमुदाजहार । तेन ते भृशं जहृषुः । आसीना एवान्तरनृत्यन् । अस्मासु निरूढमविद्यागरळं परिहर्तुमेवागतोऽयमाहितुण्डिकः, धन्या वयमित्यन्तस्तुतुषुः ॥

**॥ इति परिधानीयमन्त्रार्थनिर्णयः ॥**

—०—

**[अपाः पूर्वेषां हरिवः सुतानामिति यजति सर्वेभ्यो वा एष सवनेभ्यः सन्निर्मितो यत् षोळशी तद् यद् अपाः पूर्वेषां हरिवः सुतानामिति यजति पीतवद् वै प्रातः सवनं प्रातःसवनादेवैनं तत् सन्निर्मिमीतेऽथो इदं सवनं केवलं त इति माद्ध्यन्दिनं वै सवनं केवलम् माध्य-**

न्दिनादेवैनं तत् सवनात् सन्निर्मिमीते ममद्धि सोमं मधुमन्तमिन्द्रेति मद्वद्वै तृतीयसवनं तृतीयसवनादेवैनं तत् सन्निर्मिमीते सत्रा वृषन् जठर आवृषस्वेति वृषण्वद् वै षोळशिनो रूपं सर्वेभ्यो वा एष सवनेभ्यः सन्निर्मितो यत् षोळशी तद् यदपाः पूर्वेषां हरिवः सुतानामिति यजति सर्वेभ्य एवैनं तत् सवनेभ्यः सन्निर्मिमीते सर्वेभ्यः सवनेभ्यः सन्निर्मितेन षोळशिना राध्नोति य एवं वेद' ॥]

(ऐत.ब्रा.अ.१६.खं.४.वाक्य.४)

[अपा॒ः पूर्वे॑षां हरिवः सु॒ताना॒मथो॑ इ॒दं सव॑नं॒ केव॑लं ते ।
म॒म॒द्धि सोम॒ं मधु॑मन्तमिन्द्र स॒त्रा वृ॑षञ् ज॒ठ॒र आ वृ॑षस्व ॥]

(ऋ.१०.९६.१३)

पूर्वान् प्रातःसवनगान् सोमानपाः । हरीनिन्द्रियाणि वर्त्तयति हरिभिर्वर्त्तत इति वा । इदं माद्ध्यन्दिनं सवनं ते केवलम् । अथो इत्यर्थान्तरम् । मधुमन्तं सोमं जठर आ वृषस्व सिञ्च, ममद्धि च । सत्रा अस्मत्त्राणेन सह ॥ ✻ ॥

पीतशब्दवत् । अपूर्वपानत्वात् तदेव पानं मुख्यत इति पीतशब्दः । इन्द्रस्य केवलत्वात् केवलं माद्ध्यन्दिनं सवनम् । ममद्धीति तृतीयसवनम् । तत्र हि मदो विशेषतो भवति, पूर्त्तेः । इति सवनत्रयरूपता षोळशिनः । वृषण्वत् वृष्ण इन्द्रस्य विशेषतः प्रियत्वात् । एवं चतूरूपता षोळशिनः । राध्नोति ऋद्धो भवति ॥ ✻ ॥

शस्त्रशंसनानन्तरं याज्यामन्त्रमाह– **अपाः** । **'पा पाने'** इत्यस्य लुङि रूपम् ॥

**'पूर्वेषां सुतानामपाः'** इत्यस्यार्थमाह– **प्रातःसवनगान् सोमानपा** इति । द्वितीयार्थे षष्ठीत्यर्थः । **'तेषां पाहि'** इतिवत् । **'सुप्तिङुपग्रहलिङ्गनराणाम्–'** इति हि स्मरन्ति । साध्वाह षड्गुरुशिष्यः– **'पूर्वेषां सुतानाम्, प्रातःसवनगान् सोमान् पीतवानसि'** इति । एतेन **'रसम्'** इति **शेषः'** इति व्यर्थं वदन् सायणः दत्तोत्तरः ॥

**हरीनिन्द्रियाणि** । हरन्ति विषयानिति इन्द्रियाणि हरीनाहुः । हरय इति च हयाः । अतश्च हरय इन्द्रियाणि । हरीन् इन्द्रियाणि तदभिमानिदेवान् वा तत्तत्कार्येषु प्रवर्तयति । हरिभिः इन्द्रियाभिमानि-देवैः सह नियमयन् वर्तत इत्यतो वा हरिवा । हरिशब्दो बहुदेवतावचनः– **'विष्णुचन्द्रेन्द्र-वातार्कयमाश्वांशुशुकाग्निषु । कपिभेकाहिसिंहेषु हरिर्ना–'** इति यादवप्रकाशाचार्यः । तेन बहवोऽर्थाः सम्पद्यन्ते ॥

हरिरिति विष्णुरुच्यते । हरिः स्वयं हृषीकेशः सन् सर्वत्र विहरन् सर्वं संहरन् सर्वं वर्तयतीति हरिवा । हरिरिति इन्द्र उच्यते । इन्द्रियदेवतायां विशेषतः पाणिदेवतायामिन्द्रे स्थित्वा तं वर्तयतीति हरिवा । हरिरिति वायुरुच्यते । त्वगृदेवतायां वायौ स्थित्वा तं प्रवर्तयतीति हरिवा । हरिरिति सूर्य उच्यते । हरिरिति चन्द्र उच्यते । तयोः स्थित्वा चक्षुषी श्रोत्रे च वर्तयतीति हरिवा । हरिरिति यम उच्यते । पायुदेवतायां यमे स्थित्वा तदिन्द्रियं वर्तयतीति हरिवा । हरिरिति प्राण उच्यते । सर्वेन्द्रियमानिनि प्राणे स्थित्वा सर्वेन्द्रियाणि प्रवर्तयतीति हरिवा । हरिरित्यंशव उच्यन्ते । सूर्यकिरणेषु स्थित्वा जगद् वर्तयन् हृषीकेशो हरिवा । हरिरिति शुक उच्यते । शुक इव स्वादुवचने शुके स्थित्वा भागवतं प्रवर्तयन् हरिवा । शुके वा पक्षिणि मनुष्यवाणीं प्रवर्तयन् हरिवा । हरिरित्यग्निरुच्यते । अग्नौ स्थित्वा वागिन्द्रियं प्रवर्तयन् हरिवा । हरिरिति कपिरुच्यते । रामावतारे हरौ कपिरूपे हनूमति स्थितः हरिभिः कपिभिः युद्धं प्रवर्तयामासेति हरिवा । हरिरित्यश्व उच्यते । कृष्णावतारे हरीन् अर्जुनरथस्याश्वान् प्रवर्तयतीति । हरिरिति सिंह उच्यते । सिंह इव वर्तत इति वर्तयतीति वा हरिवा हिरण्यकशिपुदमने । हरिरिति भेक उच्यते । भेकरूपी वरुणः ।

यो माण्डूकोपनिषदं ददर्श । रसनेन्द्रियमानिनि तस्मिन् स्थितो रसनेन्द्रियं प्रवर्तयतीति हरिवा । हरिरित्यहिरुच्यते । अहौ शयान एव सर्वत्र वर्तत इति हरिवा । **'शयानो याति सर्वतः'** इति श्रुतिः । एतत् सर्वं मनसि निधायाऽह– **हरिभिर्वर्तत** इति ॥

अपाः प्रातःसवने पीतवानसि । अथो अनन्तरं प्रवर्तमानं माध्यन्दिनं सवनं ते केवलम् । माध्यन्दिनसवने निष्केवल्यशस्त्रं केवलमिन्द्रस्य स्तुतिरूपमिति तत् सवनं तवेन्द्रस्य केवलम् । इन्द्र इति इन्द्रान्तर्यामी परमेश्वरः । तस्य केवलमसाधारणं सवनम् ॥

ममद्धि इति तृतीयपादात् पूर्वमपि अथो इत्यन्वेतव्यमित्यन्तरा पादयोराह । अथो माध्यन्दिनसवनानन्तरम्, तृतीयसवने मधुमन्तं अतिशयेन मधुरं स्वादुतमम् । अत एवातिशयानन्दजनकं सोमं जठरे आ **वृषस्व सिञ्च** । एतेन **आ** इति भिन्नं पदमित्याह । **वृषु सेचने** । सम्प्रसारणं आत्मनेभाषत्वं च **व्यत्ययो बहुलमिति** वचनात् । तेन वर्षेति वक्तव्यम्, वृषस्वेत्याह । सत्रा त्राणेन सह सत्राणम् । अन्त्याक्षरलोपः । ननु कस्य त्राणम्? आह– **अस्मत्त्राणेन** । त्वां सोमेन यजतामस्माकं सोमं गलपूरं पीत्वा तृप्तः सन्, अस्माकं ज्ञानभक्त्यादिदानेन त्रायस्वेत्यर्थः । **ममद्धि** च स्वयम् । हृष्टो भव । मयि तुष्टो भवेत्यर्थः । **मदी हर्षे** । माद्य इति वक्तव्यम् । ममद्धीत्याह छान्दस ऋषिः । मन्त्रद्रष्टार ऋषयो नहि पदान्यन्वेषमन्वेषं भाषन्ते । ते यद्यदभाषन्त सा दैवी वाणी बभूव । तेषां वाचमर्थोऽनुदधाव । वृषन् वृष्ट्या सेचक इन्द्र, अभीष्टसेचक नारायण ॥ ❁ ॥

अथ ब्राह्मणखण्डस्यार्थमाह । तत्र **पीतवद्वै प्रातःसवनमित्यस्यार्थमाह– पीतशब्दवत्** । अपाः इति पानार्थकशब्दवत् । **अपूर्वपानत्वात्** प्रथमपानत्वात् । इन्द्रस्य इन्द्रान्तर्यामिणः परमेश्वरस्य नारायणस्य केवलशब्दवाच्यत्वात् । केवलस्येदं केवलमिति माध्यन्दिनं सवनं केवलमित्युच्यते । केवलमिन्द्रदेवत्यानामेव मन्त्राणां शस्त्रे शंसनात् । समाधिकरहितः केवलः । समाधिकरहितभगवत्प्रतीकत्वात् देवेन्द्रोऽपि । **'इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः'** इति हि श्रुतिः ॥

**ममाद्धि** अतिशयेन माद्येत्यर्थः । शपः श्नुः । तृतीयसवने हि पानं समाप्यते । वृषा अस्यास्तीति वृषण्वत् । प्राशस्त्ये मतुप् । तदाह– **विशेषतः प्रियत्वात्** । चरणं च वृषशब्दवत् । **य एवं वेद** । विदित्वा च षोळशिनमाचचार स एव कर्मफलेन समृद्धो भवति । य एवं केवलं वेद सोऽपि ज्ञानभक्तिवैराग्यैरृद्धो भवति । **सवनत्रयरूपता** । सवनत्रयगतः त्रिरूपो भगवान् हि मुख्यतः सवनत्रयमित्युच्यते । तेन रूप्यते निर्मीयते इति सवनत्रयरूपता षोळशिनः । लोकत्रयगतः सवनत्रयपदेनोक्तः । अथ विशेषत इन्द्रगतश्चतुर्थचरणेनोच्यते । तेन चतूरूपेण रूपितः सन्निर्मितः षोळशीति ॥

तदयं ब्राह्मणखण्डार्थः–

अथ अपाः पूर्वेषामिति त्रैष्टुभेन शस्त्रयाज्यमन्त्रेणाध्वर्युर्जुहोति । सर्वेभ्यः सवनेभ्यः । सवनान्तर्यामी सवनभोक्ता सवननियन्ता नारायणो हि सवनशब्दमुख्यार्थः । सर्वं जगत् सुवत इति सवनशब्दवाच्यानि भगवतस्त्रीणि रूपाणि यान्युक्तानि तेन सम्यङ्निर्मितः षोळशी । **'सहयज्ञाः प्रजा सृष्ट्वा'** इति हि स्मरन्ति । **प्रातः सवनात्** प्रततत्वात् प्रातःसवनगतत्वाच्च । **माध्यन्दिनं सवनम्** । माध्यन्दिनसवनगतं भगवद्रूपम् । तृतीयसवनगतं भगवतस्तृतीयं रूपम् । एवं भूर्भूवःस्वरिति त्रीणि रूपाण्युक्तानि ॥

**राध्नोति** । **राध संसिद्धौ** । **'संसिद्धिः फलसम्पत्तिः'** इति क्षीरस्वामी । तदेवाऽह– **ऋद्धो भवति** । यज्ञफलसम्पत्त्या वर्धत इत्यर्थः ॥ ❊ ॥

**॥ इति याज्यामन्त्रार्थनिर्णयः ॥**

—०—

**[अथातश्छन्दांस्येव व्यति षजत्या त्वा वहन्तु हरय उपो षु शृणुही गिर इति गायत्रीश्च पङ्क्तीश्च व्यतिषजति गायत्रो वै पुरुषः पाङ्क्ताः पशवः पुरुषमेव तत् पशुभिर्व्यतिषजति पशुषु प्रतिष्ठापयति यदु गायत्री च पङ्क्तिश्च ते द्वे अनुष्टुभौ तेनो वाचो रूपादनुष्टुभो**

रूपाद् वज्ररूपान्नैति यदिन्द्र पृतनाज्येऽयं ते अस्तु हर्यत इत्युष्णिहश्च बृहतीश्च व्यतिषजत्यौष्णिहो वै पुरुषो बार्हताः पशवः पुरुषमेव तत् पशुभिर्व्यतिषजति पशुषु प्रतिष्ठापयति यदुष्णिक् च बृहती च ते द्वे अनुष्टुभौ तेनो वाचो रूपादनुष्टुभो रूपाद् वज्ररूपान्नैत्या धूर्ष्वस्मै ब्रह्मन् वीर ब्रह्मकृतिं जुषाण इति द्विपदां च त्रिष्टुभं च व्यतिषजति द्विपाद् वै पुरुषो वीर्यं त्रिष्टुप् पुरुषमेव तद् वीर्येण व्यतिषजति वीर्ये प्रतिष्ठापयति तस्मात् पुरुषो वीर्ये प्रतिष्ठितः सर्वेषां पशूनां वीर्यवत्तमो यदु द्विपदा च विंशत्यक्षरा त्रिष्टुप् च ते द्वे अनुष्टुभौ तेनो वाचो रूपादनुष्टुभो रूपाद् वज्ररूपान्नैत्येष ब्रह्मा प्र ते महे विदथे शंसिषं हरी इति द्विपदाश्च जगतीश्च व्यतिषजति द्विपाद् वै पुरुषो जागताः पशवः पुरुषमेव तत् पशुभिर्व्यतिषजति पशुषु प्रतिष्ठापयति तस्मात् पुरुषः पशुषु प्रतिष्ठितोऽत्ति चैनानधि च तिष्ठति वशे चास्य यदु द्विपदा च षोळशाक्षरा जगती च ते द्वे अनुष्टुभौ तेनो वाचो रूपादनुष्टुभो रूपाद् वज्ररूपान्नैति त्रिकद्रुकेषु महिषो यवाशिरं प्रो ष्वस्मै पुरोरथमित्यतिच्छन्दसः शंसति च्छन्दसां वै यो रसोऽत्यक्षरत् सोऽतिच्छन्दसमभ्यत्यक्षरत् तदतिच्छन्दसोऽतिच्छदस्त्वं सर्वेभ्यो वा एष च्छन्दोभ्यः सन्निर्मितो यत् षोळशी तद् यदतिच्छन्दसः शंसति सर्वेभ्य एवैनं तच्छन्दोभ्यः सन्निर्मिमीते सर्वेभ्यश्छन्दोभ्यः सन्निर्मितेन षोळशिना राध्नोति य एवं वेद ।] (ऐत.ब्रा.अ.१६.खं.३.)

विहृतपक्षे तु– 'पादान् व्यवधायार्द्धर्चशः शंसेत् पूर्वासां पूर्वाणि पदानि गायत्र्यः पङ्क्तिभिः पङ्क्तीनां तु द्वेद्वे पदे शिष्येते ताभ्यां प्रणुयादुष्णिहो बृहतीभिरुष्णिहां तूत्तमान् पादान् द्वौद्वौ कुर्य्याच्चतुरक्षरमाद्यं द्विपदाश्चतुर्द्धा कृत्वा प्रथमां त्रिष्टुभोत्तरा जगतीभिरुत्तमायाश्चतुर्थम-क्षरमन्त्यं पूर्वस्याऽद्यमुत्तरस्यानुष्टुभमतिच्छन्दस्स्ववदध्यात् द्वितीयतृतीययोस्तृतीययोः पादयोरवसानत उपदध्यात् प्रचेतनेति पूर्वस्यां प्रचेतयेत्युत्तरस्यामुत्तरास्वितरान् पादान् षष्ठान् कृत्वाऽनुष्टुप्-कारं शंसेत्' ॥ (आश्व.श्रौ.सू-अ.६.खं.३)

व्याख्याता महानाम्न्यः । व्याख्याताः प्रज्ञातानुष्टुभः । षड्गुरुशिष्येण प्रोक्तमपार्थमेव परमार्थं मन्यमाना उजेर्यपण्डिताः सम्प्रति महानिधिलाभेनेव परमानन्दसमुद्रेऽवगाढा इव भृशं विसिस्मयिरे । तावता तद्दिवसीयप्रवचनसमयः अवासितप्रायः । तेन भगवत्पादः प्रवचनमुपसञ्जिहीर्षन् वक्तव्यशेषं व्यतिषङ्गं विवरीतुं पर्याप्तमाश्वलायनश्रौतसूत्रमिति तद्वचनमेवोदाहृत्य खण्डार्थं सञ्चिक्षेप । सम्प्रति श्रौतसूत्रं तन्मूलभूतं ब्राह्मणं च किञ्चिदिव व्याख्यास्यामः ॥

अथ नानदसामसाध्ये षोळशिनि शंसनीयानां स्वतः षोळशिनां आनुष्टुभानां शस्त्राणां निरूपणानन्तरं गौरिवीतिसामसाध्ये षोळशिनि व्यतिषङ्गेन षोळशित्वं सम्पाद्य पठनीयं शस्त्रमुच्यते । कुतः? अतः सप्रयोजनत्वात् । शत्रुनाशनाख्यफलवत्त्वात् । सर्वेषामपि च्छन्दसामनुष्टुप्करणेन षोळशित्वसम्पादनार्थं छन्दसां परस्परं व्यतिषङ्गः करणीयः । तमेतं विहारमाचक्षते । कस्यचिन्मन्त्रस्य पादं मन्त्रान्तरस्य पादेन संयोज्य, तेन निष्पन्नमपूर्वमर्थमनुसन्धाय मन्त्रेषु विहरतीव विद्वान् । एकस्मान्मन्त्राद् विश्लिष्य मन्त्रान्तरे हरणाच्चेदं विहरणम् । तदिदमुक्तम्– **अथातश्छन्दांस्येव व्यतिषजति** । एवकारेण एवं विहरणेऽपि मन्त्रानुपूर्वीभङ्गेन न तेषां मन्त्रत्वभङ्ग इत्याह ॥

कानि छन्दांसि कैर्व्यतिषज्यन्ते? आह– **'आ त्वा वहन्तु हरयः', 'उपोषु शृणुही गिरः'** इति **गायत्रीश्च पङ्क्तीश्च व्यतिषजति ।** षोळशित्वसम्पादनार्थं हि व्यतिषङ्गः । तथा ययोश्छन्दसोर्व्यतिषङ्गेण षोळशित्वं सुसम्पादं ते विहर्तव्ये भवतः । गायत्री तावत् प्रथमप्राप्ता । तस्यां चतुर्विंशतिरक्षराणि । पूर्वार्द्धं स्वतः षोळशि । अष्टावक्षराण्यवशिष्यन्ते । पङ्क्तिश्चेत् गायत्र्या संसृष्टा संहत्य चतुःषष्टिरक्षराणि भवन्ति (२४+४०=६४) । तदेवमाभ्यां द्वाभ्यां संसृष्टाभ्यां द्वे अनुष्टुभौ भवतः । (३२x२=६४) । तेन षोळशित्वं सम्पादितं भवति । अत आह– **गायत्रीश्च पङ्क्तीश्च व्यतिषजति ॥**

ननु बहवो गायत्रा मन्त्राः । बहवश्च पाङ्क्ताः । अत्र केषामाहरणम्? आह– **'आ त्वा वहन्तु हरय'** इत्याद्या गायत्रीः, **'उपो षु शृणुही गिरः–'** इत्याद्याः पङ्क्तीश्च व्यतिषजति ॥

ननु **'आ त्वा–'** इति प्रथमे शतर्चिमण्डले षोळशं नवर्चं सूक्तम् । तथा **'उपो षु–'** इति द्व्यशीतितमं षड्ऋचम् । तत्रान्त्या जगती । अन्याः पञ्च पङ्क्तयः । तत् कथं नवानां पञ्चानां च व्यतिषङ्गः? न सर्वं सूक्तं विह्रियते किन्तु काश्चनैव ऋचः । काश्च ताः कियत्यश्चेति स्फुटमाह आश्वलायनः– **'आ त्वा वहन्तु हरयः'** इति तिस्रो गायत्र्यः', **'उपो षु शृणुही गिरः–', 'सुसन्दृशं त्वा वयं मघवन्–'** इति द्वे च पङ्क्ती' इति ॥ (आश्व.श्रौ.सू.६.२)

अयमर्थः– विहरणं न तावदेकयैकस्याः । न द्वयोर्द्वाभ्याम् । गायत्रीश्च पङ्क्तीश्चेति बहुवचनश्रवणात् । तिसृणां बोधनेन बहुवचनं पर्यवस्यतीति तावत्य एव गृह्यन्ते गायत्र्यश्च पङ्क्तयश्च । तथा च षोळशे सूक्ते तावदाद्यास्तिस्र ऋचः–

**आ त्वा वहन्तु हरयो वृषणं सोमपीतये । इन्द्र त्वा सूरचक्षसः ॥ (१.१६.१)**

**इमा धाना घृतस्नुवो हरी इहोप वक्षतः । इन्द्रं सुखतमे रथे ॥ (२)**

**इन्द्रं प्रातर्हवामह इन्द्रं प्रयत्यध्वरे । इन्द्रं सोमस्य पीतये ॥ (३)**

तिसृभिर्गायत्रीभिर्विहरणार्थं तिस्रः पङ्क्त्योऽपेक्षिताः । न तत्र पाङ्क्ते सूक्ते गायत्र इवाऽऽद्यानां तिसृणां क्रमेण ग्रहणम् । किन्तु द्वितीयामृचं विहाय प्रथमातृतीयाचतुर्थीनाम् । तदेतदाहाऽऽश्वलायनः– **'उपो षु शृणुही गिरो मघवन् इत्याद्या प्रथमा ऋगेका, ततः सुसन्दृशं त्वा वयं मघवन्– इत्याद्ये**

तृतीया चतुर्थी च द्वे पङ्क्ती' इति । ननु कुतोऽयं मन्त्रक्रमभङ्गः? शस्त्रं हीदं पठ्यते । न द्वितीयायां साक्षादिन्द्रशंसनमिति तदतिहाय प्रथमा तृतीया चतुर्थी च गृह्यन्ते–

**उपो षु शृणुही गिरो मघवन् माऽतथाइव ।**
**यदा नः सूनृतावतः कर आदर्थयास इद् योजा न्विन्द्र ते हरी ॥ (१.८२.१)**

**सुसन्दृशं त्वा वयं मघवन् वन्दिषीमहि ।**
**प्र नूनं पूर्णवन्धुरः स्तुतो याहि वशाँअनु योजा न्विन्द्र ते हरी ॥ (३)**

**स घा तं वृषणं रथमधि तिष्ठाति गोविदम् ।**
**यः पात्रं हारियोजनं पूर्णमिन्द्र चिकेतति योजा न्विन्द्र ते हरी ॥ (४)**

अष्टाक्षरैस्त्रिभिः पादैर्गायत्री । पञ्चभिः पङ्क्तिः । पङ्क्तेः प्रथमचरणश्चेद् गायत्र्या सह पठ्यते, उभे अनुष्टुभौ भवतः । अथापि नायं विहरणक्रमः । तर्हि कः क्रमः? आह सूत्रकारः– **'पादान् व्यवधायार्द्धर्चशः शंसेत् । पूर्वासां पूर्वाणि पदानि । गायत्र्यः पङ्क्तिभिः । पङ्क्तीनां तु द्वेद्वे पदे शिष्येते । ताभ्यां प्रणुयात्'** इति ॥

एकः पादो गायत्र्या एकः पङ्क्तेरिति तिसृष्वपि ऋक्षु पादान् व्यवधायार्धर्चशः शंसेत् । तेन षोळशित्वं सम्पन्नम् । तद् यथा लोके– **'विश्वं विष्णुर्वषट्कारः कराळविकृताननः'** इति । **'श्रीनृसिंहः पुष्कराक्षो भूतभव्यभवत्प्रभुः'** इति । एवमुत्तरास्वप्यृक्षु । उष्णिहां च बृहतीनां च पादान् व्यवधाय शंसेत् । तत्रापि पूर्वासां गायत्र्यादीनां पदानि पूर्वाणि कुर्यात् । अपराणां पङ्क्त्यादीनां पराणि । तत्राऽदौ गायत्र्यः पङ्क्तिभिर्व्यतिषज्य पठनीयाः । एवं व्यवधाय पाठे अध्यर्धाऽनुष्टुप् सम्पन्ना । अथच पङ्क्तीनां द्वेद्वे पदे पादाववशिष्येते । ते एव द्वितीयानुष्टुभ उत्तरार्धं कृत्वा प्रणवेन समापयेत् । तथाच द्वाभ्यां सङ्गताभ्यां गायत्रीपङ्क्तिभ्यां द्वे अनुष्टुभौ भवतः । तिसृभिस्तिसृभिः षळनुष्टुभः । द्वादश षोळशिनः । तथाचायं विहरणक्रमः–

**आ त्वा वहन्तु हरय उपो षु शृणुही गिरः ।**
**वृषणं सोमपीतये मघवन् माऽतथाइवो३म् ॥ १ ॥**

इन्द्र त्वा सूरचक्षसो यदा नः सूनृतावतः ।
कर आदर्थयास इद् योजा न्विन्द्र ते हरो३म् ॥ २ ॥

इमा धाना घृतस्नुवः सुसन्दृशं त्वा वयम् ।
हरी इहोप वक्षतो मघवन् वन्दिषीमहो३म् ॥ ३ ॥

इन्द्रं सुखतमे रथे प्र नूनं पूर्णवन्धुरः ।
स्तुतो याहि वशाँअनु योजा न्विन्द्र ते हरो३म् ॥ ४ ॥

इन्द्रं प्रातर्हवामहे स घा तं वृषणं रथम् ।
इन्द्रं प्रयत्यध्वरेऽधि तिष्ठाति गोविदो३म् ॥ ५ ॥

इन्द्रं सोमस्य पीतये यः पात्रं हारियोजनम् ।
पूर्णमिन्द्र चिकेतति योजा न्विन्द्र ते हरो३म् ॥ ६ ॥

अयं मन्त्रार्थः– भगवद्गुणान् व्याहरन्तीति हरय इमाः स्तुतिगिरः, हरयोऽश्वा इव त्वामिहाऽवहन्तु । उपगत्य च हे मघवन् उत्कृष्टाः शस्त्ररूपाः सुगिरः शृणुहि प्रीतिपूर्वम् । वृषणमभीष्टसेचकम्, भक्तिरसवर्षणं वा, बाह्यं मानसं वा यज्ञं प्रति, सोमस्य भक्तिद्रुतमनसो वा पानार्थम्, चाऽवहन्तु । यथा पूर्वं तथा सदाऽप्यनुकूलो भव । अतथाइव अन्यादृश इव, अननुकूलो मा भूः । अतिथिर्वा अतथाः । अतिथिरिव मा भूः । गृहपतिः सन्नागच्छ ॥ १ ॥

हे इन्द्र, यदा त्वां सुष्ठु ऊरीकुर्वच्चक्षुष्मतः, सूनृतवचनवतश्च करोषि तदा आत् अत एव त्वदनुग्रहात् नो गिरस्त्वमर्थयासे, प्रीत्यतिशयेन याचसि । श्रोतुमिच्छसीत्येतत् । अत इन्द्र, ते हरी अश्वावत्र रथे योजय नु इदानीमेव । हरी इति मन्त्रान्त्यपदस्य प्रणवेन योगे हरी+ओम्= हरो३म् इति भवति । तथा हि वैयाकरणाः– **'प्रणवष्टेः'** (अष्टा.सू.८.२.८९) इतीत्युक्तम् ॥ २ ॥

इमास्त्वदर्था घृतस्नुवो धानाः । भक्तिक्लिन्नानि ध्यानानि । सर्वस्य सम्यग्द्रष्टारं त्वां प्रत्येव वयं स्थिताः । हरी मनोबुद्धी त्वामिहोपवक्षतः उपवहताम् । हे यज्ञपते, त्वां वन्दिषीमहि स्तुत्याऽभिवादेन च प्रीणयामः । कीदृशं त्वाम्? सुखतमे शरीररथे स्थितमिन्द्रं परमेश्वरं त्वाम् । कथं स्तूयसे? **प्र नूनं पूर्णवन्धुर** इति । प्रकृष्टोऽयं पूर्णतयाऽस्माकं बन्धुः सन् रमते रमयति चेति ।

नतोन्नतं च साधनपथं पूरणेन समीकरोतीति । पूर्णं वं ज्ञानं बलं च, धूः कर्तव्यभरश्चेति पूर्ण-वन्धुरः । बिन्दुरवधारणे । एवं स्तुतो मघवन्, वशाननु यथेच्छमायाहि । योजय न्विन्द्र ते हरी ॥ ३–४ ॥

**इन्द्रं प्रातराह्वयामहे** । स किलाभीष्टवर्षणं देहरथमतितरामधितिष्ठति । एवमध्वरे प्रयति च मध्यन्दिने च सायं चेति सर्वदाऽऽह्वयामहे । गोविदं ज्ञानानां लम्भयितारम्, स्तुतिवचनानां वेदकं च रथमतिशयेन सदा प्रेम्णाऽधितिष्ठेति च हवामहे ॥ ५ ॥

इन्द्रं भक्तिद्रुतस्य मनसः पानाय हवामहे । यः सोमपात्रमन्तःकरणं मनोहारिणि भगवति योजनेन हारियोजनाख्यं भक्तिपूर्णं चिकेतति करोति, जानाति वा । अधिवसति वा । अत आयाहि योजय नन्विन्द्र ते हरी ॥ ६ ॥

गायत्रीपङ्क्त्योर्व्यतिषङ्गस्य महत्त्वं बोधयत् प्रशंसति ब्राह्मणम्– **गायत्रो वै पुरुषः** । पाङ्क्ताः पशवः । त्रिपदा गायत्री । पुरुषस्यापि त्रीणि पदानि स्थानानि गन्तव्यानि भूर्भुवःस्वराख्यानि । गायत्र्या दीक्षणाच्च गायत्रः पुरुषः । आकटि, आकण्ठं शिरश्चेति च पुरुषस्य त्रीणि पदानि । पशुष्व-दृष्टान्यसाधारणानि पुरुषस्य त्रीणि हस्तौ च वाक् च । चतुर्विंशत्यक्षरा गायत्री । पुरुषश्च चतुर्विंशतितत्वमयः । तेन **गायत्रः पुरुषः** । चत्वारः पादाः शिरश्चेति **पशवः पाङ्क्ताः** । पङ्क्तिरपीयं पञ्चपदा । तस्मात् यद् गायत्रीं पङ्क्त्या व्यतिषजति **पुरुषमेव तत् पशुभिर्व्यतिषजति** । यद् गायत्रीं पङ्क्तौ प्रतिष्ठापयति तेन पुरुषमेव **पशुषु प्रतिष्ठापयति** । पशुषु हि प्रतिष्ठितं पुरुषस्य जीवनम् । पशूनां पयः पायम्पायं जीवति । पशुभिः सम्भारान् वाहयति । पशूनधिरुह्य सञ्चरति च विहरति च । तदेवं द्विपदं चतुष्पदे प्रतिष्ठितम् । यथा त्रिपदा गायत्री पञ्चपद्यां पङ्क्तौ प्रतिष्ठितेत्यनुसन्धेयमित्यर्थः । यथाऽनुसन्धत्ते तथैव भवति । तदेव च लभते ॥

अथानुष्टुप्प्रकारं शंसनं प्रशंसति– **यदु** चतुर्विंशत्यक्षरा **गायत्री च**, चत्वारिंशदक्षरा **पङ्क्तिश्च** मिलिते ते चतुःषष्ट्याऽक्षरैर्द्वे **अनुष्टुभौ** भवतः । **तेन**, उ इत्यनुनये, अनुष्टुब्देवता सरस्वतीति सा वाग्रूपा बभूव । वागेव वज्रो भूत्वा पापान्यपहन्ति । तदिदमिन्द्रायुधं कदाऽपि साधकमपहाय **नैति** नापगच्छति ॥ ✻ ॥

अथ द्वितीयं शस्त्रभागमाह– **यदिन्द्र पृतनाज्येऽयं ते अस्तु हर्यत इत्युष्णिहश्च बृहतीश्च व्यतिषजति** । अष्टाविंशत्यक्षरा **उष्णिक्,** षट्त्रिंशदक्षरा **बृहती** च व्यतिषक्ते **द्वे अनुष्टुभौ** भवतः । (२८+३६=६४) । अत **उष्णिहश्च बृहतीश्च व्यतिषजति** । का उष्णिहः? काश्च बृहत्यः? आह– **यदिन्द्र पृतनाज्ये** इत्याद्या उष्णिहः । **अयं ते अस्तु हर्यत** इत्याद्या बृहत्य इति । अथ कियत्यः? बहुवचनश्रुतेस्तिस्र इत्याहाऽश्वलायनः– **'यदिन्द्र पृतनाज्येऽयन्ते अस्तु हर्यत इत्यौष्णिहबार्हतौ तृचौ'** इति ॥

तथाह्यष्टममण्डले द्वादशे सूक्ते पठितास्तिस्र उष्णिहः–

**यदिन्द्र पृतनाज्ये देवास्त्वा दधिरे पुरः । आदित् ते हर्यता हरी ववक्षतुः (८.१२.२५)**

**यदा वृत्रं नदीवृतं शवसा वज्रिन्नवधीः । आदित् ते हर्यता हरी ववक्षतुः ॥ (२६)**

**यदा ते विष्णुरोजसा त्रीणि पदा विचक्रमे । आदित् ते हर्यता हरी ववक्षतुः ॥ (२७)**

तृतीयमण्डले चतुश्चत्वारिंशे सूक्ते पठितास्तिस्रो बृहत्यः–

**अयं ते अस्तु हर्यतः सोम आ हरिभिः सुतः ।**
**जुषाण इन्द्र हरिभिर्न आ गह्या तिष्ठ हरितं रथम् ॥ (३.४४.१)**

**हर्यन्नुषसमर्चयः सूर्यं हर्यन्नरोचयः ।**
**विद्वांश्चिकित्वान् हर्यश्व वर्द्धस इन्द्र विश्वा अभि श्रियः ॥ (२)**

**द्यामिन्द्रो हरिधायसं पृथिवीं हरिवर्पसम् ।**
**अधारयद्धरितोर्भूरि भोजनं ययोरन्तर्हरिश्चरत् ॥ (३)**

अत्र विहरणे विशेषमाहाऽश्वलायनः– **उष्णिहो बृहतीभिः** विहर्तव्याः । यथापूर्वं पादान् व्यवधायार्द्धर्चशः शंसेत् । किन्तु **उष्णिहां त्रीन् द्वादशाक्षरानुत्तमान् पादान् द्वौद्वौ** कृत्वा पठेत् । कथम्? **चतुरक्षरमाद्यम्** । अष्टाक्षरमपरं यथा स्यात् । तथाहि अष्टाविंशत्यक्षरा उष्णिक् (८+८+१२=२८) । पूर्वार्द्धं स्वतः षोळशि । उत्तरार्द्धं द्वादशाक्षरमिति तत्र चतुरक्षरं पृथक् कुर्यात् । तच्च द्वादशाक्षरेण बृहतीपादेन विहरेत् । षट्त्रिंशदक्षरा हि बृहती (८+८+१२+८=३६) । तृतीयोऽत्र द्वादशाक्षरः । विहरणेन सोऽपि षोळशी भवति । तथाचायं विहरणक्रमः–

यदिन्द्र पृतनाज्येऽयं ते अस्तु हर्यतः ।
देवास्ते दधिरे पुरः सोम आ हरिभिः सुतो३म् ॥ १ ॥

आदित्तेऽहर्जुषाण इन्द्र हरिभिर्न आ गहि ।
यता हरी ववक्षतुरातिष्ठ हरितं रथो३म् ॥ २ ॥

यदा वृत्रं नदीवृतं हर्यन्नुषसमर्चयः ।
शवसा वज्रिन्नवधीः सूर्यं हर्यन्नरोचयो३म् ॥ ३ ॥

आदित् तेऽहर्विद्वांश्चिकित्वान् हर्यश्व वर्द्धसे ।
यता हरी ववक्षतुरिन्द्र विश्वा अभि श्रियो३म् ॥ ४ ॥

यदा ते विष्णुरोजसा द्यामिन्द्रो हरिधायसम् ।
त्रीणि पदा विचक्रमे पृथिवीं हरिवर्चसो३म् ॥ ५ ॥

आदित् तेऽहरधारयद्धरितोर्भूरि भोजनम् ।
यता हरी ववक्षतुर्ययोरन्तर्हरिश्चरो३म् ॥ ६ ॥

अयं साधुः पन्था इति भाति । याज्ञिकास्तु– 'अदित्ते ह जुषाणः' इति 'र्यता हरी ववक्षतुः' इति रेफमुत्तरेण संयोज्य मन्त्रं छिन्दन्ति ॥

अथ व्यतिषक्तमन्त्राणामयमक्षरार्थः–

हे इन्द्र परमेश्वर, यत् त्वं पृतनाज्ये सन्निहितः, तस्मादयं मनोमयः सोमस्ते समर्पितोऽस्तु । कीदृशः सोमः? हर्यतः कमनीयः । भक्त्याद्यलङ्कृत इत्येतत् । हर्य गतिकान्त्योः । ननु पृतनाज्यमिति युद्ध-मुच्यते । तत् काऽत्र युद्धवार्ता? शृणु । तर्कपृतना जीयतेऽत्रेति पृतनाज्यं ज्ञानयुद्धं वादो नाम । पृतना आजिं यन्त्यत्रेति वा । अथ च देवद्विट्पृतनां जयतीति पृतनाज्यस्त्रिरूपो वायुः । तत्रापि सन्निधाय अतत्ववादान् तत्ववादिभिर्जापयति । ततस्तस्यायं सोमः समर्प्यते । देवाः ब्रह्माद्या ज्ञानिनः त्वां पुरः अग्रे सर्वोपरि अनुसन्दधिरे । अयं च सोमः हरिभिरिन्द्रियैः भगवत्प्रवणैरा सुतः रसमयः कृतः ॥ १ ॥

आदित् अत एव, हेऽहर्जुषाण, अहरिति प्राण उच्यते । **'अहरेव प्राणः'** इत्यैतरेये । हे प्रियप्राण, अहरिति ज्ञानमुच्यते । यज्ञश्च । यज्ञप्रिय, ज्ञानप्रिय, ते त्वदीयैः हरिभिः इन्द्रियैरिन्द्रियाभिमानिदेवैः सह न आ गहि । नियतौ हरी मनोबुद्धी त्वां वहतः । अत आतिष्ठ हरितं समृद्धं देहरथम् । हरिभिस्ततं वा हरिणा त्वयैव ततं वा ॥ २ ॥

यदा संसारनदीमावृत्य जीवावरकं वृत्रमज्ञानं प्रति हर्यन् गच्छन्, **हर्य गतौ**, हे दोषवर्जनाद् वज्रिन्, शवसा बलेन, सुखेनानायासेन वा, वृत्रमवधीः । तेन भास्करस्यारुणोदये सति तामुषसमर्चयः । तेन हर्यन् रोचमानः ज्ञानसूर्यमरोचयः ॥ ३ ॥

आदित् अत एव ते तवानुग्रहात् अहर्विद्वान् यज्ञविधानज्ञो यजमानश्चिकित्वान् यज्ञकर्ता भवति । त्वद्विषयकज्ञानवान् वा भवति । हे हर्यश्व इन्द्रियाश्व, नित्यं वर्धसे त्वम् । त्वन्नियतौ हरी, हे इन्द्र, विश्वाः ज्ञानसम्पद आभिमुख्येन वहताम् ॥ ४ ॥

यदा ते इन्द्रस्य प्राणस्य वा स्वामी । एषां मन्त्राणां मुख्यामुख्यवृत्त्या इन्द्रः प्राणो विष्णुश्च हि विषयाः । ते तवैव नारायणस्य विष्णवाख्यं त्रिविक्रमाख्यं रूपम्, **विष्लृ व्याप्तौ**, इन्द्राख्यं च परमैश्वर्यात्, हरिधायसं द्याम्, हरिवर्पसं पृथिवीं च, भूर्भुवःसुवरित्येतत्, त्रीणि पदा विचक्रमे । तदा तस्मात्, आदित् तवानुग्रहादेव हरितोः द्यावापृथिव्योः अहरुपलक्षितोऽयं कालः, मनुष्याणां भूरि भोजनमधारयत् । द्यवि वृष्टिरूपेण । भुवि सस्यात्मना । तादृशं त्वां यतौ हरी इह वहताम् । ययोरन्तः पापानां हरणाद्धरिर्भवानेव चरति । हरन्तीति हरयो ग्रहनक्षत्राणि । तेषां धायसं धरिकां द्याम् । हरिद्वर्णं सस्यश्यामलं वर्पो रूपं यस्याः । तां पृथिवीं हरिवर्पसम् ॥ ५–६ ॥ ✻ ॥

एतद् विहरणमर्थवादेन प्रशंसति– **औष्णिहो वै पुरुषो बार्हताः पशवः** । त्रिपदा ह्युष्णिक् । तेन पूर्वोक्तः सर्वोऽप्यर्थः अत्राप्यनुवर्तते । चतुर्विंशतिः तत्वानि । चतुर्मूर्तिश्च भगवानिति पुरुष एतामष्टविंशतिं जानाति । तेन चोष्णिक्साम्यम् । भूर्भुवः सुवरिति त्रिषु स्थानेषु सञ्चरणात्, जाग्रत्स्वप्नसुषुप्तिषु वा, पुरुषोऽपि त्रिपात् । बृहती चतुष्पात् । पशवश्च । तेन **पुरुषमेव तत् पशुभिर्व्यतिषजति पशुषु प्रतिष्ठापयति** ॥

अथानुष्टुप्प्रकारं शंसति– **यदुष्णिुक्** अष्टाविंशत्यक्षरा च षट्त्रिंशदक्षरा **बृहती च ते द्वे विहृते द्वे अनुष्टुभौ** भवतः (२८+३६=६४) । **वाचो रूपादित्यादि** पूर्ववत् ॥ ✻ ॥

अथ विहरणान्तरमाह– **आ धूर्ष्वस्मै** । तदेतद् व्याचख्यावाश्वलायनः– **'आधूर्ष्वस्मायिति द्विपदा । ब्रह्मन् वीर ब्रह्माकृतिं जुषाण इति त्रिष्टुप्'** इति । **'आ धूर्ष्वस्मै–'** इत्याद्यां विंशत्यक्षरां द्विपदां विराजं च, **'ब्रह्मन् वीर ब्रह्माकृतिं जुषाणः–'** इत्याद्यां चतुश्चत्वारिंशदक्षरां त्रिष्टुभं च व्यतिषजति । तयोः संहतयोश्चतुःषष्टिरक्षराणीति पुनर्द्वे अनुष्टुभौ भवतः (२०+४४=६४) । तथाहि सप्तमे मण्डले द्विपदा विराट्–

**आ धूर्ष्वस्मै दधाताश्वानिन्द्रो न वज्री हिरण्यबाहुः । (७.३४.४)**

त्रिष्टुप् च–

**ब्रह्मन् वीर ब्रह्मकृतिं जुषाणोऽर्वाचीनो हरिभिर्याति तूयम् ।**
**अस्मिन्नू षु सवने मादयस्वोप ब्रह्माणि शृणव इमा नः ॥ (७.२९.२)**

अनयोर्विहरणप्रकारमाह सूत्रकारः– **'द्विपदाश्चतुर्धा कृत्वा प्रथमां त्रिष्टुभा'** ।

अत्र विहरणार्थं चतस्रो द्विपदाः पठ्यन्ते । उपरिष्टात् पठ्यमानास्तिस्रो जगतीभिर्विह्रियन्ते । तत्र प्रथमा, आ धूर्ष्वस्मायित्याद्या त्रिष्टुभा व्यतिषज्यते । कथम्? चतुर्धा कृत्वा । विंशत्यक्षरा हीयं द्विपदा । सा चेच्चतुर्धा क्रियते प्रतिभागं पञ्चाक्षराणि भवन्ति । **'आ धूर्षु+अस्मै'** इति, **'दधात+अश्वान्'** इति, **'इन्द्रो न वज्री'** इति, **'हिरण्यबाहुः'** इति । त्रिष्टुभश्चैकादशाक्षरः पादः द्विपदायाः पञ्चाक्षराणि च संहत्य षोळशित्वं सेत्स्यतीत्यर्थः । तथा च द्वे अनुष्टुभौ भवतः –

**आ धूर्ष्वस्मै ब्रह्मन् वीर ब्रह्मकृतिं जुषाणः ।**
**दधाताश्वानर्वाचीनो हरिभिर्याहि तूयो३म्॥ १ ॥**

**इन्द्रो न वज्री-अस्मिन्नू षु सवने मादयस्व ।**
**हिरण्यबाहुरुप ब्रह्माणि शृणव इमा नो३म्॥ २ ॥**

अयमक्षरार्थः– अस्मै अस्य यजमानस्य धूर्षु कर्तव्यभरेषु वोढा सन्नायाहि । हे ब्रह्मन्, वीर भगवन् । तस्य ब्रह्मकृतिं जुषाणः प्रीत्या स्वीकुर्वन् । अथेन्द्रियेषु गतो बहुरूपो भगवान् प्रार्थ्यते । अश्वानिन्द्रियाणि दृढं धारयत भगवन्तः, यथा न विषमपातिनो भवेयुः । दध+अत इति वा प्रतृण्णम् । अत सन्तत, दध दधस्व । दध धारणे । अथ च भगवन्, अर्वाचीनः ऊर्ध्वलोकादधो-लोकाभिमुखः सन् हरिभिरिन्द्रियाश्वैः तूयं तूर्णमायाहि ॥ १ ॥

इन्द्र इव वज्रहस्तः सन्नायाहि । अस्मिन्नेव यज्ञ उभयविधे सोमपानेन भक्तिरसपानेन सम्यक् मादयस्व तृप्तो भव । **हिरण्यबाहुः** । हिरुक् सुखं हिरण्यम्, सुखमयसर्वाङ्गः इमानि नः ब्रह्माणि स्तुतिवचनानि उपगत्य शृणवः शृण्विति ॥ २ ॥ ✻ ॥

एतस्य प्रशंसनम्– **'द्विपाद् वै पुरुषः, वीर्यं त्रिष्टुप्'** इति । शची हि त्रिष्टुब्देवता । तत्पतिरिन्द्रो हि वीर्यदेवतेति । तदनयोः संयोजनेन **पुरुषमेव तद्वीर्येण व्यतिषजति । वीर्ये प्रतिष्ठापयति । तस्मात् पुरुषो वीर्ये प्रतिष्ठितः । सर्वेषां पशूनां वीर्यवत्तमः** । अतः देहबलेनाधिकानपि गजादीन् स्ववशे करोति । पशूनत्ति पशुभिर्वाहयति । पशूनधिष्ठाय चरति ॥

अथानुष्टुप्कारं शंसति– **'यैव द्विपदा च विंशत्यक्षरा त्रिष्टुप् च चतुश्चत्वारिंशदक्षरा ते द्वे मिलिते द्वे अनुष्टुभौ** भवतः (२०+४४=६४) । तेनैव अनुष्टुप्कारेण वाचो रूपादित्यादि पूर्ववत् ॥ ✻ ॥

अथापरं विहरणमाह– **एष ब्रह्मा प्रते महे विदथे शंसिषं हरी इति द्विपदाश्च जगतीश्च व्यति-षजति** । अत्र शंसनीयाः द्विपदा नर्क्संहितायां पठिता इति ता ऋचः स्वयं सूत्रकारः कृपया पठति– **'एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे । विस्रुतयो यथा पथ इन्द्र त्वद्यन्तु रातयः । त्वामिच्छवसस्पते यन्ति गिरो न संयतः' इति तिस्रो द्विपदाः । प्रते महे विदथे शंसिषं हरी इति तिस्रो जगत्यः'** इति (६.५.६.)

ता जगत्य ऋग्वेदे दशममण्डले पठिताः (१०.९६.१–३)–

**प्र ते महे विदथे शंसिषं हरी प्र ते वन्वे वनुषो हर्यतं मदम् ।**
**घृतं न यो हरिभिश्चारु सेचत आ त्वा विशन्तु हरिवर्पसं गिरः ॥** (१)

**हरिं हि योनिमभि ये समस्वरन् हिन्वन्तो हरी दिव्यं यथा सदः ।**
**आ यं पृणन्ति हरिभिर्न धेनव इन्द्राय शूषं हरिवन्तमर्चत ॥** (२)

**सो अस्य वज्रो हरितो य आयसो हरिर्निकामो हरिरा गभस्त्योः ।**
**द्युम्नी सुशिप्रो हरिमन्युसायक इन्द्रे नि रूपा हरिता मिमिक्षिरे ॥** (३)

अत्र संयोजनीया द्विपदाः सामवेदे पठ्यन्ते । तत्र **'यथा पथः'** इत्यस्य स्थाने **'यथा पथा'** इति पाठः पठ्यते । विहरणक्रममाह सूत्रकारः– **'चतुर्धा कृत्वा उत्तरा जगतीभिः'** इति ॥

षोळशाक्षरा द्विपदास्तिस्रः । चतुर्धा करणे चतुरक्षरा द्वादश भागा भवन्ति । **'एष ब्रह्मा'** इति, **'य ऋत्वियः'** इति, **'इन्द्रो नाम'** इति, **'श्रुतो गृणे'** इति प्रथमायाः । एवं द्वितीयतृतीययोः । द्वादशाक्षरपादा जगती । प्रतिपादमादौ द्विपदायाश्चतुरक्षरसंयोजनेन षोळशित्वं सम्पन्नम् । एवं जगतीत्रयस्य द्वादशस्वपि पादेषु चतुरक्षरसंयोजनेन द्वादश षोळशिनोऽभवन् । षट् चानुष्टुभः ॥

कश्चनात्र वक्तव्यविशेषोऽस्ति । याऽत्र चरमा त्रिपदा तस्याश्चतुर्धा विभाग एवमक्षराणि भवन्ति । **'तुवामिच्छ'** इति क्षैप्रविश्लेषेण **'त्वामिच्छ'** इति प्रथमो भागः । **'वसस्पते'** इति द्वितीयः । नेयं वैदिकी पद्या । अन्य एवात्र विभागक्रम इत्याह सूत्रकारः– **उत्तमायाश्चतुर्थमक्षरमन्त्यं पूर्वस्याऽद्यमुत्तरस्येति** । उत्तमाया अन्ते पठितायास्त्रिपदाया यच्चतुर्थमक्षरं 'व' इति तदेव पूर्वस्य चतुरक्षरस्यान्त्यमक्षरम्– **'त्वामिच्छव'** इति । तदेव उत्तरस्य चतुरक्षरस्याऽद्यमक्षरम्– **'वसस्पते'** इति । तथाचायं विहरणक्रमः–

**एष ब्रह्मा प्र ते महे विदथे शंसिषं हरी ।**
**य ऋत्वियः प्र ते वन्वे वनुषो हर्यतं मदो३म् ॥ १ ॥**

**इन्द्रो नाम घृतं न यो हरिभिश्चारु सेचते ।**
**श्रुतो गृण आ त्वा विशन्तु हरिवर्पसं गिरो३म् ॥ २ ॥**

**वि स्रुतयो हरिं हि योनिमभि ये समस्वरन् ।**
**यथा पथो हिन्वन्तो हरी दिव्यं यथा सदो३म् ॥ ३ ॥**

**इन्द्र त्वद्यमा यं पृणन्ति हरिभिर्न धेनवः ।**
**तुरातय इन्द्राय शूषं हरिवन्तमर्चतो३म् ॥ ४ ॥**

त्वामिच्छवसो अस्य वज्रो हरितो य आयसः ।
वसस्पते हरिर्निकामो हरिरा गभस्त्योः३म् ॥ ५ ॥

यन्ति गिरो द्युम्नी सुशिप्रो हरिमन्युसायकः ।
न संयत इन्द्रे नि रूपा हरिता मिमिक्षिरो३म् ॥ ६ ॥

अथैषां षण्णामानुष्टुभानामक्षरार्थः–

ते त्वदीये महे महनीये ज्ञानयज्ञे ते त्वदधीने हरी मनोबुद्धी प्रशंसिषम् । किमिति? एषः मनोबुद्धिमानी देवगणः ब्रह्मा गुणबृंहित इति । कोऽयं देवगणः? इन्द्रकामौ, पार्वती शिवः, भारती मुख्यप्राणश्च । यः ऋत्वियः, यः ऋतुभिः ऋतवदनशीलैरीयते तस्य ते भक्तेषु भक्तिरसभरितं मनआख्यं सोमं वनुषः याचतः हर्यतं मुखविकासेन कमनीयं मदं तृप्तिं वन्वे याचामि ॥ १ ॥

यो हरिभिरिन्द्रियैः घृतमिव भक्तिरसं चारु सेचते सोऽयमिन्द्रो नाम । सर्वोत्तमो नारायणो नाम । जीवोत्तमः प्राणो नाम । तथा मया श्रुत इति त्वामेव गृणे । इमा गिरः हरिवर्पसं हरिन्मणिनिभं त्वामाविशन्तु ॥ २ ॥

ये विस्रुतयः विशेषज्ञानिनः भगवद्गुणविशेषज्ञास्ते योनिं भगवदभिव्यक्तिस्थानं हरिमन्तःकरणाख्यमश्वं समभिस्वरन् अस्तुवन् । किं कुर्वन्तः? हरी मनोबुद्धी यथायोग्येन पथः पथा दिव्यं यज्ञसदनं प्रति गन्तुं यथा हिन्वन्तः प्रेरयन्तो बभूवुस्तथा समभिस्वरन् ॥ ३ ॥

हे इन्द्र, त्वद्यमाः त्वया नियमिताः त्वन्नियताः, त्वदर्थं कृतयमा वा ज्ञानिनः हरिभिर्न अश्वैरिव हरिभिर्वेदैः यं त्वां शिष्येभ्यः पृणन्ति ददति । धेनवः हरितैः सस्यैरिव क्षीरम् । 'ऋक्सामे वा इन्द्रस्य हरी' इति हि श्रुतिः । तस्मादिन्द्राय तदनुग्रहाय तस्येन्द्रस्य हरिवन्तं वेदवेद्यं शूषं बलं तुरातयस्त्वरमाणा अर्चत ॥ ४ ॥

त्वामित् त्वां रक्षितुमेव शवसः सुखरूपस्य, त्वां प्रति आगच्छतो वा, गतिकर्मा हि शवतिः, अस्य परमेश्वरस्य शत्रून् वर्जयतीति वज्रः प्रहरणसमुदायः समृद्धिकरत्वाद्धरित उच्यते । शत्रुनिरासकत्वादाययतीत्यायस उच्यते । हे वसतां पते, त्वं नितरां कमनीयः । हरिः हरिन्मणिद्युतिः । गभस्त्योः

सूर्यचन्द्रयोर्गभस्तिषु स्थित्वा तमो हरणाच्च हरिस्त्वम् । प्रभाया आहरणाच्च । गभस्त्योर्हस्तयोश्चक्रगदयोराहरणाच्च हरिस्त्वमिति चक्रगदाधरः स्तूयते ॥ ५ ॥

मम स्तुतिगिरस्त्वां प्रति यन्ति स्तुवन्ति । किमिति? द्युम्नं ज्ञानम्, द्युम्नं द्युतिः, द्युम्नं बलम्, द्युम्नं धनम् । तद्वानिति । प्रद्युम्नाख्य इत्येतत् । सुशिनः सुखिनो मुक्ताः । तान् पूरयतीति सुशिप्रो वासुदेवः । शत्रुसंहारी मन्युसायकः सङ्कर्षणः । **'यस्ते मन्योऽविधद् वज्रसायक'** इति श्रवणात् । यं गिरो यन्ति सोऽनिरुद्धः । यो न संयतः शत्रुभिरनिरुद्धः तस्मिन्निन्द्रे सर्वाणि रूपाणि हरितानि समृद्धिकराण्येव सन्ति नितरां मिमिक्षिरे निषेदुरिति ॥ ६ ॥ ✻ ॥

द्विपदाजगतीविहरणं च पूर्ववत् प्रशंसति– **द्विपाद् वै पुरुषो जागताः पशवः,** चतुष्पात्त्वादेव, **पुरुषमेव तस्मात् पशुभिर्व्यति षजति, पशुषु प्रतिष्ठापयति, तस्मात् पुरुषः पशुषु प्रतिष्ठितः, अत्ति चैनानधि च तिष्ठति वशे चास्य ।** यैव च **द्विपदा** षोळशाक्षरा या च **जगती** अष्टचत्वारिंशदक्षरा ते उभे मिलिते द्वे अनुष्टुभौ भवतः (१६+४८=६४) । **तेनो वाच** इत्यादि पूर्ववत् ॥ ✻ ॥

अथ विहरणान्तरमाह– **त्रिकद्रुकेषु महिषो यवाशिरम्, प्रो ष्वस्मै पुरोरथमित्यतिच्छन्दसः शंसति । अतिच्छन्दस** इति पुंस्त्वमार्षम् । अतिच्छन्दांसि । तदेतत् स्फुटयति सूत्रकारः– **त्रिकद्रुकेषु महिषो यवाशिरम्, प्रो ष्वस्मै पुरोरथमिति तृचावतिच्छन्दसौ** (६.२.६) इति । पूर्वमुक्ता अप्येते मन्त्राः श्रौतसूत्रानुगुणतया पुनरुच्यन्ते स्पष्टत्वाय । तथाहीमाः षळृचः–

**त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्म-**
**स्तृपत् सोममपिबद् विष्णुना सुतं यथावशत् ।**
**स ईं ममाद महि कर्म कर्तवे महामुरुं**
**सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दुः ॥** (२.२२.१)

**अथ त्विषीमाँअभ्योजसा क्रिविं युधा भव-**
**दा रोदसी अपृणदस्य मज्मना प्र वावृधे ।**
**अधत्तान्यं जठरे प्रेमरिच्यत**
**सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दुः ॥** (२.२२.२)

**साकं जातः क्रतुना साकमोजसा ववक्षिथ**
**साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणिः ।**
**दाता राधः स्तुवते काम्यं वसु**
**सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दुः ॥ (२.२२.३)**

अपरास्तिस्रो दशममण्डले पठ्यन्ते–

**प्रो ष्वस्मै पुरो रथमिन्द्राय शूषमर्चत ।**
**अभीके चिदु लोककृत् सङ्गे समत्सु वृत्रहाऽस्माकं बोधि चोदिता ।**
**नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ (१०.१३३.१)**

**त्वं सिन्धूँरवासृजो–ऽधराचो अहन्नहिम् ।**
**अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यं तं त्वा परिष्वजामहे ।**
**नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ (१०.१३३.२)**

**वि षु विश्वा अरातयो-ऽर्यो नशन्त नो धियः ।**
**अस्ताऽसि शत्रवे वधं यो न इन्द्र जिघांसति या ते रातिर्ददिर्वसु ।**
**नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ (१०.१३३.३)**

एषां व्यतिषङ्गप्रकारमाह सूत्रकारः– **अनुष्टुभमतिच्छस्स्ववदध्यादिति** । काऽनुष्टुप्? आह– **प्रचेतन प्रचेतयाऽयाहि पिब मत्स्व । क्रतुश्छन्द ऋतं बृहत् सुम्न आधेहि नो वसवित्यनुष्टुप्** (२.२.३) । महानाम्नीस्वन्यत्रान्यत्र पठिताश्चत्वारोऽष्टाक्षराः पादा अत्रानुष्टुप्पदेनोच्यन्ते । तामनुष्टुभं अतिच्छन्दोभिरवधाय तेषां षोळशित्वं सम्पादनीयमिति । कथमवधानम्? आह– **द्वितीयतृतीययोस्तृतीययोः पादयोरवसानत आदध्यात् । प्रचेतनेति पूर्वस्यां प्रचेतयेत्युत्तरस्याम्** (६.३) ॥

अयमर्थः– अतिच्छन्दसां प्रथमत्रिके प्रथमा स्वतः षोळशीति नावधानम् । तथाहि त्रिकद्रुकेष्विति चतुःषष्ट्यक्षराऽष्टिश्छन्दः । तत्र पञ्च पादाः । प्रथमद्वितीयौ षोळशाक्षरावित्येकाऽनुष्टुप् । तृतीयः षोळशाक्षरः । तुरीयपञ्चमावष्टाक्षराविति पुनर्द्वौ षोळशिनौ सङ्गतौ पुनरेकाऽनुष्टुप् । तदियमेकाऽष्टिर्द्वे अनुष्टुभौ–

त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मः ।
तृपत् सोममपिबद् विष्णुना सुतं यथावशो३म् ॥ १ ॥

स ईं ममाद महि कर्म कर्तवे महामुरुम् ।
सैनं सश्चद्देवो देवं सत्यमिन्द्रं सत्य इन्दो३म् ॥ २ ॥

अथ द्वितीयतृतीययोः ऋचोः षष्ट्यक्षरयोरतिच्छन्दसोः तृतीययोः पादयोः द्वादशाक्षरत्वात् इति, तत्र पूर्वोक्ताया अनुष्टुभः प्रथमपादस्य प्रचेतनेति चतुरक्षराणि द्वितीयमन्त्रस्य तृतीयपादावसाने प्रचेतयेति तृतीयमन्त्रस्य तृतीयपादावसान उपदध्यात् । षष्ट्यक्षराऽतिशक्वरी एका द्वे अनुष्टुभौ भवत इति पूर्वार्द्धं स्वतः षोळशिद्वयम्, उत्तरार्धं च चतुरक्षरसंयोजनेनेति–

अध त्विषीमाँअभ्योजसा क्रिविं युधाऽभवत् ।
आ रोदसी अपृणदस्य मज्मना प्र वावृधो३म् ॥ १ ॥

अधत्तान्यं जठरे प्रेमरिच्यत प्रचेतन ।
सैनं सश्चद्देवो देवं सत्यमिन्द्रं सत्य इन्दो३म् ॥ २ ॥

एवं तृतीयाऽतिशक्वर्यपि–

साकं जातः क्रतुना साकमोजसा ववक्षिथ ।
साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणो३म् ॥ १ ॥

दाता राधः स्तुवते काम्यं वसु प्रचेतय ।
सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दो३म् ॥ २ ॥

अयं त्र्यृचः सोपसर्गः सामवेदेऽपि पठ्यते किञ्चिद्व्यत्यासेन–

त्रिकद्रुकेषु महिषो यवशिरं तुविशुष्म-
स्तृम्पत्सोममपिबद्विष्णुना सुतं यथावशम् ।
स ईं ममाद महि कर्म कर्तवे महामुरुं
सैनं सश्चद्देवो देवं सत्य इन्दुः सत्यमिन्द्रम् ॥ (सा. १४८६) ॥

**साकं जातः क्रतुना साकमोजसा ववक्षिथ**
**साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणिः ।**
**दाता राध स्तुवते काम्यं वसु प्रचेतन**
**सैनं सश्चद्देवो देवं सत्य इन्दुः सत्यमिन्द्रम् ॥ (१४८७) ॥**

**अध त्विषीमाँअभ्योजसा कृषिं युधा भव-**
**दा रोदसी अपृणदस्य मज्मना प्र वावृथे ।**
**अधत्तान्यं जठरे प्रेमरिच्यत प्रचेतय**
**सैनं सश्चद्देवो देवं सत्य इन्दुः सत्यमिन्द्रम् ॥ १४८८) ॥**

एवं सामवेदपाठे मन्त्रत्रयेऽप्यष्टिरेव च्छन्दः ।

अथावशिष्टास्तिस्र ऋचः षट्पञ्चाशदक्षराः शक्वरीबद्धाः । सप्त च प्रतिमन्त्रं पादाः । अष्टौ च प्रतिपादमक्षराणि । तत्र षोळशित्वसम्पादनप्रकारमाह सूत्रकारः– **उत्तरास्वितरान् पादान् षष्ठान् कृत्वाऽनुष्टुप्कारं शंसेत् (६.३)** । उत्तरासु तिसृषु शक्वरीषु अवशिष्टान् त्रीन् महानाम्नीपादान् संयोज्यानुष्टुप्कारं शंसेत् । कुत्र संयोजनीयाः? **षष्ठान् कृत्वा** । अष्टाक्षरसप्तपादा हि शक्वरी । तत्र पञ्चमपादानन्तरं महानाम्नीपादान् **षष्ठान् कृत्वा शंसेत्** । अनुष्टप्कारं शंसने प्रथमं चत्वारः पादाः एकाऽनुष्टुप् । अवशिष्टास्त्रयः पादा महानाम्नीपादेन सहापराऽनुष्टुबिति ते द्वे अनुष्टुभौ भवतः । तथाचायं संयोजनक्रमः–

**प्रो ष्वस्मै पुरोरथ-मिन्द्राय शूषमर्चत ।**
**अभीके चिदु लोककृत् सङ्गे समत्सु वृत्रहो३म् ॥ १ ॥**

**अस्माकं बोधि चोदिता आयाहि पिब मत्स्व ।**
**नभन्तामन्यकेषां ज्याका अधि धन्वसो३म् ॥ २ ॥**

**त्वं सिन्धूँरवासृजो–ऽधराचो अहन्नहिम् ।**
**अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यो३म् ॥ ३ ॥**

**तं त्वा परि ष्वजामहे क्रतुश्छन्द ऋतं बृहत् ।**
**नभन्तामन्यकेषां ज्याका अधि धन्वसो३म् ॥ ४ ॥**

**वि षु विश्वा अरातयो–ऽर्यो नशन्त नो धियः ।**
**अस्तासि शत्रवे वधं यो न इन्द्र जिघांसतो३म् ॥ ५ ॥**

**या ते रातिर्ददिर्वसु सुम्न आ धेहि नो वसो ।**
**नभन्तामन्यकेषां ज्याका अधि धन्वसो३म् ॥ ६ ॥**

अत्र त्रीणि अतिच्छन्दांसि व्यतिषक्तानि । शक्वर्यतिशक्वर्यष्टिश्च । ननु एतान्यपि च्छन्दांस्येव । किमित्यतिच्छन्दांसीत्युच्यन्ते? आह महिदासः– **छन्दसामिति** । छन्दसां यो रसः सारः, तदभिमानिदेवतागण इत्येतत् । स सप्त च्छन्दांस्यतिक्रम्याक्षरत् । स्वं छन्दोमानित्वमन्यत्रापि प्रसारयामास । सः देवतागणः अतिच्छन्दसं मन्त्रगणमभिव्याप्य प्रसारयामास । तेन तेषामतिच्छन्दांसीति नाम । छन्दांस्यतीत्यात्राक्षरन्निति । छन्दसां या देव्यो मानिन्यस्ता एवातिच्छन्दसां मानिन्य इत्युक्तं भवति– स्वाहा, सञ्ज्ञा, रोहिणी, तारा, शची, मित्रावरुणयोर्भार्ये च ॥ * ॥

फलितमाह– **सर्वेभ्यो वा एष च्छन्दोभ्यः सन्निर्मितो यत् षोळशी** । योऽयं षोळशी यज्ञः यश्चायं षोळशीकृतः मन्त्रसमुदायः तेन सर्वाणि च्छन्दांसि शंसितानि भवन्ति । तदभिमानिदेवताभ्यः तदन्तर्यामिभगवतश्चानुग्रहेण सुसम्पादितश्च षोळशी । सर्वाणीति प्रकृते दश च्छन्दांसि । सप्त च्छन्दांसि त्रीण्यतिच्छन्दांसि । गायत्र्यादयः सप्त च, शक्वर्यतिशक्वर्यावष्टिश्चेति । अपिच याजुषरीत्या पादशश्चिन्तने षळक्षरा गायत्री, सप्ताक्षरोष्णिक्, अष्टाक्षरानुष्टुप् च षोळशाक्षरेष्वन्तर्भूताः । आर्षरीत्या तिसृणामपि पादशोऽष्टाक्षरत्वात् । अथ नवाक्षरा बृहती, दशाक्षरा पङ्क्तिः, एकादशाक्षरा त्रिष्टुप्, द्वादशाक्षरा जगती, चतुर्दशाक्षरा शक्वरी, पञ्चदशाक्षराऽतिशक्वरी, षोळशाक्षराऽष्टिश्चात्रैव षोळशिनि पादशोऽन्तर्गताः ॥

उपसंहरति **सर्वेभ्य** इत्यादिना । यदतिच्छन्दसोऽपि मन्त्रान् व्यतिषज्य पठति तेन षोळशाक्षरपर्यन्तानां सर्वेषामत्र समाहारो भवति । एवं सर्वच्छन्दोमानिनीनां देवीनां सहकारेण एनं षोळिशिनं क्रतुं सन्निर्मिमीते । निर्माय च राध्नोति सिद्धिमाप्नोति पुनरप्यभिवर्धते, योय एतत्सर्वमेव विदित्वाऽनुसन्धायाऽचरति । एतेषामुपसृष्टानां मन्त्राणामर्थस्तु पूर्वमेवोक्त इति न पुनराम्रेड्यते ॥ * ॥

* * *

**[महानाम्नीनां पञ्चाक्षरानुपसर्ग्गानुपसृजत्येकादशाक्षरेषु पादेषु सर्वेभ्यो वा एष च्छन्दोभ्यः सन्निर्म्मितो यत् षोळशी तद्यन्महानाम्नीनां पञ्चाक्षरानुपसर्ग्गानुपसृजत्येकादशाक्षरेषु पादेषु सर्वेभ्य एवैनं तच्छन्दोभ्यः सन्निर्म्मिमीते सर्वेभ्यश्छन्दोभ्यः सन्निर्म्मितेन षोळशिना राध्नोति य एवं वेद] ॥ * ॥** (ऐत.ब्रा.अ.१६.वाक्य.५)

महानाम्नीनां पञ्चाक्षरानुपसर्गानुपसृजत्येकादशाक्षरेषु पादेषु 'एवाह्येवैव अपाः पूर्वेषां हरिवः सुतानाम् , एवैवाहीन्द्रँ अथो इदं सवनं केवलं ते, एवाहि शक्रो ममद्धि सोमं मधुमन्तमिन्द्र, वशी हि शक्रः सत्रा वृषञ्जठर आवृषस्वेति' ॥ * ॥

(आश्व.श्रौ.सू.अ.६.खं.३)

नन्वेवं शस्त्रस्य सम्पन्नं षोळशित्वम् । याज्या तु त्रिष्टुबेवेति न तत्र षोळशित्वम्? सत्यमादौ त्रिष्टुभमवधेहि । पश्चात् षोळशित्वं ग्राहयामः । त्रिषु सवनेषु वसुरुद्रादित्यान्तर्गतः स्तूयत इति त्रिष्टुप् । त्रिरूपः स्तूयत इति प्राणोऽपि त्रिष्टुप् । तथाहि– हरीन् कपीन् वर्तयतीति हरिवा आञ्जनेयः । हे हरिवः हनुमन्, रामावतारात् पूर्वमेव तत्सेवार्थं सुतानां जातानाम्, द्वितीयार्थे षष्ठी, पूर्वं जातान् कपीन् । **'वानरेष्वेव च पूर्वजाताः'** इति हि भगवद्वचनम् । **अपाः** अपालयः । इति प्रथमं रूपं स्तुतम् । **अथो** द्वितीयावतारे भीमाख्ये इदं युद्धाख्यं सवनं तवैव केवलम् । शतं धार्तराष्ट्रास्त्वयैव हताः । **मधुमन्तं** आनन्दमयम्, उत्कृष्टा मा उमा, तया सहितः सोमः, तं ज्ञानानन्दमयं नारायणं वेदार्थाविष्करणेन ममद्धि समतोषयः मध्वरूपेणेति त्रिष्टुस्त्वं वायोरपि । स त्रिरूपस्त्वं सत्रा अस्मत्त्राणेन सह अस्मांस्त्रायन्त्रायं एनं ते वत्सं **जठरे आ वृषस्व** । सर्वदा रक्षेत्येतत् । एकादशाक्षरा त्रिष्टुप् । रुद्रा अप्येकादशेति रुद्रदेवत्ये माध्यन्दिनसवने त्रिष्टुब् विशेषत उपयुज्यते । शची त्रिष्टुब्देवतेति इन्द्रस्यापि

त्रिष्टुबेवेष्टा । अथ तस्यापि षोळशित्वं सम्पाद्य षोळशकलस्य पुरुषस्याऽराधनं करणीयमित्याह– **महानाम्नीनामिति** ब्राह्मणम् । महानाम्नीषु ये निगदभागाः तेभ्यः पञ्चपञ्चाक्षराण्युद्धृत्य एकादशाक्षरेषु त्रिष्टुप्पादेषु प्रतिपादं उपसर्जनेन चत्वारः षोळशिनः सम्पद्यन्ते ॥ ✽ ॥

उपसृष्टं मन्त्ररूपं सूत्रकारः पठित्वा दर्शयतीति तदेव सूत्रवाक्यमाचार्यः पठति– **'एवाह्येवैव'** इति महानाम्नीपञ्चाक्षराणि **अपाः पूर्वेषामिति** प्रथमपाद उपसृज्यते । **एवैवाहीन्दाँ३** इति पञ्चाक्षराणि अथो **इदमिति** द्वितीयपादे । **एवहि शक्र** इति पञ्च **ममद्धि सोममिति** तृतीयपादे । **वशी हि शक्र** इति च पञ्चाक्षराणि **सत्रा वृषन्निति** तुरीयपाद उपसृज्यन्त इति । यत् पूर्वान् सुतानपाः तदेवा हि । पूर्वमप्येवमेव अपा हि । इत उत्तरमपि एवैव एवमेव पिबेति सोपसर्जनपादार्थः । हे इन्द्राँ३ यदिदं तव केवलं सवनम्, तत् सर्वदाऽप्येवमेवहि इति द्वितीयपादार्थः । एवं मधुरपानेन हि त्वं शक्तिरतिरूपः शक्र उच्यसे । यस्मात् त्वं हि सर्वं वशयतीति वशी । स्वतन्त्रः शक्तिरतिरूपश्च । तस्मात् सत्रा वृषन् जठर आवृषस्वेति समग्रो मन्त्रार्थः ॥

उपसर्जने केचिदन्यथा पठन्ति । **'एवाह्येव'** इति प्रथमपादे पञ्चाक्षराणि । **'एवाहीन्द्रँ३'** इति द्वितीयपाद इति । श्रौतसूत्रमपि व्यत्यस्य पठन्ति । तत्पक्षे **'एवाहि+एव'** इति, **'एवाहि इन्द्रँ'** इति च व्यूहेन पञ्चाक्षरता । सम्भवत्यव्यूहेन पञ्चाक्षरत्वे न व्यूहकरणं युक्तमिति दर्शयितुं शुद्धं सूत्रपाठमाचार्यः पपाठ । सूत्रव्याख्याने गार्ग्यनारायणोऽप्येतदाह– **'पाठप्रयोजनं च पूरणार्थं व्यूहादि न कर्तव्यमित्येवमर्थम्'** इति । एतेन व्यूहेन पञ्चाक्षरीकरणसम्प्रदायो याज्ञिकानां भ्रान्तिमूल इति स्थितम् ॥ ✽ ॥

**॥ इति छन्दसां व्यतिषङ्गनिर्णयः ॥**



अथान्ते **'य एवं वेद'** इति वाक्यखण्डं व्याकरिष्यन् कर्मानुष्ठानार्थमपेक्षितमधिकारजातं सर्वं सङ्क्षिप्याऽह । तथैवोपसंहारव्याजेन कर्मणामितिकर्तव्यं च स्पष्टयति । ज्ञानकर्मणोर्गोव्याघ्रयोरिव विरोध इति भ्रमं प्रमाणवचनेनैव निराकरोति–

भगवद्भक्तिज्ञानवैराग्यपूर्वकं च कर्म्म कर्त्तव्यम्–

‘इष्टापूर्त्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।
‘नाकस्य पृष्ठे ते सुकृतेऽनु भूत्वा इमं लोकं हीनतरं वाऽऽविशन्ति’॥

‘नैष्कर्म्यमप्यच्युतभाववर्ज्जितं न शोभते ज्ञानमलं निरञ्जनम् ।
‘कुतः पुनः शश्वदभद्रमीश्वरे नचार्प्पितं कर्म्म यदप्यकारणम्’ ॥

‘यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
‘स्वकर्म्मणा तमभ्यर्च्च्य सिद्धिं विन्दति मानवः’॥

‘त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्ग्गतिं प्रार्त्थयन्ते ।
‘ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान्’ ॥

‘मयि सर्वाणि कर्म्माणि सन्न्यस्याद्ध्यात्मचेतसा ।
‘निराशीर्न्निर्म्ममो भूत्वा युद्ध्यस्व विगतज्वरः ॥

‘ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
‘श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्म्मभिः ॥

‘ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
‘सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः’ ॥

‘तपस्विनो दानपरा यशस्विनो मनस्विनो मन्त्रविदः सुमङ्गलाः ।
‘क्षेमं न विन्दन्ति विना यदर्प्पणं तस्मै सुभद्रश्रवसे नमोनमः’ ॥

'एष उ एव दाश्वान् य एनमेवं वेद',

'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरं भवति',

'परं भावमजानन्तो मम भूतमहेश्वरम् ।
'मोघाशा मोघकर्म्माणो मोघज्ञाना विचेतसः' ॥

'सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
'इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥

'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
'मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे' ॥

'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम् ।
'तिष्ठमानस्य तद्विदः' इत्यादिश्रुतिस्मृतिभ्यः ॥ * ॥

* * *

**भगवद्भक्तिज्ञानवैराग्यपूर्वकम्** । भगवति भक्तिः । भगवतो जगतश्च ज्ञानम् । जगति वैराग्यम् । ज्ञानेन प्रवृद्धा भक्तिः । प्रवृद्धेन ज्ञानेन प्रवृद्धया च भक्त्या आब्रह्मस्तम्बपर्यन्तस्य असारत्वज्ञानम् । ततश्च तत्र वैराग्यम् । भगवतः सर्वोत्तमत्वज्ञानेन तत्र भक्तिः । जगतोऽसारताज्ञानेन तत्र विरक्तिः । चकारेण स्वस्याकर्तृत्वम्, फलानपेक्षा, भगवति सर्वकर्मणामर्पणादिकं समुच्चीयते । ईदृशमेव कर्म सर्वाधिकमिति च चकारेणाऽह । **'आधिक्ये चः प्रकीर्तितः'** । भगवज्ज्ञानपूर्वं कर्तव्यमित्यत्राऽथर्वर्णी श्रुतिं तावदाह– **इष्टापूर्तम्** (१.२.१०) । षण्डामर्कवदिदं पदम् । स्वोद्देश्यं इष्टं अग्निहोत्रादि । परोद्देश्यं पूर्तं तटाकादि । **वरिष्ठं** परमश्रेयःसाधनम् । ततोऽपि हिततमं भगवज्ज्ञानपूर्वं भगवदुद्देश्यं कर्म, ज्ञानभक्तिवैराग्यादिकं च न जानन्ति । **वेदयन्ते** विदन्ति । आत्मनिष्ठाः केवलं त इति द्योतयितुं

आत्मनेभाषा, स्वार्थे च णिच् । अत एव **प्रमूढाः** मूढाग्रण्यः । अविद्यायामन्तरे वेष्ट्यमानाः स्वयन्धीराः पण्डितम्मन्यमाना इत्यर्थः । सुखभोगार्थं कृते, सुकृतलभ्ये वा नाकलोके । **अनु भूत्वा** अनुभूय । छन्दस्यन्विति भिन्नं पदमिति न ल्यप्प्रसङ्गः । ऐकपद्येऽपि छन्दसि त्त्वाऽपि भवति । इमं लोकं मनुष्यशरीरम् । हीनतरं वा वृकवराहादिशरीरम् । अपिचेमं मर्त्यलोकम् । **'क्षीणे पुण्ये मर्त्यलोकं विशन्ति'** इति स्मरणात् । यदि स्वयं तामसाः, आचार्यतपोबलात् स्वर्गं गताः तदा **हीनतरमुत्तरोत्तरं तमो वा आविशन्ति** प्रविशन्तीत्यर्थः । तमसा आविष्टा हि त इत्याविशन्तीत्याह ॥ ❋ ॥

**'नैष्कर्म्यम्—'** इति भागवते भागवतोत्तमस्य नारदस्य वचनम् (१.५.१२) । भक्तिं विना ज्ञान-वैराग्याभ्यामपि न पूर्यत इत्याह । यत्र कर्मणां निःशेषक्षयः स निष्कर्मा मोक्षः । तस्येदं साधनं नैष्कर्म्यम् । स्वभावतः मोक्षसाधनमपि अच्युते भक्तिवर्जितं चेत् **न शोभते** न मोक्षसाधनं भव-तीत्यर्थः । भावः उत्कटः स्नेहः । अच्युते भावः । अच्युतश्च भावः । निरन्तरः अव्यभिचारी चेत्यर्थः । **अलं** समग्रं शास्त्र**ज्ञानम्** । **निरञ्जनं निर्दुष्टं** च । ननु भगवद्भक्तिवर्जनमेव दोषः । सत्यम् । अतः संसार-मोहादिराहित्यमनेनोच्यते । वैराग्यसहितमपि भक्तिरहितं न शोभते । एकेन पक्षेण स्खलन्स्खलन् पतन्निव पतत्री । **अकारणम्**, कर्मकरणे फलापेक्षा न कारणं चेदपि ॥ ❋ ॥

**यत** इति गीतायाम् (१८.४६) । स्वविहितेन स्वभावसहजेन कर्मणा । तं सर्वात्मनाऽर्चयित्वा यतः सर्वाऽपि प्रवृत्तिः तदधीना, अतः स्वकृताऽपि पूजा तत्कृतैवेति **तमभ्यर्च्य** । यतस्तेन सर्वमिदं ततम्, अतः केनापि कुत्रापि यत् कर्म क्रियते तत् तस्यैव पूजा भवतीति **तमभ्यर्च्य** । एवं ज्ञानपूर्वं करणेन **सिद्धिं** मोक्षान्तां **विन्दति** मानवः भगवज्ज्ञानी ॥ ❋ ॥

**'त्रैविद्याः—'** इति च गीतायाम् (९.२०) । भगवत्पारम्यमजानन्तः, निष्कामतया भगवदर्पणम-कुर्वन्तः, केवलं वेदोक्तकर्मपराः, त्रिदिवनिरयभूगोचराः, ये कर्मठास्ते त्रैविद्या उच्यन्ते । तथाहीम उजेर्यपण्डिताः । अथापि अन्ते मयि समर्प्य **स्वर्गतिं प्रार्थयन्ते** । ते स्वकृतपुण्यफलं **सुरेन्द्रलोकमासाद्य** मनुष्यदुर्लभान् भोगानश्नन्ति ॥ ❋ ॥

**'मयि—'** इत्यादि श्लोकत्रयं च गीतायाम् (३.३०–३२) । सन्न्यस्य समर्प्य । अहमेव सर्वाधिकः परमात्मा इत्यनुसन्दधानः । फलाशारहितः । अहं कर्ता ममेदं कर्मेति ममतारहितश्च । विगत-

संशयः । कुशङ्कैव हि दुरन्ता व्याधिः । विधिनिषेधाभ्यामर्थवादमाह दार्ढ्यार्थम्– **'ये मे–'** इति । **'ये तु–'** इति ॥ ✻ ॥

**'तपस्विनः–'** इति भागवते शुकवचनम् (२.५.६) । तपआदिबहुविधमङ्गलोपेताः । कायवाङ्मनोभिरनुष्ठिततपसः । **दानपरा यजमाना वदान्याश्च** । तपोदानशीलाः मन्त्रार्थविदश्च । मङ्गलयशसे आदरनैरन्तर्याभ्यां नम इति ॥ ✻ ॥

एष एव हि दाश्वान् यजमानः । य एवं भगवन्तमेवङ्गुणविशिष्टं वेद । तेन न ज्ञानकर्मणोर्विरोधः । ज्ञानिनामेव मुख्यतः कर्माधिकार इत्युक्तं भवति ॥ ✻ ॥

**'यदेव–'** इति च्छन्दोगोपनिषत् (१.१) । **उपनिषदा** कर्मरहस्यज्ञानेन । सर्वकर्मणां सर्वमन्त्राणां भगवत्पर्यन्तत्वज्ञानेनेत्येतत् ॥ ✻ ॥

**'परं भावम्–'** इति च गीतासु । परं भावमित्युत्तरार्धम् । नवमे एकादशस्य पद्यस्य, **'मोघाशाः–'** इति द्वादशस्य पूर्वार्धम् । **भावं** स्वरूपम् । सामर्थ्यं च । भूतिर्महालक्ष्मीः तस्या अयं पतिरिति भूतः । भूतिरुन्नतिः । सर्वोन्नतत्वाद् भूतः । भुवि ततत्वाच्च । महांश्चायं सर्वतः । मं ज्ञानम् । मानेन दोषहानेन च महान् । मानं निर्माणं लयश्च । जगत्सृष्टिसंहाराभ्यां च महान् । **विचेतसः** भगवत्स्मरणरहिताः विवेकविधुराश्च । ईष्ट इतीश्वरः । ईशानां ब्रह्मादीनामपि वरणीय इति ईश्वरः । जगदीशित्र्या रमाया अपि वरः । अथ च भूतेभ्यो भूतेषु वा महानिति भूतमहान् । **'अस्य महतो भूतस्य'** इति श्रुतिः । **'एको विष्णुर्महद्भूतम्'** इति स्मृतिः । महांश्चायमीश्वर इति महेश्वरः । **'यः परः स महेश्वरः'** इति, **'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'** इति च हि पठन्ति । ईशा इन्द्रान्तास्तत्वाभिमानिनो बाह्येन्द्रियनियामकाः । रुद्राद्या ब्रह्मान्ता अन्तरङ्गनियामका महेशाः । तेषामप्ययं वरः । **'अकयप्रविसम्भूमसखहा विष्णुवाचकाः'** । तेन सर्वाश्रयो भगवान् भूतः । ततत्वात् तः । मातृत्वान्मः । दोषहानाद्दैत्यहननाच्च हः । सर्वेष्टत्वादिः । आनन्दत्वाच्छम् । ज्ञानबलरूपत्वाद् वम् । रतिरूपत्वाद् रम् । एः कामस्यापीष्ट इति चेशः । ईः लक्ष्मीः । ततस्या

अपीशइतिचेशः । श्वयति नित्यवृद्धः सर्वगत इति च श्वम् । ज्ञानानन्दरूपत्वाद्वा वरम् । एवमुपनिषदा रहस्यानुसन्धानेन वीर्यवत्तरं भवति ॥ ✻ ॥

**'सर्वगुह्यतमम्–'** इति च गीतायाम् (१८.६४), **'मन्मनाः–'** इति च (६५) मन्मना इति ज्ञान-मुक्तम् । मां मन्यत इति । मय्येव मनो यस्येति च । मद्भक्त इति स्फुटम् । नमस्कुरु न मे इति सर्वं मयि समर्पयेति वैराग्यम् ॥ ✻ ॥

**'विज्ञानमानन्दं ब्रह्म–'** इति बृहदारण्यके (५.९.३४) । दातुः यजमानस्य रातिः सर्वाभीष्टदम्, मित्रं वा । कीदृशस्य दातुः? भक्त्या ब्रह्मैव सदोपतिष्ठमानस्य । तज्ज्ञानिनः ब्रह्मण्येव स्थितिरिरिति संसाराद् विरक्तिरप्यर्थादुक्ता ॥ ✻ ॥

**॥ इति इतिकर्तव्यतानिर्ण्णयः ॥**

**नमो नारायणायाजभवशक्रोष्णरुङ्खैः ।**
**सदा वन्दितपादाय श्रीपाय प्रेयसेऽधिकम् ॥ ✻ ॥**

प्रवचनान्ते पुनः षोळशिनाऽऽनुष्टुभेनैव मङ्गलमाचरति– **नम** इति ॥

अजाविति ब्रह्मवायू । त्रिष्वपि सवनेषु हरिणा साकं स्तुत्यौ । मध्यन्दिनसवने रुद्रः । शक्रः विशिष्याऽ-राध्यः मध्यन्दिनसवने, सायं सवनेऽप्यादित्येष्वेकत्वात् सूर्यश्च । उष्णरुगिति अग्निश्चोच्यते । स प्रातःसवनदेवता । एवं वसुरुद्रादित्यान् तरतमभावेनाऽह । तैर्वन्दितपादो मुख्येज्यो भगवान् । प्रेयांश्चाजभवादीनाम् । यज्ञे दक्षिणा रमेति श्रीपायेत्याह । तस्याश्चाधिकं प्रेयसे । मम चाधिकं प्रेयसे नम इत्याह । नचेदं नमनं प्रचयाद्यर्थं सम्प्रत्येव । किन्तु सदा नमन् शिष्यान् तद् ग्राहयितुमत्रान्ते ग्रथयामास ॥ ✻ ॥ ✻ ॥

**'यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं**
**'बट् तद् दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।**

'वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-
'र्म्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥ ✻ ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादरचितः खण्डार्थनिर्ण्णयः समाप्तः ॥**

—०—

अन्ते स्वस्वरूपं प्रकटयन्नाह– **यस्य त्रीणि** । **'बळित्था–'** इत्यादि वेदवचने, **अपाः पूर्वेषामिति** षोळशियाज्यामन्त्रेऽपि **यस्य त्रीणि रूपाण्युदितानि** । दिव्यानि स्वकार्ये जयशीलानि, उत्कर्षवन्ति च । अलं भगवत्कार्यसाधने पर्याप्तानि । **तत्** तत्रैकैकमपि रूपं बट् बलरूपम् । दर्शतं दर्शनं ज्ञानरूपम्, दर्शनेन ततं वा । **'बट् तद् दर्शतम्'** इति **'बळित्था तद् वपुषे धायि दर्शतम्–'** इति श्रौतपदान्येवाऽदत्त । बलत्वाद् वम् । ज्ञानरूपत्वादयत इत्यायुरिति वायुपदार्थं चाऽह । यथा मूले इत्थमेवावताररूपेऽपि निहितम् । देवस्य भरणात् सर्वत्र गमनाच्च महत् तद् रूपम् । सदा हृदि भगवद्धरणात् । देवस्य वायोर्वा शत्रुभर्जनं रूपम् । रामस्य वचांसि सीतां प्रति नयत् प्रथमकम् । कं पिबन्नेव कपिरासेति दर्शयितुं प्रथमकमित्याह । कौरवपृतनां क्षपयद् द्वितीयम् । यदेव तृतीयं साम्प्रतं स मध्वो नाम । अमुना ग्रन्थः कृतोऽर्पितः केशवे । केशवप्रीत्यर्थं च कृतः । कौ ब्रह्मवायू ईशं शिवं च वर्तयतीति केशवः । केशेषु सूर्यकिरणेषु वर्तत इति च । के इति केतुः । ज्ञानरूप इत्यर्थः । सुखरूपः शम् । बलरूपत्वाद् व इति वा । केवलानन्दरूप इति वा । तदिदं याज्यामन्त्रव्याख्यानं चेत्युक्तम् । तद् विवृतं याज्यामन्त्रव्याख्यानावसरे ॥

प्रायः इदं पद्यमुपन्यासकाले न पठितं भगवत्पादेन । पश्चाद् विनेयप्रार्थनया निवेशितं स्यादिति भाति । याज्यामन्त्रव्याख्यानरूपत्वं च ग्रथनबीजम् ॥ ✻ ॥

**यत् पपाथ भगवद्गुणपाथो यज्जगन्थ भवसागरपारम् ।**
**यत् सतामुवचिथ प्रियतत्वं तेन मध्व सुहृदध्वनि भूयाः ॥ ✻ ॥**

**भेकाः क्वचन च काका नाऽकाशं पूरयन्ति किमु रावैः ।**
**दूरे किल सहकारे कोकिल रे गाय नायकीभूय ॥ ✻ ॥**

दुर्गमबह्वर्थोऽयं ग्रन्थः सन्तोषदो विदुषाम् ।
बहुधा विवृतावपि न स्वान्ते पर्याप्तताक्लृप्तिः ॥ * ॥

इमामाचार्यगोविन्दः प्रमृष्टां शब्दतोऽर्थतः ।
खण्डार्थनिर्णये टीकां वितेने शिष्यवाञ्छया ॥ * ॥

वेदप्रवचनपटुना गोविन्दपण्डिताचार्येण ।
रचिता रुचिता टीका भूयान्निर्म्मत्सराणां सतां तुष्ट्यै ॥ * ॥

आचार्यगोविन्दमनुप्रविश्य
संसृष्टमन्त्रार्थमुवक्थ यस्त्वम् ।
आनन्दतीर्थस्य तवानुकम्पां
को वा कवीन्द्रः परिमातुमीष्टे ॥ * ॥

नन्दितीर्थाय गुरवे हरये परमात्मने ।
नमस्तस्मै नमस्तस्मै नमस्तस्मै नमोनमः ॥ * ॥

॥ इति गोविन्दपण्डिताचार्यकृतिषु खण्डार्थनिर्णयटीका
खण्डार्थचन्द्रिका समाप्ता ॥

—०—

# परिशिष्टम्

१. प्रथमपाठिनः पाश्चात्यो वाकः

२. खण्डार्थनिर्णयोदाहृतप्रमाणानामनुक्रमणी

२. तारतम्यमीमांसा

# प्रथमपाठिनः पाश्चात्यो वाकः

अयमेकः प्रतनानां प्रियः सम्प्रदायः– यत् आचार्यमुखादेव श्रवणसमुत्खातदुःखसङ्घातेभ्यः साक्षाच्छिष्येभ्य ऋते श्रीजयतीर्थमुनिरेवाचार्यवाणीं विवरीतुमीष्ट इति । अतः श्रीजयतीर्थमुनिमेव महान्तः सर्वे चन्द्रिकाचार्यप्रभृतयः अनुसस्रुः । ये केचन साक्षादाचार्यं व्याचक्षते, तेऽपि श्रीजयतीर्थमुनिना प्रदर्शितं पन्थानमेवानुपेतुः ॥

अस्मिन्नेवावसरे तत्ववादाध्ययनपरम्परायां सर्वेषु गुरुकुलेषु पृथगपृथग् पठनप्रवचनरतेषु गृहेषु वा आचार्यमुखकमलादेव अधिगतसमस्ततत्ववादानां पद्मनाभतीर्थनरहरितीर्थविष्णुतीर्थश्रीचरणानां तत्रापि लिकुचकुलोद्भवानां पण्डिताचार्याणां महतां कृतिनां ग्रन्थाध्ययनं विलुलोप इति महानपचारः समजनि । जयतीर्थभिक्षुप्रदत्तेन चक्षुषा आचार्यदर्शनं न दोषावहम् । गुणमावहति च । नास्ति तत्र संशीतिः । अपि तु जयतीर्थभिक्षुप्रदत्तेनैव चक्षषाऽऽनन्दतीर्थदर्शनमवश्यं दोषमावहत्येव । नास्त्यत्रापि संशीतिलेशः ॥

अपि च विना वेदाध्ययनेन व्याख्यानस्य ब्रह्मसूत्रस्याध्ययनं माध्वानामित्यद्भुतोऽयं सत्सम्प्रदायः ! **'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति....'** इति विषयवाक्यस्य पूर्वापरमजानन्नेव **'जन्माद्यस्य यतः'** इति सूत्रस्य पठनपाठनक्रमः माध्वेषु निर्लज्जं प्रवर्तत इति अपहसन्ति स्म मम स्मार्तमित्राणि । खिद्यते मे मनः । क्रोधे कुत्रास्ति बीजम्? सत्यमाहुस्ते ॥

विना व्याकरणशास्त्रम्, ऋते च छन्दोज्ञानात्, अपहाय च समग्रशास्त्राध्ययनं, आचार्यमध्वेन रचितं प्रमेयशास्त्रमस्पृष्ट्वैव कांश्चन प्रकरणग्रन्थानेवाधीत्य, तेष्वपि खण्डश एव विदित्वा, प्रायशो विराजन्ते

माध्वाः। द्वित्रान् विहाय। तेष्वग्रणीः अयमत्र मम परमो गुरुः निष्टीकाकृत्पादः समधिगतसमस्ततत्वशास्त्रः आनन्दतीर्थपदभक्तः वेदभाष्यकर्ता नव्यश्चन्द्रिकाचार्यः ॥

तथ्यमाह प्रथमः परमो गुरुर्मे विश्वेशतीर्थश्रीचरणः –

'माध्व-मत-मन्दार-मकरन्द-मिलिन्द-
'मानन्दितानन्द-तीर्थ-हृदयारविन्दम् ।
'संस्कृत-साहित्य-सरस्वती-दुकूल-कलन-
'कुविन्दमाचार्य-गोविन्दमभि-नन्दामः ॥

'देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं
'गोविन्दो ननु.. वेत्त्यतितरां शास्त्रार्थ-संशोधकः ।
'अब्धिर्लङ्घित एव वानरभटैः किन्त्वस्य गम्भीरता-
'मापाताल-निमग्न-पीवर-तनुर्जानाति मन्थाचलः' इति ॥

द्वाभ्यां वर्षाभ्यां प्रागेव एकस्यां विजयदशम्यां पर्वकाले आचार्यं सश्रद्धमपृच्छम्– 'कृपया मां वेदार्थं पाठयन्तु' इति ॥

प्रथमं नोरीचक्रुः । अन्ते दिष्ट्याऽऽङ्गीचक्रुः ।

अस्मिन्नेवावसरेऽहं विद्यापीठे अध्यापकत्वेन नियुक्त आसम् श्रीचरणाज्ञया । अहं श्रीगोविन्दाचार्य-स्यान्तेवासी भवेयमिति तेषामनुमतिमपृच्छम् ॥

श्रीचरणश्च– 'महान्तस्ते गोविन्दाचार्याः[1] । तैरेव 'पाठयामि' इत्यङ्गव्यकारि । असदृशी विद्वत्ता । वक्ता चास्य (वेदार्थस्य) तादृगन्यो न लभ्यः । तव भागधेयमिदम् । किमर्थमहं प्रतिबन्धको भवेयम् । सम्यक् श्रयतु शृणोतु च । सम्यगधीत्य अस्मच्छात्रानध्यापयतु' इत्याशिषा मां प्रेषयामास ॥

भागवततात्पर्यनिर्णयेन सहैव वेदाध्ययनमप्यारब्धम् । तत्र वेदाध्ययने प्रथमो ग्रन्थः खण्डार्थनिर्णयः । तमिमं ग्रन्थं प्रेम्णा माम्, कौशिकम्, तत्पत्नीं रमां च प्रतिदिनं प्रातःकालेऽपाठयन् । अहो प्रतिदिनं महोत्सवः!

---

१. अत्र गुरुचरणेन कर्णाटकभाषायामुदितं यथातथमनूदितम् ।

आनन्दतुन्दिला वयम् । वर्णने नास्मि शक्तः । अशब्दं तत् । कृतज्ञा वयम् । भूयिष्ठां तस्मै नम उक्तिं विधेम ॥

इदानीं व्याख्यानं च सम्पन्नम् । 'खण्डार्थचन्द्रिकाविषये कश्चन विमर्शः विरच्य देयः' इति प्रीत्या गुरुणाऽऽदिष्टोऽस्मि ॥

'अहन्त्वत्यन्तं निकृष्टः । भवतां विमर्शने नाहं योग्यः । मम संस्कृतभाषा च नीरसा । भवतां च महाभाष्यशैलीमनुसरति मनांसि हरति च । कथं मम विमर्शः निर्णयचन्द्रिकया सहैव प्रकाशने योग्यो भवेत् । कृपया माऽस्तु' इति बहुधा विललाप । 'सर्वं विज्ञायैव बुद्धिपूर्वमादिदेशाहम् । निश्शङ्कं विमृशतु' इत्याज्ञया बद्धोऽहं सौभाग्यमिति मत्वा समायुञ्जे ॥

## प्राचीनयोर्गुरुशिष्ययोः श्रीनरहरितीर्थजयतीर्थयोरभिप्रायभेदः

ब्रह्मणोऽनन्तगुणत्वविचारावसरे आचार्यमध्वः – 'तत्रैक आहरगुणं ब्रह्मेति । न तद्युक्तं श्रुतियुक्तिविरोधात्' इति निर्गुणत्वं निराचकार । तत्राऽचार्यसाक्षाच्छिष्यस्य श्रीनरहरितीर्थस्य व्याख्यानमनूद्य दूषयति श्रीजयतीर्थमुनिः – '**युक्त्युपेतमिति व्याख्यानमसत्**' इति । तदिदं स्फुटमुक्तं श्रीनिवासतीर्थीये । यदि न युक्तमित्यस्य युक्तिविरुद्धमित्यर्थः, तर्हि 'युक्तिविरुद्धं श्रुतियुक्तिविरोधात्' इत्यनुमाने साध्याविशिष्टता । तस्यां च सत्यामसङ्गतिः । सति साध्याविशिष्टत्वे सिद्धसाधनत्वेन ग्रस्तमिदमनुमानम् । लिङ्गनिश्चयः खलु अनुमितावङ्गम् । लिङ्गे निश्चिते तदभिन्नं साध्यमप्यनुमितेः प्रागेव निश्चितमिति सिद्धसाधनता । युक्तमित्यस्य युक्त्युपेतत्वमित्येवार्थः । न ततः साध्याविशिष्टता । नास्ति च सिद्धसाधनत्वमिति यदि ब्रवीषि तर्हि 'ब्रह्मणो निर्गुणत्वं असिद्धं युक्त्युपेतत्वाभावात् । इति प्रथममनुमातव्यम् । अत्र च स्वरूपासिद्धौ शङ्कितायां द्वितीयमनुमानमारब्धम् – 'न युक्त्युपेतं श्रुतियुक्तिविरोधात्' इति पर्यवस्यति ॥

अत्रच प्रथमानुमाने हेतुरप्रयोजकः । न खलु केवलं युक्त्यभावः प्रमेयाभावं साधयति । विनाऽपि युक्त्या प्रत्यक्षेण वा श्रुत्या वा प्रमेयं सेत्स्यति । मानाधीना हि मेयसिद्धिः । संविदेव हि भगवति

विषयसत्वोपगमे नः शरणम् । यदि प्रमाणविशेषशून्यत्वमात्रेण प्रमेयाभावं सिषाधयिषति, तर्हि अप्रत्यक्षे पर्वतीयवह्नौ, युक्तौ सत्यामपि प्रमाणविशेषस्य प्रत्यक्षस्याभावेन पर्वतीयवह्निः न सिद्ध्येत् । एवमेव ब्रह्मणः निर्गुणत्वे युक्त्यभावेऽपि प्रत्यक्षेण वा श्रुत्या वा सिषाधयिषाम इति 'हेतुरस्तु साध्यं माऽस्तु' इत्यप्रयोजकत्वे अनुकूलतर्काभावेनाप्रयोजकः प्रथमो हेतुः ॥

ननु युक्तिशब्दस्य प्रमाणसामान्ये लक्षणां स्वीकुर्मः । अतो युक्त्युपेतत्वाभावादिति प्रमाणत्वावच्छिन्नप्रतियोगिताकाभावादित्यर्थकम् । तथा च प्रमाणसामान्याभावेनैव प्रमेयाभावः सिषाधयिषित इति न दोषगन्ध इत्युक्ते, स्वायत्ते शब्दप्रयोगे किमिति लाक्षणिकप्रयोगः । नहि प्रयोजनाभावे लाक्षणिकं प्रयुङ्क्ते इत्यकौशलमनुमानप्रयोक्तुः ॥

युक्तिशब्दस्य प्रमाणसामान्ये निरूढलक्षणां स्वीकुर्मः । सा च शक्तितुल्या । न प्रयोजनमपेक्षते, इत्यपि समाधानं न रोचते ॥

द्वितीयानुमानस्य 'न युक्तमिति' प्रतिज्ञायां सत्यामपि, यच्छब्दाध्याहारेण 'यतो न युक्तमिति' व्याख्यानेन लब्धस्य युक्त्युपेतत्वाभावादित्यस्य प्रतिज्ञा नास्तीति प्रतिज्ञाध्याहारप्रसङ्ग इति आचार्यवाक्यं न्यूनताग्रस्तं भवति श्रीनहरितीर्थव्याख्याने इति तद्व्याख्यानमसदित्यभिप्रैति श्रीजयतीर्थमुनिः ॥

ननु 'न तद् युक्तम्' इत्याचार्यवाक्ये तच्छब्देन ब्रह्मागुणत्वं परामृश्यते इति पक्षः सिद्ध्यति । परन्तु 'असिद्धं' इति साध्यमात्रं न सिद्ध्यति । अतः प्रतिज्ञाध्याहारप्रसङ्गः इति कथं श्रीजयतीर्थमुनिराक्षिपतीति जिज्ञासायां श्रीछलारीनरसिंहाचार्यकृतगूढवाक्यार्थपञ्चिकायां 'प्रतिज्ञाशब्दः साध्ये लाक्षणिकः' इति समाहितम् । प्रतिज्ञाध्याहारप्रसङ्गेन न्यूनताऽभावेऽपि 'साध्यावचनेन' न्यूनता भवेदेव ॥

भावदीपे श्रीराघवेन्द्रतीर्थश्रीपादस्तु युक्तिशब्दः प्रमाणत्वावच्छिन्नं लक्षणया ब्रवीतीति स्वीकारेऽपि ब्रह्मणः निर्गुणत्वे प्रमाणसामान्यं नास्त्यतो निर्गुणत्वं न सेत्स्यतीति वाक्यार्थो भवति ।

परन्तु 'साक्षी चेता केवलो निर्गुणश्च' इति श्रुतिं वक्ष्यति मायावादी । तर्हि कथं वा अप्रामाणिकं निर्गुणत्वमिति स्वरूपासिद्धश्च हेतुरित्येको दोषः । न तद्युक्तमिति एको हेतुः । श्रुतियुक्तिविरोधादिति द्वितीयो हेतुरिति 'विरोधाच्च' इति चशब्दाध्याहारप्रसङ्गोऽपि दोष इति श्रीजयतीर्थमुनिनानुक्तो दोषः उपलक्षणत्वेन स्वीकार्य इत्याह ॥

# द्वितीयोऽभिप्रायभेदः

'ब्रह्म सार्वज्ञ्यादिगुणोपेतम्, बुद्धिपूर्वं सर्वकर्तृत्वात्, न यदेवं न तदेवम्, यथा यज्ञदत्तः' इति केवलव्यतिरेक्यनुमानं सार्वज्ञ्यादिविषये उक्तं भवतीति व्याचष्टे श्रीनरहरितीर्थमुनिरिति श्रूयते ॥

'तत्तु न बुद्ध्यामहे' इति जयतीर्थभिक्षुः मृदूक्त्या निराचकार । वस्तुतस्त्वयुक्तमेवेति जयतीर्थश्रीचरणस्य हृदयम् । हेतुघटकविशेषणानां व्यभिचारवारकतयैव सार्थक्यमिति हि न्यायविदो वदन्ति । अतो यद्याचार्यः एवमनुमित्सति तर्हि बुद्धिपूर्वमिति विशेषणं व्यर्थमापद्येत । व्यभिचाराप्रसक्तेः । एकैकोऽपि जीवः अदृष्टमुखेनैकैकं वस्तु निर्माति । अन्ततः सम्भूय जीवेषु सर्वकर्तृत्वमस्ति । परन्तु न सन्ति सार्वज्ञ्यादिगुणाः इति व्यभिचारः । बुद्धिपूर्वं तु जीवाः न सर्वकर्तारः । केवलमदृष्टपूर्वमेवेति सार्थकं विशेषणमित्यपि मा शङ्कि । सम्भूय जीवाः यथा सर्वकर्तारः तथैकैकोऽपि जीवः एकैकं जानाति, सम्भूय जीवा अपि सर्वज्ञा एवेति सपक्षवृत्तिरेव हेतुः, न विपक्षवृत्तिरिति व्यभिचारस्याप्रसक्तेः । कालाकाशदिशः कार्यजातं प्रति निमित्तकारणानि । अतः सर्वकर्तृत्वं कालादिषु गतम् । अतो बुद्धिपूर्वं सार्थकमिति किमर्थं व्यर्थमित्याशङ्कसे?

अयि भोः कालादयो निमित्तान्येव केवलम् । न कर्तारः । स्पष्टमाह आचार्यमध्वः अनुव्याख्याने द्वितीयाध्याये प्रथमपादे असदधिकरणे– **'बुद्धिपूर्वप्रवृत्तिर्हि कर्तृत्वमिति निश्चितम्'** इति । अतो न कदाऽपि जडानां कर्तृत्वम् । तस्मात् न कालादिव्यवच्छेदार्थमपि बुद्धिपूर्वमिति विशेषणं सार्थकम् ॥

सत्यम्, अनुव्याख्याने परिष्कृतं कर्तृत्वं जडे नास्ति । परन्त्वत्रस्थं कर्तृत्वपदं कारणसामान्ये लाक्षणिकमिति ब्रूमः । कारणरूपं कर्तृत्वं च जडेऽपि गतम् । नास्ति च सार्वज्ञ्यम् । तस्मात् कालादिव्यवच्छेदार्थं बुद्धिपूर्वमिति सार्थकमिति त्वतिस्थवीयः । वाचनिकेनैव सुसम्पन्ने वाच्यार्थं परित्यज्य गौणं स्वीकृत्य दोषं चाऽवाह्य परिहर्तुं च प्रधावति । अद्भुतमिदं भाष्यकाराणां बुद्धिकौशलम् ॥

मायावादिनं खलूद्दिश्यानुमित्सत्याचार्यमध्वः । यो हि ब्रह्म निर्गुणं मन्यते स कथं वा बुद्धिं सर्वकर्तृत्वं च ब्रह्मणि मन्येत । अतः स्वरूपासिद्धो हेतुः ॥

यदि 'स तपस्तस्त्वा इदं सर्वमसृजत' इत्यादिश्रुत्या बुद्धिपूर्वं सर्वकर्तृत्वं ब्रह्मणि प्रतिपादयामः, अतो न स्वरूपासिद्धेरवकाश इति ब्रूयाः। सत्यं तर्हि स्वरूपासिद्धेरवकाशो नास्ति। न केवलं स्वरूपासिद्धेः, अपि त्वनुमानस्यैवावकाशो नास्ति। अनुमेयत्वास्पदे सार्वज्ञ्यादिके श्रुत्यैव सिद्धे किमित्यनुमानं जागर्ति। असिद्धं खलु साधयति लोको न पुनः सिद्धमेव ॥

सत्यम्। जानीमो वयमसिद्धमेव साध्यम्, न सिद्धमिति। उदाहृतश्रुतिः सार्वज्ञ्यमेव साधयति। न त्वपेक्षितमनन्तगुणपूर्णत्वम्। तच्चानुमीयते। अतोऽनुमानं जागर्तीत्यपि न साधु ॥

निर्गुणत्वनिराकरणे प्रवृत्तो भवानप्रसक्तमनन्तगुणपूर्णत्वं किमर्थं सिषाधयिषति। अद्भुतमिदम्। प्रतिपदं प्रकटयत्यात्मनोऽकौशलम्। आपादयति च भाष्यकारे!

कार्यकारकक्रियाफलाभिज्ञानतदिच्छाप्रयत्नपूर्वकः स्पन्दः खलु कर्तृत्वम्। तथा च सार्वज्ञ्यादिकं सर्वकर्तृत्वान्तर्गतमिति कथं वा न साध्याविशिष्टता?

## अयमत्र तृतीयः

**'वेदवाक्यस्य तु वाचनिकार्थं विना नैवान्यो युज्यते'** इत्याचार्यवाक्यं वेदेऽमुख्यवृत्तिरेव नास्तीति विववार श्रीनरहरितीर्थमुनिः ॥

विकल्प्य निराचक्रे श्रीजयतीर्थमुनिः –

किं वैदिकानि पदानि गोर्णीं वा लक्षणां वा न भजन्त इत्यभिप्रायो वा? आहो गौणार्थस्य लक्ष्यार्थस्य वान्वयो नास्त्येवेत्यभिप्रायो वा?

नाऽद्यः, यानि वैदिकानि तान्येव लौकिकानि। अतो यदि न स्तो वेदे अमुख्यवृत्ती तर्हि लोकेऽपि न भवेताम् ॥

न द्वितीयः। शास्त्रे सहस्रशो वाक्यानि गौर्णीं लक्षणां चाऽश्रित्य प्रवृत्तानि–

**अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति।**
**ईशानो भूतभव्यस्य न ततो विजुगुप्सत एतद् वै तत् ॥**

इति हि कठोपनिषदि द्वितीयाध्याये प्रथमवल्ल्यां द्वादशो मन्त्रः । न खलु विष्णोर्विभोः अङ्गुष्ठमात्रपरिमाणत्वमिति जिज्ञासायां **'हृद्यपेक्षया तु मनुष्याधिकारत्वात्'** इति स्थानैक्यप्रयुक्त-मिदमङ्गुष्ठमात्रत्वमिति हि समादधौ भगवान् व्यासमहर्षिः लक्षणामाश्रित्य ॥

'ऐतदात्म्यमिदं सर्वं स आत्मा तत्त्वमसि श्वेतकेतो' इति हि छन्दोगाः । अत्र तच्छब्दस्य सादृश्ये गौणी वृत्तिः । एवं बहून्युदाहरणानि प्रदर्श्य द्वितीयपक्षमपि निराह ॥

अयि भोः किन्तर्हि 'ता वा एताः सर्वा ऋचस्सर्वे घोषाः सर्वे वेदाः एकैव व्याहृतिः प्राण एव' इति श्रुतिः कण्ठरवेण परममुख्यार्थत्वं भगवत आह ॥

**'तत्तु समन्वयात्'** इत्यनेन, **'ज्योतिरुपक्रमात्'** इत्यादिन्यायेन च परममुख्यार्थो नारायण एवेति भगवता व्यासमहर्षिणाऽपि समन्वयाध्याये सयुक्ति प्रत्यपादि ॥

**'अस्माकं परमुख्यार्थो भगवानेक एव तु ।**
**मुख्यमात्रतया रूढं सर्वमभ्युपगम्यते ।**
**सर्वेषामपि शब्दानां गौणाद्यं तदयोगतः'** ॥

इत्यनुव्याख्याने भाष्यकारोऽपि परममुख्यार्थो भगवान् नारायण एवेत्युज्जुघोष । किमिदं सर्वं श्रीजयतीर्थमुनिर्विरुणद्धि?

शृणु सावधानम्–

पदसमन्वयः, वाक्यसमन्वयः, प्रकरणसमन्वयः इति हि शास्त्रमर्यादा । पदसमन्वयपक्षे भगवानेव परममुख्यार्थः । वाक्यसमन्वयपक्षे तु लक्ष्यार्थो भवतीति श्रुतिसूत्रभाष्यकाराः संवदन्त एव श्रीजयतीर्थ-मुनिम् । **'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः'**, **'अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके'** इति हि शृणुमः ॥

अपिचान्विताभिधानवादिनो वयम् । भगवदन्वितान्येव कर्माणि कर्मकाण्डे श्रूयन्ते । न पुनर्भगवद-नन्वितानि । किमु पुनर्वक्तव्यं ब्रह्मकाण्डे? अतो नारायणस्यैव परममुख्यार्थत्वम् । परन्तु 'नास्त्यमुख्यवृत्तिः वेदे' इति तु न तत्वादिनो मन्यन्ते ॥

ननु **'रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेत् । तत्रापि यौगिको मुख्यस्सर्वत्रास्ति स वैदिके '** इति ब्रह्मतर्को विरुद्ध्यते । सत्यमापाततो तथा भाति । केवलो रूढो नापि केवलो यौगिकोऽस्तीति व्याख्यानेन न विरुद्ध्यते ॥

## प्राचीनार्वाचीनयोः श्रीनरहरितीर्थगोविन्दपण्डिताचार्ययोः सामरस्यम्

**'न तद् युक्तम् । श्रुतियुक्तिविरोधात्'** इति ग्रन्थव्याख्याने श्रीनरहरितीर्थसरणिमेवानुसरति मम गुरुः नव्यचन्द्रिकाचार्यः । ननु जाग्रति श्रीजयतीर्थमुनिप्रकटिता दोषाः । स्वापं प्रापयामो वयम् ॥

न वयं यच्छब्दमध्याहरामः । अतो 'न तद्युक्तम्' इति न हेतुवचनम् । द्वे अनुमाने इति नास्माकं पन्थाः । अतः प्रथमानुमाने प्रतिज्ञाध्याहारप्रसङ्गो गर्भस्रावेणैव गतः ॥

तच्छब्देन परामृष्टं ब्रह्मणो निर्गुणत्वमेव पक्षः । न युक्तमित्येव साध्यम् । श्रुतियुक्तिविरोधादित्येव हेतुः । अत्रापि युक्त्युपेतमित्येव प्रतिज्ञार्थः । तेन न साध्याविशिष्टता च । युक्तिशब्दो न प्रमाणसामान्ये लाक्षणिकश्च । तेन 'स्वायत्ते शब्दप्रयोगे...' इति दोषोऽपि नास्मान् स्पृशति । अपि तु प्रतिज्ञैकदेशे साध्ये प्रतिज्ञाशब्दप्रयोक्तारं श्रीजयतीर्थमुनिमेवास्कन्दतेऽयं दोषः ॥

साध्याविशिष्टता तु जागर्ति । साध्यहेत्वैकदेशयोरभेदादित्यप्यसङ्गतम् । 'युजिर् योगे' इति धातोः 'स्त्रियां क्तिन्' इति क्तिनि संस्कृतोऽयं युक्तिशब्दो भावसाधनः सङ्गतिं वक्ति । युक्तं सङ्गतम् । न युक्तमसङ्गतमित्यर्थः । कुत्रासाङ्गत्यम्, साध्यैकदेशस्याभेदवार्ता वा?

अथवा युक्तिरित्यनुमैव । तत्रास्ति कश्चन विशेषः । युक्तिरिति श्रुतिरपि **'पृष्टेनाऽगम एवादौ वक्तव्यः साध्यसिद्धये'** इति श्रुतिरेव लिङ्गत्वेन वक्तव्याऽदौ नतु श्रुतिव्यतिरिक्तं लिङ्गम् । तेन 'श्रुतियुक्त्युपेतं न' इति साध्यम् । ताभ्यां विरोधादिति हेतुः । पर्यवसितसाध्याविशिष्टता तु नोद्भावयितुं योग्या । अन्यथा प्रायः सर्वपरिशेषानुमानोच्छेदप्रसङ्गः ॥

अथवा ब्रह्मागुणमिति वचनं न श्रुतियुक्त्युपेतम् ब्रह्मागुणत्वस्य श्रुतियुक्तिविरोधात् । इत्यनुमान-स्वरूपम् । 'तत्रैक आहुरगुणं ब्रह्मेति' इत्यत्र आहुरिति वचनं खलु प्रस्तुतम् ॥

साध्यहेत्वोः वैयधिकरण्यं तु न दोष इति सर्वे तत्ववादिनः जानन्त्येव । केवलं समुचितदेशवृत्तित्वं खल्वपेक्ष्यते ॥

अनुव्याख्याने तृतीयाध्याये द्वितीयपादे स्पष्टमाहाऽचार्यः–

**'व्याप्तत्वे व्याश्रयत्वं तु कथमेव हि दूषणम् ।**
**'रोहिण्युदय आसन्नः कृत्तिकाभ्युदिता यतः ।**
**'इत्युक्ते साधनं नो किं न ह्याङ्गैवात्र साधिका'** इति ।

राघवेन्द्रश्रीचरणेन यद् दोषद्वयमुद्भावितं तदपि न लगति । एकमेवानुमानमिति 'श्रुतियुक्तिविरोधात्' इत्यत्र चशब्दाध्याहारप्रसङ्गो नास्ति ॥

युक्तशब्दस्य प्रमाणसामान्ये लक्षणाभावादेव 'निर्गुणत्वे श्रुतेः वक्ष्यमाणत्वात् कथमप्रामाणिकत्वमिति न प्रश्नस्यावसरः । अपि च पूर्वपक्षी अज्ञानेन निर्गुणत्वे श्रुतिं प्रदर्शयतीत्येतावन्मात्रेणाप्रामाणिकत्वं न प्रतिज्ञातव्यमिति तु न रोचते ॥

किञ्च न युक्तमित्यस्याशोभनमित्यर्थ एवाऽर्थिकः । न वाच्यः । यन्मनो न लगति तत्खल्व-शोभनम् । एवमार्थिकं वदता श्रीजयतीर्थमुनिनैवाकौशलमापादितमाचार्ये इत्यतिविस्मयः ॥

## अथ द्वितीयः

ब्रह्म सार्वज्ञ्यादिगुणोपेतम्, बुद्धिपूर्वं सर्वकर्तृत्वात्, इत्यत्र न बुद्धिपूर्वमित्यस्य व्यभिचारवारकत्वं प्रतिपादयितुं न शक्यत इति वैयर्थ्यप्रसङ्गः ॥

व्यभिचारवारकं विशेषणं यथा व्याप्तिग्रहौपयिकमिति सार्थकमेवमेवासिद्धिवारकमपि व्याप्तिग्रहं सहकरोति । अतोऽसिद्धिवारकमपि सार्थकम् । तत उत्तरप्रबन्धेषु 'हेतुघटकविशेषणानां व्यभिचारवारक-तयैव सार्थक्यम्' इति न्यायविद एव नाङ्गीचक्रुः । अतो व्यभिचारावारकत्वमात्रेण वैयर्थ्यं नापाद-नीयम् । वयं तु ब्रूमः । येनयेन विशेषणेन प्रदत्तेनैव सिषाधयिषितोऽर्थः सेत्स्यति तानि सर्वाण्यपि हेतावन्तर्भवेयुरेव ॥

**'कर्तृत्वात् सगुणं ब्रह्म'** इति भागवतवचनस्य विवरणरूपमिदम् । न खलु तत्र यत्किञ्चित्कर्तृत्वेन यङ्कञ्चन गुणं बुबोधयिषति भगवान् व्यासः । किन्तु सर्वकर्तृत्वेनानन्तगुणपरिपूर्णो नारायण इति खलु प्रतिपिपादयिषति । अतः सर्वपदं प्रायोजि भाष्यकारेण ॥

सर्वकर्तृत्वमपि नाभीप्सितमनन्तगुणपरिपूर्णं नारायणं समर्थयितुमीष्टे । सर्वकर्तृत्वस्य जडप्रकृतावपि प्रतिपादयन्ति वेदान्तिनः । न तस्यां सार्वज्ञ्यम् । अतो बुद्धिपूर्वमिति । निमित्तमिति यावत् । स च नारायण एव, न जडप्रकृतिः । अतोऽभीष्टदो भवति ॥

**'बुद्धिपूर्वप्रवृत्तिर्हि कर्तृत्वमिति निश्चितम्'** इति भाष्यकारेण निश्चितं कर्तृत्वं कथं वा जडप्रकृतौ भवेत्? सुतरां न सर्वकर्तृत्वम् । अतः सर्वकर्तृत्वमेवाऽभीष्टप्रदमिति व्यर्थमिदानीमपि बुद्धिपूर्वत्वमिति तु पार्श्वदृष्टीनामेवाऽक्षेपः ॥

गीतातात्पर्ये तृतीयाध्याये–

> **'कर्तृत्वं द्विविधं प्रोक्तं विकारश्च स्वतन्त्रता ।**
> **'विकारः प्रकृतेरेव विष्णोरेव स्वतन्त्रता'** इति पैङ्गिश्रुतिमुदाजहार भाष्यकारः ॥

तत्रैवोत्तरत्र–

> **'यस्मात् स्वतन्त्रकर्तृत्वं विष्णोरेव च नान्यगम् ।**
> **'तदधीनं स्वतन्त्रत्वं स्वावरापेक्षयैव तु ॥**
>
> **'जीवस्य विकृतिर्नाम कर्तृत्वं जडसंश्रयम् ।**
> **'पुमान् दोग्धा च गौर्दोग्ध्री स्तनो दोग्धेतिवत् क्रमात् ॥'**

इति ब्रह्मतर्कवचनादीश्वरजीवप्रकृत्यादीनां कर्तृत्वमकर्तृत्वं च विभागेन ज्ञातव्यं सर्वत्र' इति ब्रह्मतर्क-वचनेनापि प्रकृतिः कर्त्रीति न्यरूप्यानन्दतीर्थमुनिना ॥

न केवलं भाष्यकारः, टीकाकृत्पादश्च न्यायदीपिकायाम्–

'स्वतन्त्रकर्तृत्वमेव कर्तृत्वम् । अतः कथं जीवादेः कर्तृतोच्यत इत्यतः परतन्त्रकर्तरि कर्तृशब्दप्रयोगं दर्शयति– पुमान्' इति । एवं प्रकृतेरपि कर्तृत्वमत्र श्रीजयतीर्थमुनिरेव व्याचख्यौ ॥

अथ च राघवेन्द्रतीर्थश्रीचरणोऽपि न्यायदीपव्याख्याने भावदीपे 'यत्र जीवस्यैव कर्तृत्वमुच्यते तत्र पराधीनकर्तृत्वम्, यत्र प्रकृतेरेव कर्तृत्वमुच्यते 'कार्यते ह्यवशः कर्म सर्वैः प्रकृतिजैर्गुणैः' इत्यादौ विकाररूपकर्तृत्वमिति ध्येयमित्यर्थः' इति व्याचष्ट ॥

स्वयं तत्ववादाचार्य एव गीतातात्पर्ये कर्तृत्वं त्रिविधमिति सप्रमाणं निरूप्य, अनुव्याख्याने च **'बुद्धिपूर्वप्रवृत्तिर्हि कर्तृत्वमिति निश्चितम्'** इति व्याहतभाषी भवतीति त्वाचार्यविषये मा शङ्कि ॥

असति बाधके सर्वं वाक्यं सावधारणमिति हि प्रसिद्धम् । अतोऽनुव्याख्याने नेदमवधारणरूपमिति न विरोधः । अपि च प्रथमसूत्रे ब्रह्मशब्दोक्तगुणपूर्णत्वसम्भावकत्वेन जन्मादिसूत्रे कर्तृत्वमुपक्षिप्तम् । तत्र विप्रतिपत्तावसदधिकरणे गुणपूर्णत्वसम्भावकं कर्तृत्वं निरुक्तमिति प्रासङ्गिकमिति न व्याहतभाषित्वं तत्ववादाचार्यस्य ॥

भागवतोक्तमेवात्र निर्दिष्टमिति न स्वरूपासिद्धेरवकाशोऽस्ति । सूत्रकारेण भगवता व्यासमहर्षिणोक्ते हेतौ को वाऽसिद्धिं शङ्केत । भागवतमेव विवृणोत्याचार्यः । नात्रासिद्धिं परिहर्तुं श्रुत्यन्तरान्वेषणे सक्तो भवति । अतो नास्त्यनुमेयत्वाभावः ॥

सगुणत्वे हि विवादप्रसक्तिः नत्वनन्तगुणत्वे, अतोऽप्रसक्तभाषणमिदमनन्तगुणसिद्ध्यर्थमनुमानमिति तु **'अतोऽनन्तगुणो भगवान् नारायण इति सिद्धम्'** इति भाष्यविरुद्धमिति नाऽदर्तव्यम् । सर्वकर्तृत्वं जडेऽपि गतमिति 'सार्वज्ञ्यादिकं सर्वकर्तृत्वान्तर्गतमिति साध्याविशिष्टता' इति तु न प्रसरत्येव ॥

बुद्धिपूर्वं सर्वकर्तृत्वमपि चित्प्रकृतौ गतम् । न साऽनन्तगुणपूर्णा । तर्ह्यस्यापि हेतोः न साध्यप्रयोजकत्वमिति शङ्कायाश्च द्वे समाधाने भवतः ॥

प्रथमम्– सर्वान्तर्गता रमासृष्टिरपि । न तस्याः कर्त्री रमा । अपि तु नारायण एव कर्तेति सर्वकर्तृत्वमेव न रमायाम् । केवलं नारायण एव ॥

द्वितीयम्– सर्वान्तर्गता यदि न रमासृष्टिः, केवलं ब्रह्मादिसृष्टिरेवेति विवदसे तर्हि बुद्धिपूर्वमिति स्वबुद्धिपूर्वमेव । रमा च ब्रह्मादिसर्वकर्त्री । सत्यम् । अपि तु परबुद्धिपूर्वा । न स्वबुद्धिपूर्वेति न रमायां हेतुः ॥

अयि भोः यदि स्वेत्युपक्षिपति तर्ह्याचार्यस्यान्ततो नैयून्यमापादयत्येव श्रीनरहरितीर्थमुनिरिति मा भ्रशः । यथा हि पितरि साधुर्मातरि साधुरिति वाक्यं यत्किञ्चित्पित्रादौ साधुत्वेन न पर्यवस्यति । किन्तु स्वीये पित्रादौ । तत्कस्य हेतोः? पित्रादिशब्दानां सम्बन्धिशब्दत्वात् । सम्बन्धिशब्दानां ह्येष महिमा । अन्यथा पितुर्धनमुपादध्यादित्यादौ बहुविप्लवः स्यात् । सति चैवं शब्दमहिमानमनादृत्य प्रत्यवतिष्ठमानः छलवादितया जीयेत इति श्रीजयतीर्थमुनिरेव प्रत्यवतिष्ठते ॥

## अयमत्र तृतीयः

खण्डार्थचन्द्रिकायां **'वाक्येनैकेनाक्षिपद्धर्षतीर्थः'** इतीवानुक्तोपालम्भग्रस्तोऽयं वाद इति रमणीयं प्रत्यपीपदत् । न श्रीनरहरितीर्थमुनिः लक्ष्यार्थो वा गौण्यर्थो वा नास्तीति वा, आहोस्वित् वेदाः गौणीलक्षणारूपवृत्तिमेव न भजन्त इति वा विवक्षति । येन श्रीजयतीर्थमुनिनोद्भाविताः दोषाः जागृयुः । केवलं मुख्यार्थं विरहय्यामुख्यार्थो (गौण्यर्थो वा लक्ष्यार्थो वा) नास्तीत्येवार्थः । नञा सहितो विनाशब्दोऽविनाभावं वक्ति, **न तदस्ति विना यत्स्यान्मया भूतं चराचर**मितिवदिति सोदाहरणं न्यरूपि ॥

किं च न केवलं पदसमन्वयपक्षे वाक्यसमन्वयपक्षेऽपि **'यजमानः प्रस्तरः'** इत्यत्र परममुख्यार्थ एव भगवान्नारायण इति प्रत्यपादि । तेन दिगुदर्शनश्चाकारि ॥

नन्वर्थवादप्रामाण्यप्रकरणे प्रस्तूयतेऽयं विषयः । आद्यन्तं वाचनिकपदेन मुख्यामुख्यार्थावुभावपि स्वीक्रियेते । वाचनिकार्थादन्यो तात्पर्यार्थो नास्तीति च निराक्रियते । अतः **'वेदवाक्यस्य तु वाचनिकार्थं विना नैवान्यो युज्यते'** इत्यत्र अन्येति तात्पर्यार्थमेव ब्रूयात् । कथममुख्यार्थमिति व्याख्याति? सत्यम् । यदि श्रीजयतीर्थभिक्षुटीकामवलोकयसि अवश्यमयं सन्देह उदेति । परन्तु खण्डार्थचन्द्रिकां च यदि पठसि तर्हि निर्णेष्यसि । आद्यन्तमर्थवादप्रामाण्यप्रकरणे वाचनिकपदं मुख्यामुख्यार्थवाचकमिति व्याचख्यौ जयतीर्थभिक्षुः । खण्डार्थचन्द्रिकायां त्वान्तं वाचनिकमिति मुख्यार्थमाहेति व्याचख्यौ मम गुरुः । नाहमिदानीं प्रकरणं विवरीतुमारप्स्ये । चन्द्रिकैव स्वान्तमाह्लादयेदिति । **'रूढियोगौ विना नान्यः....'** इति ब्रह्मतर्कस्तु महायोगमहारूढिभ्यां विना

केवलो गौण्यर्थो वा लक्ष्यार्थो वा वेदे नास्तीति स्पष्टार्थ इति सर्वं चतुरस्रम् । सर्वमनोहारिणी चेयं मम गुर्वी खण्डार्थचन्द्रिका ॥

# खण्डार्थचन्द्रिका

१. माध्वाः खलु सर्वे सर्वमूलग्रन्थानधीयते । परन्तु नेदानीं सर्वत्र शुद्धः पाठ उपलभ्यते । एतादृश्यां विषमस्थितौ मम गुरुः शुद्धं प्राचीनपाठं प्रददौ । तेष्विदानीं खण्डार्थनिर्णयस्य खण्डार्थचन्द्रिकया शुद्धार्थमपि प्रददाविति ग्रन्थोऽयं प्रियो भवति ॥

'एतावानस्य महिमा ततो ज्यायांश्च पूरुषः' इति शुद्धपाठे आचार्यस्याद्भुतं वेदकौशलं यथाऽऽविर्भवति, न तथा प्रचलितपाठे । येन प्रचलितपाठेन भगवतो भाष्यकारस्याऽचार्यमध्वस्य एकमपि वौन्नत्यमाच्छादितं भवति, तादृशः प्रचलितः पाठः सर्वथा नाऽदर्तव्यो मध्वशिष्यैः । न खलु कोऽपि प्रेमास्पदानां पत्नीपुत्राणामौन्नत्यं घातयन्तं दुष्टं स्वस्थात्माऽद्रियते । दयते वा । यद्याद्रियेत अरिर्वेति सन्दिहानो भवति ॥

२. आचार्यमध्वः प्रतीकग्रहणेनापि कञ्चनापूर्वं विषयमाविर्भावयति ।

३. श्रुतिग्रहणानुपूर्व्यामपि कश्चनापूर्व आशयोऽभिव्यज्यते ।

४. प्रजापतेरार्षमित्येतावन्मात्रेणैव समग्रं सायणभाष्यं निराकृतं भवति ।

५. अपि च निरुक्तिप्रधानमिदं व्याख्यानम् । न व्याकरणप्रधानम् । न खलु सम्भवति प्रत्यक्षरस्य सार्थक्यं व्याकरणादरणे ।

६. **'न हि सदन्तरादसतश्चान्यत् सदसद्विलक्षणं प्रसिद्धम्'** इति वाक्येन विनाध्याहारेण सम्भवति शाब्दबोधेऽध्याहारोऽसङ्गतः । आवृत्त्यनुवृत्त्यनुषङ्गेभ्यः जघन्यो ह्यध्याहारः । किमित्यध्याहृत्य व्याचख्यौ श्रीजयतीर्थमुनिः?

७. **'आयोमन्याय मन्यवे'** इत्यादौ धातुवचनमात्रेणार्थोक्तिमात्रेण व्याकरणमाचिक्षेप । इत्येवमादयो बहवोंऽशाः दरीदृश्यन्ते । तेन प्रीत्याऽऽदरोऽपि वर्धते गुरौ चन्द्रिकायां च ॥

# आत्मनिवेदनम्

ननु सुधापठनपाठनरतानां परिव्राट्चक्रवर्तिनां तपस्वाध्यायशुश्रूषाकृष्णपूजारतानां मम गुरूणां श्रीविश्वेशतीर्थश्रीचरणानां शिष्योऽपि, गोविन्दाचार्याणां शिष्यत्वमात्रेण पूर्वाचार्यान् श्रीजयतीर्थपरिमळाचार्यप्रभृतीन् गुरुरिव (गोविन्दाचार्य इव) कथमवमन्यसे ? भ्रान्तोऽसि । उपन्यासश्रवणमात्रेण मम गुरुः पूर्वाचार्यनिन्दक इति मा निर्णैषीः । सहृदयतां संवत्सरसान्निध्यं विना यङ्कमपि पुरुषं तत्रतत्र दर्शनमात्रेण किंवदन्तीमात्रेण वा निर्णेतुं न शक्यम् । यदि निर्णिणीषति **'संवत्सरं संवत्स्यथ । यथाकामं प्रश्नान् पृच्छत'** ॥

पश्यत मम गुरोः पूर्वाचार्येष्वादरातिशयम् ।

पश्यत मम गुरोः शिष्यवात्सल्यम् ।

पश्यत मम गुरोः कारुण्यपूर्णहृदयम् ।

पश्यत मम गुरोः अनतिमानितामडम्भित्वं च ।

परन्त्वस्ति कश्चन क्लेशः । अङ्गीकरोमि ।

सा खलु वाचि क्षुरता । न केवलं क्षुरता । अपि त्वतिक्षुरता । न दुर्बलेन सोढुं शक्या । सत्यमाह जये भगवान् व्यासः–

**'नवनीतं हृदयं ब्राह्मणस्य वाचि क्षुरो निहितस्तीक्ष्णधारः ।**
**'तदुभयमेतद्विपरीतं क्षत्रियस्य वाङ्नवनीतं हृदयं तीक्ष्णधारम्'** इति ॥

अयङ्खलु मम गुरुः निष्ठुरोऽपि ब्रह्मनिष्ठ एव जिजीविषति जीवति च ।

सर्वमिदं समानं मम प्रथमगुरौ विश्वेशतीर्थश्रीचरणेऽपि । विना वाचि क्षुरताम् । अन्यदिदं मम जीवनोत्साहमेव ददाह– ब्रह्मनिष्ठ एव जिजीवेति, नेदानीं जीवतीति । अस्तु विधिं को वा नियच्छति ॥

विषयनिबन्धनेयं च वाचि क्षुरता मम द्वितीयगुरौ । न व्यक्तिनिबन्धना । अहमेव साक्षी । अन्तेवासी खल्वहम् ॥

मास्तु संवत्सरवासः । पुरोवाकं वा पठत । मा निन्दत मम गुरुम् । 'नहि निन्दनेन निन्द्यो ज्ञानी दुष्यति । अपितु निन्दक एव भ्रश्यति' इति हि संस्कारः ॥

न गुरुरेवावमन्यते, क्वाहमल्पश्शिष्यः । अहं खलु प्रतिदिनमिदानीमपि गुरुं विश्वेशतीर्थं स्मृत्वा पूजायां सुधां पठित्वा श्रीजयतीर्थमुनये मङ्गलनीराजनं च समर्पयामि । विचारमात्रं नागौरवं प्रकटयतीति भावयामि । गृहे पितरावपि विमृशामः । गुरुकुले गुरुमपि । न तावता तिरस्कुर्मः । अपि तु सगौरवं तेभ्यो जीवं समर्पयामः ॥

इदानीमपि क्वचित्क्वचिद् किमहं पूर्वाचार्याणां हार्दमवगन्तुमशक्तोऽस्मि । आहो व्याहत-भाषिणस्ते । अथ पाश्चात्यैः कैश्चित् प्रक्षिप्तमिति सन्देग्धि मे मनः । सत्यम् । सशंयपिशाचः मम स्कन्धमास्कन्दते । नाहं मम गुरुरिव समधिगतसमस्ततत्वशास्त्रः ।

स्पृष्टं करेण विषमप्यमृताय दृष्टम् यस्योदयः स भगवान् यदु राति किञ्चित् ।
तद् भेषजं गदवतां प्रतिक्लृप्तमायुर्वेदे सुसिद्धममुनेत्यविचार्यमेतत् ॥

इति हि पण्डिताचार्यः स्वानुभवं प्रकटयामास । तादृशेन करकमलेन मां च स्पृशान्त्विति शिरः प्रघटय्य सम्प्रार्थये ॥

इति श्रीविश्वेशतीर्थ-श्रीगोविन्दाचार्यान्तेवासी

**अनिलशर्मा**



# खण्डार्थनिर्ण्णयोदाहृत-प्रमाणानामनुक्रमणी

| | |
|---|---|
| अथ सूददोहाः प्राणो वै सूददोहाः | ऐत.आ. |
| अधा ते विष्णो विदुषा चिदर्द्ध्यः | ऋग्वेदः |
| अद्भुतत्वं हरेर्वक्ति | शब्दतत्वम् |
| अनवस्थानिवृत्त्यर्त्थं | ब्रह्मतर्कः |
| अन्तर्ग्गतं बहिर्ग्गतं च | शब्दनिर्ण्णयः |
| अल्पाक्षरेण शक्येऽपि | शब्दनिर्ण्णयः |
| अशेषकर्म्मपूगोऽपि | कर्म्मविवेकः |
| आ मामेतु मघम् । | — |
| इति गुह्यतमं शास्त्र- | भगवद्गीता |
| इन्द्र एकं सूर्य्य एकं जजान | ऋग्वेदः |
| इन्द्रो वा एताभिर्म्महानात्मानं | ऐ.ब्रा. |
| इष्टापूर्त्तं मन्यमाना वरिष्ठं | आथ.उप. |
| उत्तमः पुरुषस्त्वन्यः | भगवद्गीता |
| ऋक्षु संसृज्यमानासु | प्रवृत्तम् |
| एकविंशति दिव्यानि | ,, |
| एको देवः सर्वभूतेषु गूढः | श्वेताश्वतरोपनिषत् |
| एतावानस्य महिमा | पुरुषसूक्तम् |
| एष उ एव दाश्वान् य एनमेवं वेद | — |
| एहि विष्णो न मे | पाद्मपुराणम् |
| ओ अतिशये | प्राचीनं व्याकरणसूत्रम् |
| ओतमस्मिन् जगद् यस्मा- | मान्यसंहिता |
| कर्तृत्वात् सगुणं ब्रह्म | भागवतम् |
| कविर्य्यः पुत्रः स इमा चिकेत | ऐत.आ. |
| कुहकं चेन्द्रजालं च | वाराहपुराणम् |
| गजबृंहितमप्येवं | शब्दतत्वम् |
| गतश्रियः श्रियोऽहानिं | स्वाद्ध्यायतत्वम् |
| गुणतस्तद्विभागो वा | पाद्मपुराणम् |
| चतुर्भिः साकं नवतिं च | ऋग्वेदः |
| जीवदेहं परित्यज्य | मान्यसंहिता |
| ज्ञानपूर्ण्णं विधातारं | प्रवृत्तम् |
| त एव चेन्द्रियात्मानः | प्रकाशसंहिता |
| तत्तन्मुख्याविरोधेन | ब्रह्मतर्कः |

| | |
|---|---|
| तत्प्रसादेन मुक्तस्य | प्रवृत्तम् |
| तद् विज्ञानेन परिपश्यन्ति | आथ.उप. |
| तपस्विनो दानपरा यशस्विनो- | भारतम् |
| तमेतं जगदाधारं | मान्यसंहिता |
| तमेवं विद्वानमृत इह भवति | ऐ.आ. |
| तं वा एतं मखवन्तं सन्तं | — |
| ता वा एताः सर्वा ऋचः सर्वे | महैतरयोप. |
| तेषामहं समुद्धर्त्ता | भगवद्गीता |
| तेभिरिन्द्रं चोदय दातवे मघम् | ऋग्वेदः |
| त्रिलोकगेन हरिणा | प्रवृत्तम् |
| त्रीणि पदा निहिता गुहासु | शुक्लयजु. |
| त्रैविद्या मां सोमपाः पूतपापाः | भगवद्गीता |
| त्र्यृचास्तिस्रो महानाम्न्यः | ऋक्संहिता |
| | |
| दध्नो मथनशब्दश्च | शब्दतत्वम् |
| दिव्यो ह्यमूर्त्तः पुरुषः | आथर्वणोपनिषत् |
| दूरेण ह्यवरं कर्म्म | भगवद्गीता |
| देहदेहिविभागश्च | पाद्मपुराणम् |
| द्यौर्वाव विद्युत् तत्पतिं वायु- | — |
| द्वाविमौ पुरुषौ लोके | भगवद्गीता |
| | |
| न ते विष्णो जायमानो- | ऋग्वेदः |
| नदीसमुद्रघोषाश्च | शब्दतत्वम् |
| न देवा यष्टिमादाय | भारतम् |
| न बुद्धिभेदं जनयेद- | भगवद्गीता |
| नाकस्य पृष्ठे ते सुकृतेऽनु भूत्वा | आथ.उप. |
| नान्यः पन्था अयनाय विद्यते | तै.आर. |
| नैष्कर्म्यमप्यच्युतभाववर्ज्जितं | भागवतम् |
| | |
| परो मात्रया तन्वा वृधान | ऋग्वेदः |
| परं भावमजानन्तो- | भगवद्गीता |
| पादान् व्यवधाव | आश्वलायनश्रौतसूत्रम् |
| पापानां व्यतिषक्तत्वाद् | स्वाद्ध्यायतत्वम् |
| पूर्ण्णमदः पूर्ण्णमिदं | बृहदारण्यकोप. |
| प्रजा वै वाजः | महैतरेयोप. |
| प्रत्युद्गमप्रश्रयणाभिवादनम् | भागवतम् |
| प्रथमा या महानाम्नी | ऋक्संहिता |
| | |
| भूतादिभूतोऽम्बुनिधानमद्ध्ये | वैहायससंहिता |
| | |
| मनआदीन्द्रियाणां तु | प्रकाशसंहिता |
| मन्मना भव मद्भक्तो- | भगवद्गीता |
| मयि सर्वाणि कर्म्माणि | ,, |
| महामत्रं जलाद्यैश्च | शब्दतत्वम् |
| महानाम्नीनाम् | आश्वलायनश्रौतसूत्रम् |
| मुख्यात्र्थानां च सर्वेषां | ब्रह्मतर्कः |
| | |
| यदेव विद्यया करोति | छन्दोगोपनि. |
| यमेवैष वृणुते तेन लभ्य- | काठकोप. |
| यः सर्वज्ञः सर्वविद्- | अथार्थर्वणोप. |
| यस्तद् वेद स पितुष्पिताऽसत् | शुक्लयजुर्वेदः |

| | |
|---|---|
| ये त्वेतदभ्यसूयन्तो- | भगवद्गीता |
| ये मे मतमिदं नित्य- | ,, |
| यस्मात् क्षरमतीतोऽहम् | ,, |
| यो नः पिता जनिता | ऋग्वेदः |
| यो मामेवमसम्मूढो- | भगवद्गीता |
| रूढियोगौ विना कश्चित् | ब्रह्मतर्कः |
| वानात् सूतेर्द्देवनाद् वासुदेवो- | सौकरायणश्रुतिः |
| विज्ञानमानन्दं ब्रह्म रातिर्द्दातुः | बृहदारण्यकोप. |
| विनिश्चिते तु संवादे | शब्दनिर्णयः |
| विलोमः शत्रुजयकृत् | प्रवृत्तम् |
| विष्णोर्न्नु कं वीर्य्याणि प्रवोचम् | ऋग्वेदः |
| शमलं पापमुद्दिष्टं | शब्दनिर्ण्णयः |
| श्रेयान् द्रव्यमयाद्- | भगवद्गीता |
| सत्यं ज्ञानमनन्तं ब्रह्म | तैत्तिरीयोपनिषत् |
| सदेहमानिहरये | व्याससमृतिः |
| सदृशं सदृशस्यैव | स्वाद्ध्यायतत्वम् |
| सद्देहः सुखगन्धश्च | — |
| समीपतो दूरतो ह्मम् | पाद्मपुराणम् |
| समीपे दूरतश्चैव | स्कान्दपुराणम् |
| स मेन्द्रो मेधया स्पृणोतु | तैत्तिरीयोपनिषत् |
| सर्वगुह्यतमं भूयः | भगवद्गीता |
| सर्वनामा सर्वगन्धः सर्वरसः | छन्दोगश्रुतिः |
| संश्लेषादोदनं कर्म्म | व्याससंहिता |
| साक्षी चेता केवलो निर्ग्गुणश्च | श्वेताश्वतरोपनिषत् |
| स्त्रियः सतीस्ताँउ मे पुंस आहुः | तैत्तिरीयारण्यकम् |
| स्वतो मुख्यविरोधे तु | ब्रह्मतर्कः |
| स्वाप्ययसम्पत्त्योरन्यतरापेक्ष- | ब्रह्मसूत्रम् |

—०—

## अपूर्वो धातुनिर्द्देशः

| | | | |
|---|---|---|---|
| १. तक निर्म्माणे | 'तक हसने' (सहने) | इति | पाणिनीयाः ॥ |
| २. धिनु पुष्टौ | 'धिवि प्रीणने' | ,, | ,, |
| ३. फण विस्तारे | 'फण गतौ' | ,, | ,, |
| ४. वश इच्छायाम् | 'वश कान्तौ । कान्तिरिच्छा' | ,, | ,, |

—०—

# तारतम्यमीमांसा

**नत्वा नारायणं देवं मध्वं मूलगुरुं तथा ।**
**प्रणीयते तारतम्यमीमांसा हरितुष्टये ।।**

विष्णोः सर्वोत्तमत्वं वायोश्च जीवोत्तमत्वं न सम्यगवगम्यते विना तारतम्यमीमांसाम् । विष्णुभक्तिश्च सर्वाधिका न देवतासु परिवारभूतासु तारतम्यपरिज्ञप्तिं विना शक्यमनुसन्धातुम् । तत इयं तारतम्यमीमांसा प्रस्तूयते–

१. परमपुरुषो नारायणः । गुणतो देशतः कालतः शक्तितश्चानन्तः ।

**[मत्स्यकूर्मक्रोडसिंहवटुभार्गवराघवाः ।**
**कृष्णबुद्धौ कल्किदत्तहयशीर्षैतरेयकाः ।।**

**पाराशर्यश्च कपिलो वैकुण्ठो वृषभस्तथा ।**
**यज्ञो धन्वन्तरिश्चैव स्त्रीरूपस्तापसो मनुः ।।**

**नारायणो हरिः कृष्ण उपेन्द्राः सर्व एव च ।**
**एवमाद्या हरेः साक्षात् प्रादुर्भावाः प्रकीर्तिताः ।।]**

२. परा प्रकृतिर्लक्ष्मीः । नारायणादनन्तांशावरा ।

**[श्रीर्भूर्दुर्गाऽम्भ्रिणी ह्रीश्च महालक्ष्मीश्च दक्षिणा ।**
**सीता जयन्ती सत्या च रुग्मिणीत्यादिभेदिता ।।]**

३.हिरण्यगर्भः । मुख्यप्राणश्च । लक्ष्म्याः कोटिगुणावरौ ।

**[प्राणः सूत्रं महान् ब्रह्मा चित्तं वायुर्बलं धृतिः ।**
**स्थितिर्योगश्च वैराग्यं ज्ञानं प्रज्ञा स्मृतिः सुखम् ।।**

मेधा मुक्तिर्विष्णुभक्तिरादिगोपो महाप्रभुः ।
ऋजुः सुमानो विज्ञाता महाध्याता महागुरुः ॥

हनूमान् भीम आनन्द इत्यादिबहुरूपिणः ।
हिरण्यगर्भा येऽतीता ये भाव्या यश्च वर्तते ॥]

४. हिरण्यगर्भपत्नी सरस्वती । मुख्यप्राणपत्नी भारती च । ब्रह्मवायुभ्यां शतगुणावरे ।

[सरस्वती च गायत्री श्रद्धाऽऽद्या प्रीतिरेव च ।
सर्ववेदात्मिका बुद्धिरनुभूतिः सुखात्मिका ॥

गुरुभक्तिर्हरौ प्रीतिः सर्वमन्त्रात्मिका भुजिः ।
शिवकन्येन्द्रसेना च द्रौपदी काशिजा तथा ।
चन्द्रेत्यादिस्वरूपा यास्तेभ्यः शतगुणावराः ॥]

५. गरुडः । शेषः । रुद्रश्च [एकादशरुद्रेषु यः प्रधानः] । सरस्वतीभारतीभ्यां शतगुणावराः ।

[शेषः सदाशिवश्चोर्ध्वस्तपोऽहङ्कार एव च ।
नरोऽवटो लक्ष्मणश्च रौहिणेयः शुकस्तथा ॥

सद्योजातो वामदेवश्चाघोरस्तत्पुमानपि ।
दुर्वासा द्रौणिरौर्वश्च जैगीषव्यादिरूपकः ॥]

६. विष्णोः कृष्णावतारे षण्महिष्यो नीला, भद्रा, मित्रविन्दा, काळिन्दी, लक्षणा, जाम्बवती च । [आसु जाम्बवती प्रधाना । लक्ष्म्या विशेषावेशदशायां शेषतुल्या ।] गरुडशेषरुद्रेभ्यः पञ्चगुणावराः ।

७. गरुडपत्नी सुपर्णी । शेषपत्नी वारुणी । रुद्रपत्नी पार्वती च । गरुडशेषरुद्रेभ्यो दशगुणावराः ।

८. पुरन्दरः । कामश्च । सुपर्णीवारुणीपार्वतीभ्यो दशगुणावराः ।

[वाली गाधिर्विकुक्षिश्च पार्थ इन्द्रः पुरन्दरः ।
सुदर्शनश्च भरतः प्रद्युम्नः स्कन्द एव च ।
सनत्कुमारः कामश्चेत्येक एव व्यवस्थितः ॥]

९. शरीरमानी अहम्प्राणः [४९मरुत्सु प्रधानः]। पुरन्दरकामाभ्यां दशगुणावरः ।

१०. पुरन्दरपत्नी शची । कामपत्नी रतिः । कामपुत्रोऽनिरुद्धः । बृहस्पतिः । स्वायम्भुवमनुः । दक्षप्रजापतिश्च । अहम्प्राणाद् दशगुणावराः ।

११. स्पर्शमानी प्रवहः [४९ मरुत्सु द्वितीयः] । अनिरुद्धादिभिः पञ्चगुणावरः ।

१२. चन्द्रः । सूर्यः । सूर्यपुत्रो यमः । स्वायम्भुवमनुपत्नी शतरूपा च । [द्वादशस्वादित्येषु सूर्यस्तृतीयः । तत्र प्रथमो विष्णुर्वामनोऽदित्यां जातः । इन्द्रानुजतया जात इति तमुपेन्द्रमाचक्षते । द्वितीयोऽष्टमकक्ष्यागतः पुरन्दराख्य इन्द्रोऽदित्यां पूर्वजातः ।] एते प्रवहाद् द्विगुणावराः । अनिरुद्धादिभ्यो दशगुणावराः ।

१३. वरुणः [द्वादशस्वादित्येषु चतुर्थः] ।

१४. नारदः ।

१५. अग्निः [अष्टवसुषु प्रधानः] । वरुणपुत्रो भृगुमुनिः । दक्षप्रजापतिपत्नी स्वायम्भुवमनुपुत्री प्रसूतिश्च । एते चन्द्रादिभ्यो दशगुणावराः ।

१६. वैवस्वतमनुः । विश्वामित्रः । महर्षयः सप्त पूर्वे– मरीचिः, अत्रिः, अङ्गिराः, पुलस्त्यः, पुलहः, क्रतुः, वसिष्ठश्चेति ।

१७. मित्रः [द्वादशस्वादित्येषु पञ्चमः] । निरृतिः । बृहस्पतिपत्नी तारा । प्रवहवायुपत्नी प्रावही च ।

१८. विघ्नाधिपतिर्गणपतिर्भूताकाशमानी । धनपतिः कुबेरः । वायुजो विष्वक्सेनः । सूर्यजावश्विनौ नासत्यदस्रौ नाम । प्रधानवसुमग्निमृते सप्तान्ये वसवः– द्रोणः, प्राणः, ध्रुवः, अर्कः, दोषः, वस्तुः, विभावसुश्चेति । [वसूनामपि नामान्तराणि पठ्यन्ते । वस्तुरेव द्युवसुः, यो भीष्मो बभूव ।] उक्तान् पञ्च वक्ष्यमाणं चैकं विहाय षडादित्याः– अर्यमा, पूषा, त्वष्टा, सविता, भगः, धाता चेति । [आदित्यानामपि बहुधा नामानि पठ्यन्तेऽन्यान्यग्रन्थेषु । बहुनामानो हि देवाः ।] दश विश्वेदेवाः– क्रतुः, दक्षः,सवः, सत्यः,कामः, कालः, धुरिः, लोचनः, पुरूरवः, आर्द्रवश्चेति । एकादशसु रुद्रेषु प्रधानं विहायान्ये दश– रैवतः, ओजः, भवः, भीमः, वामः, उग्रः, वृषाकपिः, अजैकपात्, अहिर्बुध्निः, विरूपाक्षश्चेति । [रुद्राणामपि नामान्तराण्यन्यत्र पठ्यन्ते ।] एकोनपञ्चाशन्मरुत्सु अहम्प्राणं प्रवहं च विहायावशिष्टाः ४७ मरुतः–प्राणः,अपानः,व्यानः,उदानः, समानः, नागः,कूर्मः, कृकळः, देवदत्तः, धनञ्जयः, आवहः, उद्वहः, परावहः, विवहः, संवहः, शम्भुः, शङ्कुः, कलः, श्वासः, अनलः, अनिलः, प्रतिभः, कुमुदः, कान्तः, शुचिः, श्वेतः, अजितः, गुरुः, सञ्ज्ञः,

प्रवर्तकः, कालः, दक्षः, सोम्यः, कपिः, जडः, मण्डूकः, सन्ततः, सिद्धः, रक्तः, कृष्णः, पिकः, शुकः, यतिः, भीमः, हनुः, पिङ्गः, कम्पनश्चेति । [मरुतां बहुविधानि नामानि पठ्यन्ते । नैकत्राप्येकरूपता । तत्रायमेकः प्रकारः प्रतनैरुद्धृतः] । पितृपतिष्वेकः कव्यवाहनामाऽग्निः । [त्रिषु प्रधानपितृपतिषु द्वौ यमसोमौ द्वादशकक्ष्यायां गतौ] । ऋभवस्त्रयः– ऋभुः, विभ्वा, वाजश्चेति । द्यावापृथिवीमानिन्यौ च दैव्यौ ।

१९. प्रधानवायुपुत्रो भूतवायुमानी मरीचिः[१] । प्रधानाग्निपुत्रो भूताग्निमानी पावकः । पादमानिनाविन्द्रपुत्रौ यज्ञनामा जयन्तः, शम्भुश्च । दैत्यगुरुः शुक्रः । तत्सोदरश्च्यवनः । बृहस्पतिसोदर उचथ्यः । उक्तं सनत्कुमारं विहायान्ये त्रयो ब्रह्मणो मानसपुत्रा ऋषयः– सनकः, सनन्दनः, सनातनश्च । सप्त चान्य ऊर्ध्व-रेतसः । एतान् दश, पूर्वोक्तान् सनत्कुमारादींश्च दश विहायान्ये काश्यपाद्या अशीतिर्गृहस्था ऋषयः । भाविमन्वन्तराणामिन्द्राः सप्त– बलिः, अद्भुतः, शम्भुः, विधृतिः, ऋतधामा, दिवस्पतिः, शुचिश्च । [अतीतेषु मन्वन्तरेषु प्रथमे स्वायम्भुवेऽन्तरे यज्ञनामा विष्णुरेवेन्द्रः । द्वितीये स्वारोचिषे रोचननामा वायुः । तृतीये चौत्तमे सत्यजिन्नामा यम इन्द्रः । चतुर्थे तापसे पञ्चमे च रैवते त्रिशिखविभुनामानौ नासत्यदस्रावश्विनाविन्द्रौ । षष्ठे चाक्षुषे मन्द्रद्युम्नः, स एव च सप्तमे वैवस्वतेऽन्तरे पुरन्दरनामेन्द्रः । तमेतमष्टमकक्ष्यागतमिन्द्रमाचक्षते ।] त्रीनुक्तान् विहायावशिष्टा एकादश मनवः– स्वारोचिषः, उत्तमः, रैवतः, चाक्षुषः, सावर्णिः, दक्षसावर्णिः, ब्रह्मसावर्णिः, धर्मसावर्णिः, रुद्रसावर्णिः, देवसावर्णिः, इन्द्रसावर्णिश्चेति । [प्रथमः स्वायम्भुवो मनुर्दशमकक्ष्यायां गतः । चतुर्थस्तापसो मनुः स्वयं विष्णुरेव । सप्तमो वैवस्वतः षोडश्यां कक्ष्यायां गतः । अपरे त्वेकादशात्र ।] दशसु पितृपतिषु पूर्वोक्तान् यमसोमकव्य-वाहान् विहायान्ये सप्त । अष्टौ विष्णोर्द्वारपालकाः– जयः, विजयः, चण्डः, प्रचण्डः, नन्दः, सुनन्दः, कुमुदः, कुमुदेक्षणश्चेति । अष्टौ प्रधानगन्धर्वाः । अष्टौ प्रधानाप्सरसः । विश्वकर्मा । चित्रगुप्तः । सूर्यसारथि-ररुणः । नन्दी । ऐरावतः । सुरभिः । कल्पवृक्षादिदेवताः । अहोरात्रदेवते । पूर्णिमामावास्यादेवते । अभिजिद्विषुवद्देवते । ओषधिवनस्पत्यभिमानिनः । हविःकपालाद्यभिमानिनश्च । कर्मणा देवत्वं गताः शतं राजर्षयश्च– पृथुः, कार्तवीर्यः, शशबिन्दुः, प्रियव्रतः, उत्तानपादः, मान्धाता, गयः, ककुत्स्थः, नहुषः, अम्बरीषः, आर्षभो भरतः, दौःषन्तिर्भरतः, मरुत्तः, हरिश्चन्द्रः, प्रह्लादः, परीक्षिदाद्याश्च । त एतेऽग्नेः शतगुणावराः ।

---

१. मरीचिं पूर्वे विद्वांस एकान्नविंश्यां कक्ष्यायां पठन्ति । अयं भूतवायुमानीति गीतातात्पर्ये स्थितम् । आकाशमानी भूतवायुमानी च समानाविति चैतरेयभाष्यादवगम्यते । तेन मरीचिरेकान्नविंश्यां पठितेषु प्रधानः, अष्टादश्यां कक्ष्यायां पठिताद् गणपतेः किञ्चिन्न्यूनः । प्रायस्तत्समान इति ज्ञायते ।

२०. द्वादशादित्येषु चरमः पर्जन्यः । अनिरुद्धभार्या उषा विराडाख्या । चन्द्रभार्या रोहिणी । सूर्यभार्या सञ्ज्ञा । यमभार्या श्यामळा । वरुणभार्या च गङ्गा । एकान्नविंशकक्ष्यापठितेभ्यो मरीच्यादिभ्यो द्विगुणावराः ।

२१. उक्तवक्ष्यमाणेभ्योऽन्ये अनाख्याताः देवाः । [केचिन्नैतां कक्ष्यां परिगणयन्ति] ।

२२. अग्निभार्या वाङ्मानिनी स्वाहा । एकान्नविंशकक्ष्यापठितेभ्यः पञ्चगुणावरा ।

२३. जलमानी बुधः । स्वाहातो द्विगुणावरः ।

२४. अश्विभार्या नाममानिनी उषाः । स्वाहातो दशगुणावरा ।

२५. कुजः[१] ।

२६. पृथिवीमानी सूर्यतनयः शनिः ।

२७. कर्ममानी वरुणपुत्रः पुष्करः ।

२८. काश्यपभार्याऽदितिः, या देवकी बभूव । द्रोणाख्यवसुभार्या धरा, या यशोदा बभूव ।

२९. कृष्णपत्नीत्वेन जाता अग्निपुत्राः १६,१०० सङ्ख्याकाः । आसु त्वष्टृपुत्री कशेरुः किञ्चिदधिका ।

३०. अनाख्याता आजानजा देवाः । शतं गन्धर्वाः । शतमप्सरसः । [शतं कोटीनामृषयः सन्ति । तत्र पूर्वोक्तमृषीणां शतकं विहायावशिष्टाः] ९९,९९,९९,९०० ऋषयः । एकान्नविंशकक्ष्यापठितेभ्यः कर्मदेवेभ्यः शतगुणावराः ।

३१. पूर्वोक्तानां सप्तानां पितृपतीनां सन्ततिभूताश्चिरपितरः । आजानदेवेभ्यः शतगुणावराः ।

३२. पूर्वोक्तं गन्धर्वाणामप्सरसां च शतमष्टोत्तरं विहायावशिष्टा गन्धर्वा अप्सरसश्च । चिरपितृभ्यः शतगुणावराः ।

३३. मनुष्यगन्धर्वाः । गन्धर्वेभ्यः शतगुणावराः ।

३४. चक्रवर्तिनः । मनुष्यगन्धर्वेभ्यः शतगुणावराः ।

३५. नरोत्तमाश्चतुर्वर्णगताः । चक्रवर्तिभ्यः शतगुणावराः ।



१. अयमप्येकोनविंशयां कक्ष्यायां पठनीय इत्येके ।

एतेषु च विशिष्योपनिषदुक्ता नामादिमारुतान्ता यथा–

| | | | |
|---|---|---|---|
| १. नाममानिनी उषाः | [२४] | ८. बलमानी प्रवहः | [११] |
| २. वाङ्मानिनी स्वाहा | [२२] | ९. अन्नमानी अनिरुद्धः | [१०] |
| ३. मनोमानी पर्जन्यः | [२०] | १०. अम्मानी अहम्प्राणः | [९] |
| ४. सङ्कल्पमानी मित्रः | [१७] | ११. तेजोमानी पुरन्दरः | [८] |
| ५. चित्तमानी अग्निः | [१५] | १२. आकाशमानिनी उमा | [७] |
| ६. ध्यानमानी वरुणः | [१३] | १३. स्थिरस्मृतिमानी शिवः | [५] |
| ७. विज्ञानमानी चन्द्रः | [१२] | १४. आशामानिनी भारती | [४] |

१५. जीवमानी मुख्यप्राणः [३]

[बलमिति ज्ञानबलं देहबलं च । तदुभयमानी भूतवायुः । अन्नमिति ज्ञानरतिरूपं ज्ञानान्नं बाह्यमन्नं च । तदुभयमानी अनिरुद्धः । आप इति ज्ञानतृप्तिर्बाह्यजलं च । तदुभयमानी अहम्प्राणः । तेज इति मानसं प्रतिभानं बाह्यं च । तदुभयमानी पुरन्दरः । आकाश इति स्थिरा प्रतिभा भूताकाशश्च । तदुभयमानिन्युमा । ततः स्थिरस्मृतिमानी शिवः । तत आशाया अपरोक्षानन्दस्य मानिन्यौ सरस्वतीभारत्यौ । ततश्च जीवकलामानी मोक्षानन्दमानी च प्राणात्मा हिरण्यगर्भ इति ।]

तथाहि श्रुतिः– '**अथातः सम्भूतिः । परमाद् विद्या विद्यायाः प्राणः प्राणाच्छ्रद्धा श्रद्धायाः शिवः शिवाद् बुद्धिर्बुद्धेरिन्द्र इन्द्रात् तैजसप्राणस्तैजसप्राणादनिरुद्धोऽनिरुद्धात् स्पर्शवातः स्पर्शवातात् सोमः सोमाद् वरुणो वरुणादग्निरग्नेर्मित्रो मित्रात् पर्जन्यः पर्जन्यात् स्वाहा स्वाहाया उषा जायते**' इति ।

**इमामाचार्यगोविन्दश्चक्रे चक्रायुधप्रियाम् ।**
**तारतम्यस्य मीमांसां विनेयजनवाञ्छया ॥**

**इत्याचार्यगोविन्दस्य कृतिषु**
**तारतम्यमीमांसा समाप्ता**

—०—

विष्णुः सर्वोत्तमोऽथाखिल-पद-गदितः सर्व-वेदाभिधेयः
श्रीनाथः सद्गुणाब्धिर्जगदुदय-लयाद्यष्टकर्ताऽन्तरात्मा ।
ब्रह्माद्या उच्चनीचा हरि-चरण-रताः पञ्चभेदः प्रपञ्चः
सत्यः स्त्री-पुंसभावः सततमनपगा योग्यता च स्वभावः ॥

जीवास्त्रैगुण्य-भाजः परम-गति-युजो नित्य-बद्धास्तमो-गाः
सत्वोद्रेकात्तु मोक्षे निज-सुख-नियतिः साधनं ज्ञान-भक्ती ।
इष्टं दैवं मुकुन्दः परम-गुरुरसौ मारुतिर्मध्व-नामा
विश्वं ताभ्यामुभाभ्यां नियमितमखिलं चेत्ययं तत्ववादः ॥

इमामाचार्य-गोविन्दो विनेय-जन-वाञ्छया ।
वितेने तत्व-वादस्य प्रमेय-नव-मालिकाम् ॥

## ‘बन्नञ्जे’ आचार्येण विरचिताः
## संशोध्य सम्पादिताश्च संस्कृतग्रन्थाः

**सम्पादिताः—**

१. **सर्वमूलग्रन्थाः***  अखिलभारतमाध्वमहाण्डलम्, १९६९

(इदमुपज्ञं हृषीकेशतीर्थीयमूलकोशा-
नुसारेण शोधितः शुद्धपाठः)

२. **वादरत्नावली***  पडुमुन्नूरुनारायणाचार्यसन्मानसमितिः, उडुपि,
(विष्णुदासाचार्यकृता प्रथमं
सशोध्य मुद्रिता)

३. **आनन्दमाला***  दशप्रमतिप्रकाशनसमिति, उडुपि,१९७०
वामनपण्डितकृता सङ्ग्रहभाष्य-  १०/
टीका प्रथमं संशोध्य मुद्रिता

४. **सङ्ग्रहरामायणम्** (मूलमात्रम्)  पेजावरमठः,उडुपि,२०१३
नारायणपण्डिताचार्यविरचितम् ।  ५००/-
(शुद्धः पाठः ।

५. **वायुस्तुतिः**  तत्वसंशोधनसंसत्, पलिमारुमठः,२०११

वेदात्मतीर्थकृतप्राचीनटीकासहिता  १००/-
बन्नञ्जेकृतटिप्पणीसहिता च ।

**६. महाभारततात्पर्यनिर्णयः*** तत्वसंशोधनसंसत्, पलिमारुमठः,२००९
(शोधितः मूलपाठः) १,५००/-
बन्नञ्जेरचिता विस्तृता टीका
तात्पर्यदीपिका च । (सम्पुटद्वयम्)

**७. महाभारततात्पर्यम्** तत्वसंशोधनसंसत्, पलिमारुमठः२-२००६
श्रीनरहरितीर्थीयव्याख्यया १००/-
तथा बन्नञ्जेभाष्यण च सहितम्

**८. तत्वप्रदीपिका** द्वैपायनप्रतिष्ठानम् ,२०१६
आनन्दतीर्थकृतस्य ब्रह्मसूत्रभाष्यस्य १,०००/-
टीका तच्छिष्यप्रवरत्रिविक्रमपण्डिताचार्यकृता
'बन्नञ्जे'-कृतया तात्पर्यचन्द्रिकाख्यया
टीकया सहिता
(प्रथमःपादः-प्रथमो भागः)

**९. उपनिषच्चन्द्रिका** ईशावास्यप्रतिष्ठानम्, उडुपि,२००२
आनन्दतीर्थकृतानामुपनिषद्-भाष्याणां ५००/-
प्राचीनटीका प्रथमं मुद्रिता वामनपण्डितकृता,
'बन्नञ्जे'कृता विस्तृतटीका उपनिषच्चन्द्रिका च ।
(तैत्तिरीयोपनिषदं बृहत्त्रयं च विहाय षडुपनिषदामपूर्वचिन्तम्)

**१० सङ्ग्रहरामायणम्** पेजावरमठः,उडुपि,२०१५
नारायणपण्डिताचार्यकृतं पौराणिकं १,५००/-
महाकाव्यम् । इदम्प्रथमतया संशोध्य मुद्रितया
श्रीविश्वपतितीर्थकृतया टीकया 'बन्नञ्जे'कृतया
सङ्ग्रहचन्द्रिकाख्यया टीकया च संवलितम् । (सम्पुटद्वयम्)

११. **सङ्ग्रहरामायणम् (मूलम्)** पेजावरमठः,उडुपि,२०१३, ५००/-

१२. **श्रीमध्वविजयः** ईशावास्यप्रतिष्ठानम्, उडुपि,२००३
**इदम्प्रथमतया मुद्रितया वेदाङ्गतीर्थकृतया** ८००/-
**टीकया बन्नञ्जेकृतया तत्वचन्द्रिकया च संवलितः ।**
**सहैव प्रमेयनवमालिका च । रघुवर्यकृतया टीकया**
**बन्नञ्जेकृतया सम्बन्धदीपिकया च सहिता ।**

१३. **श्रीमध्वविजयः (मूलम्)** द्वैपायनप्रतिष्ठानम् ,२०१७
५०/-

१४. **अस्यवामीयसूक्तम्** ईशावास्यप्रतिष्ठानम्, उडुपि,२०११
**बन्नञ्जेभाष्यसहितम्** ४०/-

१५. **प्राणाग्निसूक्तम्** तत्वसंशोधनसंसत्, पलिमारुमठः,२०११
**बन्नञ्जेभाष्यसहितम्**

१६. **चत्वारि सूक्तानि** तत्वसंशोधनसंसत्, पलिमारुमठः,२०१३
**बन्नञ्जेभाष्यसहितानि** ६०/-

१७. **चतुर्दश सूक्तानि** श्रीऐतरेयशोधप्रकाशपीठम् (भण्डारकेरिमठः)२०१४
**बन्नञ्जेभाष्यसहितानि** १५०/-

१८. **शतरुद्रीयम्** तत्वसंशोधनसंसत्, पलिमारुमठः,२०१६
**शाखान्तरीयपाठभेदसहितम्** २००/-
**बन्नञ्जेभाष्यसहितम्**

**१९. तापनीयोपनिषत्** द्वैपायनप्रतिष्ठानम्, २०१७
**बन्नञ्जेभाष्यभूषिता** १००/-

**२०. विष्णुसहस्रनामस्तोत्रम्** तत्वसंशोधनसंसत्, पलिमारुमठः,२०१०
**(नामचन्द्रिकयासहितम्)** १००/-
**बन्नञ्जेभाष्यसहितम्**

**२१. विष्णुसहस्रनामानि** ट पलिमारुमठः,१९८५
**(तद्व्याख्यनं च)** १००/-

**२२. आनन्दतीर्थकृतः जयन्तीकल्पः** द्वैपायनप्रतिष्ठानम् ,२०१६
**बन्नञ्जेकृतया विस्तृतटीकया सहितः** १००/-

**२३. ओन्तत्सत्प्रणवकल्पः** द्वैपायनप्रतिष्ठानम् ,२०१८
**बन्नञ्जेव्याख्यासवलितम्** १००/-

**२४. आनन्दतीर्थविरचितं दूषणत्रयम्** द्वैपायनप्रतिष्ठानम् ,२०१७
**(१) मायावाददूषणम्** १००/-
**(२) उपाधिदूषणम्**
**(३) मिथ्यात्वानुमानदूषणम्**
**बन्नञ्जेव्याख्यानसहितम्**

**२५. प्राणसूत्रं सभाष्यम्**
**बन्नञ्जेविरचितम्**

**२६. जयतीर्थस्तुतिः*** दशप्रमतिप्रतिष्ठानम्, बेङ्गळूरु,१९९५

**२७. कृष्णमाला ध्यानमाला** ईशावास्यप्रतिष्ठानम्, उडुपि,१९९८

२८. **मङ्गळाष्टकम्** ईशावास्यप्रतिष्ठानम्, उडुपि, १९९८
**श्रीराजराजेश्वरयतिविरचितम्** ४०/-
**बन्नञ्जेव्याख्यासहितम्**

२९. **पडुमुन्नूरुनारायणाचार्यः** कर्नाटकसंस्कृतविश्वविद्यालयः, २०१३
**बन्नञ्जेरचितं स्वपितुजीवनचरितम् ।** ५०/-

३०. **भारतीयमनःशास्त्रम्** कर्नाटकसंस्कृतविश्वविद्यालयः, २०११

३१. **दीक्षन्तभाषणम्** कर्नाटकसंस्कृतविश्वविद्यालयः, २०१२

३२. **प्रमेयनवमालिका*** बृहतीप्रकाशनम्, उडुपि, १९८६
श्रीरघुवर्यतीर्थविरचिता
सौरभप्रकाशिका च

३३ **नाकुहाडुगळु(कन्नडलिपि)** ईशावास्यप्रतिष्ठानम्, उडुपि, २००
**(नारायणपण्डितकृता गोविन्दस्तुतिः, पूर्णपोधस्तुतिश्च)** ६०/-
**(सत्यप्रियतीर्थविरचितश्रीजयतीर्थस्तुतिः)**
**(अप्पण्णाचार्यकृतश्रीराघवेन्द्रस्तुतिः)**

३४ **पञ्चसूक्तगळु (कन्नडलिपि)** ईशावास्यप्रतिष्ठानम्, उडुपि, १९९९
५०/-



---

* सम्प्रति न लभ्यते

**परिशिष्टभागाः बन्नञ्जे विरचिताः**

१. **बन्धमीमांसा**

बन्धचित्रैः सहिता

२. **छन्दोमीमांसा**

३. **काव्यमीमांसा**

४. **अलङ्कारमीमांसा**

५. **चित्रकाव्यमीमांसा**

६. **शासनमीमांसा**

७. **नाममीमांसा**

८. **तातरम्यमीमांसा**

९. **वैदिकच्छन्दोमीमांसा (उपनिषच्चन्द्रिका)**

१०. **प्रतनप्रयोगमीमांसा (माहाभारततात्पर्यनिर्णयः)**

अपाणिनीयानां प्रयोगाणां साधुत्वनिर्णयः

११. **शाकुन्तलसमीक्षा**

१२. **श्रीनरसिंहाष्टकम्**

(बन्नञ्जे गोविन्दाचार्यकृतम्)

१३. **तत्ववादस्य प्रमेयनवमालिका**

(बन्नञ्जे गोविन्दाचार्यकृता)

**एवमादयः प्रकटिताः । अत्र केचनाणुग्रन्था नोल्लिखिताः ।**

* * *

मुद्रणार्थं सिद्धाः कृतयः—

१. **विष्णुतत्वनिर्णयः**
   अपूर्वटीकाद्वयोपेतः ।
   (बन्नञ्जे रचितया व्याख्यया भूषितः)

२. **अनुव्याख्यानन्यायमालान्यायविवरणसम्बन्धदीपिका**
   शाङ्करपण्डितकृता
   (बन्नञ्जे रचितया व्याख्यया भूषिता)

३. **पवमानसूक्तम्**
   (बन्नञ्जे रचितया व्याख्यया भूषितम्)

४. **श्रीराजराजेश्वरयतिविरचितः रामसन्देशः**
   (बन्नञ्जेकृतकन्नडानुवादसहितः)



अपूर्वोऽयमनुपमस्य प्रबन्धराजः
खण्डार्थनिर्णयो नाम। सेतुबन्धोऽयं
ज्ञानकाण्डकर्म्मकाण्डयोः। चतुराम्नाय-
चतुरा विपश्चिन्मच्चर्चिका स्वयमत्र
प्रमाणम्। कर्म्मठानां चास्तरचर्चा-
विहरणोचितं चत्वरमिदम्।

जिज्ञासूनामखण्डार्थनिर्णयोऽयं
खण्डार्थानिर्णयो नाम। निर्म्मत्सराणां
चर्व्यपञ्जरमिदम्। रसायनं कर्म्म-
रसिकानाम्।

नहि तादृशमन्यं ग्रन्थतल्लजं
क्वापि पश्यामः शृणुमो वा य
ग्रन्थस्य विस्पर्द्धिष्यते। अपरस्तु
मतान्ध्यम्। उदयतां विवेकसूर्य्यः।
चक्षुरुन्मीलयन्तु सन्तः। प्रकामं
प्रकाशतामयं ग्रन्थराजः॥



बन्नञ्जेपदोपाह्वः
डा. गोविन्दपण्डिताचार्य्यः